स किरातैश्च चीनैश्च वृतः प्राग्ज्योतिषोऽभवत् ।
अन्यैश्च बहुभिर्योधैः सागरानूपवासिभिः ॥ १९
ततः स दिवसानष्टौ योधयित्वा धनंजयम् ।
प्रहसन्नब्रवीद्राजा संग्रामे विगतक्लमः ॥ २०
उपपन्नं महाबाहो त्वयि पाण्डवनन्दन ।
पाकशासनदायादे वीर्यमाहवशोभिनि ॥ २१
अहं सखा सुरेन्द्रस्य शक्रादनवमो रणे ।
न च शक्नोमि ते तात स्थातुं प्रमुखतो युधि ॥ २२
किमीप्सितं पाण्डवेय ब्रूहि किं करवाणि ते ।
यद्वक्ष्यसि महाबाहो तत्करिष्यामि पुत्रक ॥ २३

अर्जुन उवाच ।

कुरूणामृषभो राजा धर्मपुत्रो युधिष्ठिरः ।
तस्य पार्थिवतामीप्से करस्तस्मै प्रदीयताम् ॥ २४
भवान्पितृसखा चैव प्रीयमाणो मयापि च ।
ततो नाज्ञापयामि त्वां प्रीतिपूर्वं प्रदीयताम् ॥ २५

भगदत्त उवाच ।

कुन्तीमातर्यथा मे त्वं तथा राजा युधिष्ठिरः ।
सर्वमेतत्करिष्यामि किं चान्यत्करवाणि ते ॥ २६  C. 2. 1009 B. 2. 26. 16 K. 2. 27. 25

इति श्रीमहाभारते सभापर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

(before corr.) नीचै°; G1 योधै° (for चीनै°). G2 किरातैर्यवनैश्चापि. — $^{b}$) Dn1 D1 वृत्तः. G1 °षेश्वरः (for °षोऽभवत्). — $^{c}$) B6 S विविधैर् (for बहुभिर्). G1 वीरैः (for योधैः).

20 $^{b}$) M1 धनंजयः. — After 20$^{ab}$, G3 ins.:

272* चतुरङ्गबलैः सार्धं भगदत्तः पराजितः ।
पार्थसायकनुन्नस्तु विह्वलाङ्गो भृशातुरः ।

— $^{c}$) T1 G4.6 राजन् (for राजा). — $^{d}$) Ñ1 V1 B1.2.4.5 संग्राम- (for °मे). B1.4.5 Dn D2.4 G विगतक्लमं (G2 °ज्वरं).

21 K1.2 here write, and cancel 23$^{d}$; in K1 stanzas 21–23 are all written marg. *sec. m.* — $^{a}$) D3 उपपन्नो. — $^{b}$) V1 B D (except D6) त्वयि कौरवनंदन; S त्वय्येतत्पांडुनंदन (G4 तत्करिष्यामि पांडुनंदन, bracketed). — $^{c}$) Ś1 K1.2 °दायाद (for °दायादे). — $^{d}$) Ś1 °शोभनः; K1–3 °शालिनि (for °शोभिनि). M शिष्य आहवशोभिनः.

22 For K1 cf. v.l. 21. — $^{a}$) K4 Ñ1 V1 B5 D (except D1.2) महेंद्रस्य (for सुरेन्द्रस्य). — $^{b}$) Ñ1 V1 B D (except D6) G5 Cd अनवरो (for °वमो). — $^{c}$) B2.6 D1.2 transp. च and शक्नोमि. G1.2.6 M हि (for च). B4.5 Dn D3–5 न शक्या(B4 Dn2 °क्ष्या)मि च ते तात. — $^{d}$) K1 त्वयि (for स्थातुं). Ñ1 प्रतिमुखो. B1.3 रणे (for युधि).

23 For K1 cf. v.l. 21. — $^{a}$) B1.2.5 Dn त्वमीप्सितं; D3–5 अभी°. S तुष्टोस्मि तव शौ(G2 M वी)र्येण. — $^{b}$) G2 तव (for ब्रूहि). — $^{c}$) K1.2 D3 यद्वक्षसि. — $^{d}$) Ś1 भारत; S पांडव (for पुत्रक).

24 Ñ1 om. the ref. — $^{a}$) S प्रवरो (for ऋषभो). Ś1 राजन् (for राजा). — $^{b}$) = 1. 144. 13$^{b}$; 187. 20$^{b}$; 199. 9$^{b}$: 4. 63. 37$^{b}$; 67. 36$^{b}$; etc., etc. Ś1 K1–3 D6 कुंतीपुत्रो; Ñ1 S धर्मनित्यो. — After 24$^{ab}$, Ś1 Dn D3–5 ins.:

273* धर्मज्ञः सत्यसंधश्च यज्वा विपुलदक्षिणः ।
[ Ś1 यज्ञे (for यज्वा). ]

— $^{c}$) B4 तत्र. K2 ईप्सो; K3 D3 S (except G1.6) Cv ईप्सोः; K4 ईप्स्ये; D1 इच्छे. — $^{d}$) K3 B6 D1 करमस्मै; B3 Dn1 (and Cv? paraphrases तस्मै करं प्र°) करं तस्मै; T1 G3–5 करमद्य; G1.6 करस्तस्मात्; G2 करं तस्य; M करः साधु. G3 प्रदर्शितः.

25 K4 om. (hapl.) 25. — $^{a}$) B2.6 D1.2.6 पितृसखश्च; D2.5 G3 प्रियसखा. M1 चापि. K2 भगवान्पितृसखो चैव (sic). — $^{b}$) Ś1 ममापि च; D5m ममैव च; S मया (T1 G3.4 महा-) युधि (for मयापि च). V1 प्रीतिमानधिकं मयि. — $^{c}$) S अतो (for ततो). Dn1 [S]नुज्ञापयामि. M1 त्वा (for त्वां).

26 $^{a}$) D5m कुंतीपुत्र; S कुंतीसुत. V1 यथात्थ; G6 यदात्थ (for यथा मे). — $^{d}$) T1 किं चान्यं; G1.4–6 किं वान्यत्; M1 यद्वान्यत्. Ś1 K4 D6 यथा त्वं भाषसेनघ. — After 26, S ins.:

274* स तत्र सत्कृतस्तेन मासमुष्य धनंजयः ।
उदक्प्राच्यां विनिर्जित्य प्रायाद्रामगिरिं प्रति ।
ततो रामगिरिं जित्वा तथा भुवनपर्वतम् ।
अन्यानपि वशे चक्रे तरसा पाकशासनिः ।

[ Before line 1, G5 ins. वैशं°. — (L. 2) T1 रामपुरं; G5 कामपुरं; G6 कामगिरिं (for राम°). — (L. 3) G1

# २४

C. 2. 1011
B. 2. 27. 2
K. 2. 28. 2

वैशंपायन उवाच ।

तं विजित्य महाबाहुः कुन्तीपुत्रो धनंजयः ।
प्रययावुत्तरां तस्माद्दिशं धनदपालिताम् ॥ १
अन्तर्गिरिं च कौन्तेयस्तथैव च बहिर्गिरिम् ।
तथोपरिगिरिं चैव विजिग्ये पुरुषर्षभः ॥ २
विजित्य पर्वतान्सर्वान्ये च तत्र नराधिपाः ।
तान्वशे स्थापयित्वा स रत्नान्यादाय सर्वशः ॥ ३
तैरेव सहितः सर्वैरनुरज्य च तान्नृपान् ।
कुलूतवासिनं राजन्बृहन्तमुपजग्मिवान् ॥ ४
मृदङ्गवरनादेन रथनेमिस्वनेन च ।
हस्तिनां च निनादेन कम्पयन्वसुधामिमाम् ॥ ५
ततो बृहन्तस्तरुणो बलेन चतुरङ्गिणा ।
निष्क्रम्य नगरात्तस्माद्योधयामास पाण्डवम् ॥ ६
सुमहान्संनिपातोऽभूद्धनंजयबृहन्तयोः ।
न शशाक बृहन्तस्तु सोढुं पाण्डवविक्रमम् ॥ ७
सोऽविषह्यतमं ज्ञात्वा कौन्तेयं पर्वतेश्वरः ।

नामगिरिं; $G_{5.6}$ राज°. $T_1$ $G_{5.6}$ गत्वा (for जित्वा). — (L. 4) $T_1$ $G_{4.5}$ $M_2$ अनाविलं; $G_6$ अरा° (for अन्यानपि). $G_{1.2}$ कृत्वा (for चक्रे). ]

Colophon. — *Sub-parvan:* $Ś_1$ K $B_{1.5.6}$ $D_6$ $G_5$ **दिग्विजय.** $B_{2-4}$ Dn $D_{1-5}$ $M_1$ (all om. sub-parvan name) mention only **अर्जुनदिग्विजय.** — *Adhy. name:* $G_5$ भगदत्तपराजयप्रियवचनं; $M_2$ भगदत्तार्जुनयुद्धं. — *Adhy. no.* (figures, words, or both): $K_1$ (marg. *sec. m.*). $_3$ 23 (as in text); $K_2$ $D_8$ 24; $Dn_1$ 26; S 28. — *S'loka no.:* $K_2$ 36; $K_3$ 26; Dn 16; $D_{1.2}$ 27.

## 24

1 $G_5$ om. the ref. After the ref., $V_1$ B D ins.:

275* एवमुक्तः प्रत्युवाच भगदत्तं धनंजयः ।
अनेनैव कृतं सर्वं भविष्यत्यनुजानता ।

[ (L. 2) $B_1$ अनुजानीहि याम्यहं (for the post. half). ] — $^a$) $T_1$ $G_{3-5}$ स (for तं). $K_3$ महाबाहो. $G_{1.2.6}$ M वि($G_6$ वै)जित्य स ($G_1$ सु-) महाबाहुः. — $^b$) $Ś_1$ स ययावुत्तरं; $K_2$ प्रययावुत्तरं; $B_5$ °वुत्तमां; $D_3$ °वंतरं; $G_6$ °वुत्तरात. $G_4$ चास्माद् (for तस्माद्).

2 $^a$) $K_2$ अंतर्गितं; $K_3$ °गिरं; S अभ्यंतरं. $K_{2.3}$ राजेंद्र (for कौन्तेयस्). — $^b$) $K_3$ बहिर्गिरं; $D_4$ बहिर्गिरिः; $G_1$ बहि*रं; $G_2$ बहून्गिरीन्. $Ś_1$ कुंतीपुत्रो धनंजयः (= $1^b$). — $^c$) $Ś_1$ तत्रोपरिगिरिं; $Ñ_1$ $V_1$ B Dn $D_{3-5}$ तथैवोप°; $G_{1.3}$ ततोपरि°. S चापि (for चैव). — $^d$) $Dn_1$ विजिग्ये; $D_4$ विजिज्ञे. $Ś_1$ $B_2$ भरतर्षभ; $B_6$ $D_{1.2}$ $G_2$ भरतर्षभः; $Dn_1$ पुरुषर्षभ; $G_{1.6}$ च धनंजयः ($G_1$ °य); $M_2$ पुरुषोत्तमः.

3 $^a$) $K_3$ विजिते. $Ñ_1$ $V_1$ पूर्वं तान्; $T_1$ $G_{2-4}$ M यवनान्; $G_{1.6}$ नृपतीन्; $G_5$ धनवान् (for पर्वतान्). $Ś_1$ सम्यग् (for सर्वान्). — $^b$) $G_5$ नराधिपान्; M समागताः. $G_{1.6}$ एकस्तत्र-महाबलान्. — $^c$) $Ś_1$ $K_{1.4}$ $B_5$ $D_3$ च (for स). $K_{2.3}$ $D_{5.6}$ $M_2$ तान्वशे स्थापयामास. — $^d$) $B_{3-5}$ Dn $D_{3-5}$ धनान्यादाय; $D_1$ (m as in text) रत्नान्या°.

4 $Ś_1$ om. (hapl.) 4–8. — $^a$) $K_2$ $B_4$ $G_4$ सहितैः. $K_4$ सर्वान्. — $^b$) $B_3$ अनुयुज्य. $D_1$ ततो (for च तान्). $K_3$ अनुरज्यत तान्नृपान्; $K_4$ अन्वगच्छंस्ततो नृपान्; $D_4$ °रज्य च तं नृप; $T_1$ $G_{3-5}$ $M_1$ अनुसंगम्य तान्नृ°; $G_{1.6}$ $M_2$ अनुगम्यापरान्नृ°; $G_2$ अनुमान्य ततो नृ°. — $^c$) $K_{1.4}$ उलूत°; $V_1$ B D (except $D_6$) उलूक° ($D_2$ marg. *sec. m.* as in text); $M_1$ कौलूत° (cf. $9^b$, $10^c$).

5 $Ś_1$ om. 5 (cf. v.l. 4). — $^a$) $K_1$ बृंहंतं शंखनादेन; $K_{2.3}$ मृदंगशंख°; $D_2$ मृदंगदर°; S वादित्ररथ°. Cd cites मृदंगः. — $D_4$ om. (hapl.) $5^{bc}$. — $^b$) $K_2$ रथे नेमिस्व°; S हयहेषा($G_2$ °य एष; $G_6$ °यहेष)स्व°. — $^c$) S कुंजराणां च शब्देन. — $^d$) $K_4$ कंपयन्वसुधाधिपान्; $B_{1.2.6}$ $D_{1.2}$ S °यन्निव मेदिनीं.

6 $Ś_1$ om. 6 (cf. v.l. 4). — $^a$) K $V_1$ B Dn $D_{3-6}$ त्वरितो; $D_{1.2}$ तु रणे (for तरुणो). — $^c$) $D_{1.2}$ निष्क्राम्य. S राजन् (for तस्माद्). — $^d$) $Ñ_1$ $V_1$ $B_{3-5}$ Dn $D_{4.5}$ फाल्गुनं; $D_3$ फल्गुनं (for पाण्डवम्). S उपतस्थे ($M_1$ °स्थौ) धनंजयं.

7 $Ś_1$ om. 7 (cf. v.l. 4). — $^a$) $D_1$ [ऽ]त्र (for ऽभूद्). — $^c$) $K_{1.3}$ $Ñ_1$ $D_6$ च; $D_{1.2}$ तं (for तु). — $^d$) $D_5$ पावकविक्रमं; $G_2$ पार्थस्य विक्रमं.

8 $Ś_1$ om. 8 (cf. v.l. 4). — $^a$) B °सह्य° (for

उपावर्तत दुर्मेधा रत्नान्यादाय सर्वशः ॥ ८
स तद्राज्यमवस्थाप्य कुलूतसहितो ययौ ।
सेनाविन्दुमथो राजन्राज्यादाशु समाक्षिपत् ॥ ९
मोदापुरं वामदेवं सुदामानं सुसंकुलम् ।
कुलूतानुत्तरांश्चैव तांश्च राज्ञः समानयत् ॥ १०
तत्रस्थः पुरुषैरेव धर्मराजस्य शासनात् ।
व्यजयद्धनंजयो राजन्देशान्पञ्च प्रमाणतः ॥ ११

स दिवःप्रस्थमासाद्य सेनाविन्दोः पुरं महत् ।
बलेन चतुरङ्गेण निवेशमकरोत्प्रभुः ॥ १२
स तैः परिवृतः सर्वैर्विष्वगश्वं नराधिपम् ।
अभ्यगच्छन्महातेजाः पौरवं पुरुषर्षभः ॥ १३
विजित्य चाहवे शूरान्पार्वतीयान्महारथान् ।
ध्वजिन्या व्यजयद्राजन्पुरं पौरवरक्षितम् ॥ १४
पौरवं तु विनिर्जित्य दस्यून्पर्वतवासिनः । C. 2. 1025 B. 2. 27. 16 K. 2. 28. 16

°पद्म°). K4 Ñ1 V1 B (except B2) D (except D1. 2) मत्वा (for ज्ञात्वा). — c) K2. 4 B1. 4 Dn D8 दुर्धर्षो; K3 उद्धर्षो (for दुर्मेधा). — d) S धनान्या(G1. 6 °नमा)दाय सर्वशः. — After 8, T1 G4. 5 ins.:

276* उपचारच्छलेनासौ प्रददौ संचितान्वसून् ।
अर्बुदं कुञ्जराणां च न्यर्बुदं वाजिनां तथा ।
ततस्तेनैव सहितः कौलूतेन धनंजयः ।

9 a) Ś1 K2 तं (for तद्). K4 राष्ट्रम् (for राज्यम्). Ś1 अवस्थाय; K4 D6 वशे स्थाप्य. M स तं राज्य अवस्थाप्य. — b) K1 (marg. *sec. m.*). 3 कुलूतमभितो; K4 उलूतसहितो; V1 B1. 5. 6 D (except D6) उलूक° (Dn1 [marg. *sec. m.*] बृहंतः स°); B2 ऊलूक°; B3. 4 चोलूक°; T1 G2–5 M1 कौलूत(G2 °क)स°. Cf. 4c, 10c. K4 B1 T1 G युवा (for ययौ). — c) Ś1 सेनाबंधमतो; K1 सुनाबिंदुमथो; B3 सेनया सहितो; G2 सेनाबिंदुमतो. — d) D3. 5 अथा° (for समा°).

10 K3 om. (hapl.) 10. — a) Ś1 K1. 2. 4 D6 गोदावरीं; V1 B2–4. 6 D1. 2. 6m महारथो; B1 मोदापुरीं; G1 M2 मोदापुरे; G2 मोदपूरं; G6 गोदापुरे. V1 महादेवं; G1 M2 वासुदेवं (for वाम°). — b) Ś1 सुदापानं; K1. 2. 4 D6 T1 G1. 3. 4 M सुनामानं. Cv cites अनामिनं (!?). G1. 6 च पुष्कलं; M2 तु पुष्कले. — c) Ś1 K4 उलूतान्; K1 कूलूतान्; V1 B Dn D1–4 उलूकान्; D5 कुलूकान्; T1 G4. 5 M1 कौलूतान्; G2. 3 कलू°. Cf. 4c, 9b. K2 कुलूतानूत्तराश्चैव; Ñ1 °तानागतांश्चैव. — d) Ś1 राज्यं (for राज्ञः). K2 D5 (marg. *sec. m.*). 6 समाक्षिपत्; D4 समासदत्; M2 समादयत्. B6 D1. 2 राज्ञः सर्वान्समानयत्; G1. 6 राज्ञ(G1 °ज्ञा)स्तान्धनमान°; G2 तांश्च राजन्यवर्तयत्.

11 a) K2 D1. 6 G4 तत्रस्थ-; B1 ततस्तैः; D3 G2 तत्रस्थैः. — b) G1 यमं राजस्य शास°. — c) Hypermetric! T1 व्यजयं. M2 राजा. Ś1 K1. 2 D6 व्यजयद्विजयो (K1 °ये) राजन्; K4 विजयद्विजयो राजन्; Ñ1 V1 B1. 3–5 Dn D3–5 किरीटी जि(V1 कि)तवान्राजन्; B2. 6 D1. 2 किरीटी व्यजयद्राजन्; G2 जयद्धनंजयो राजा. — d) K4 T1 G3–5 प्रधानतः; B D (except D6) ग(B6 गु)णान्वितः (D6 marg. *sec. m.* गणांस्तथा); G1 प्रधानथ; G2 त्रिणानतः; G6 धनानथ; M प्रणादतः. V1 देशानेतान्महारथः.

12 a) Ś1 स शिवप्रस्थमा°; K1 V1 B Dn D1. 3–5 स (Dn3 त-) देवप्रस्थमा°; K2. 4 D2. 6 स दिवप्रस्थमा°; Ñ1 स हेमप्रस्थमा°; T1 G3–5 समीप(G5 °व)प्रस्थमा°; G1. 6 समीप-(G6 सत्यव)स्थमथा°; M स दीपप्रस्थमा°. — b) K1 सेनासिंदोः; D4–6 °विंदोः; G3 °विज्योः. Ś1 पदं; G1. 6 रणं; G4 M2 परं (for पुरं). B1. 5 Dn D3–5 प्रति (for महत्). — d) K1 त्रिभुः; B1. 2. 3 D1. 2 ततः (for प्रभुः). S निवेशनमथाकरोत्.

13 b) Ś1 K2. 4 D3–5 विश्वगश्वं; G1. 6 विवेगा(G6 °शा)श्वं; G3 विषगश्वं. T1 G1–4 M1 जनाधिपं. — c) S (except G4) महाबाहुः (for °तेजाः). — d) Ś1 पांडवं; T1 पौरुषं (for पौरवं). Ś1 K4 B5 Dn2 D3–5 G6 पुरुषर्षभं; K3 Ñ1 V1 B1. 6 Dn1 °र्षभ.

14 a) K1. 3 स विजित्य (for K2 see below); T1 G4. 5 M तं विजित्य; G1. 6 तस्मिञ्जित्य (G6 °त्वा); G2 तं विजित्वा (for विजित्य च). After स विजित्या- (v.l. for विजित्य चा-), K2 follows up with 15bcd, om. (hapl.) the portion from हवे up to °जित्य (in 15a). S शूरं (for शूरान्). — b) S पार्वतीयं (G1. 6 °यान्) महारथः (G1. 6 जनाधिपः; G2 महारथं). — D5 reads 14cd marg. *sec. m.* (with v.l.). — c) D5m ध्वजन्या; Cd (as in text) ध्वजिन्या (=सेनया). K4 विज° (for व्यज°). V1 B1. 3–5 Dn D3. 4. 6 जिगाय सेनया राजन्; G2. 3. 5. 6 ध्वजिन्याप्यजयद्राजन्. — d) Ś1 क्षत्रियान्पुरुषर्षभ; K1 पुरं पौरवसंस्थितं; K4 D5m क्षत्रियान्क्षत्रियर्षभः; G1. 6 पुरं पौरववर्धितं. — After 14cd (in marg.), D5 cont. (marg. *sec. m.*):

277* महता तत्र सैन्येन प्रमथ्य कुरुनन्दनः ।
उरसावलिनं चैव रोमाणं च रणेऽक्षिपत् ।,

C. 2. 1025
B. 2. 27. 15
K. 2. 28. 15

गणानुन्मवसंकेतानजयत्सप्त पाण्डवः ॥ १५
ततः काश्मीरकान्वीरान्क्षत्रियान्क्षत्रियर्षभः ।
व्यजयल्लोहितं चैव मण्डलैर्दशभिः सह ॥ १६
ततस्त्रिगर्तान्कौन्तेयो दार्वान्कोकनदाश्च ये ।
क्षत्रिया बहवो राजन्नुपावर्तन्त सर्वशः ॥ १७
अभिसारीं ततो रम्यां विजिग्ये कुरुनन्दनः ।
उरगावासिनं चैव रोचमानं रणेऽजयत् ॥ १८
ततः सिंहपुरं रम्यं चित्रायुधसुरक्षितम् ।
प्रामथद्बलमास्थाय पाकशासनिराहवे ॥ १९
ततः सुह्मांश्च चोलांश्च किरीटी पाण्डवर्षभः ।
सहितः सर्वसैन्येन प्रामथत्कुरुनन्दनः ॥ २०
ततः परमविक्रान्तो बाह्लीकान्कुरुनन्दनः ।
महता परिमर्देन वशे चक्रे दुरासदान् ॥ २१
गृहीत्वा तु बलं सारं फल्गु चोत्सृज्य पाण्डवः ।

---

which is followed in the body of the text by the Vulgate reading of our $14^{cd}$ (namely, जिगाय सेनया राजन्पुरं पौरवरक्षितं). This latter has further a v.l. given marg. *sec. m.* as विजिगाय हितं चैव मण्डलं दशभिः सह.

15 $^{a}$) M2 पौरवस्. Ñ1 V1 B Dn D1.2.4.5 युधि; D3 विधि; G2 तं वि-; G3–5 च वि- (for तु वि-). — After $15^{a}$, T1 G3–5 ins.:

278* सेनाबिन्दुं च तत्पुरे ।
न्यधापयदमेयात्मा.

[ (L. 1) T1 स (for च). — (L. 2) T1 G3 न्यथा°; G4 न्याधा°. ]

— $^{b}$) T1 G3.5 दस्यू(G3 पसू)नां पतिमर्जुनः; G1.6 दस्यूनां पृत(G1 °थ)नान्यथा; G2 M दस्यूनां पर्वतानथ; G4 दस्यूनामर्जुनः **. — $^{c}$) G1 °नुत्सवसंसक्तो. — $^{d}$) K2 G2 व्यजयत्; G1 न जयत् (for अज°).

16 $^{a}$) Ś1 तथा (for ततः). K1 D6 वीरः; K2 D4 वीराः; K3.4 वीर. — $^{c}$) V1 G6 विज°; G2 अज°. K1 लोहितांश्चैव; T1 लोहितीं चैव.

17 $^{a}$) G2.5 तत्र (for ततस्). K2 तृगर्तान् (sic). K1 कौंतेय. K3 Ñ1 V1 B Dn D1–4 ततस्त्रिगर्ताः कौंतेयं (K3 °य). — $^{b}$) K1–3 D6m देशाः; K4 दार्मान्; Ñ1 B1.4 Dn दार्वाः; V1 सर्वे; B2 गर्माः; B3.5 D3.4 दर्वाः; B6 D1.2 दर्माः; D5 दर्व्याः (for दार्वान्). Ś1 K4 कोकनदांश्; K1 कोंकनदाश; Ñ1 B5 D3–5 केतनका(D3 °क)स्; B2 कौत्तनकास्; B3 कैंतिनकास्; B6 कौंतनकास्; D1.2 कौतलकास् (for कोकनदाश्). Ñ1 V1 B1–4.6 D (except D6) तथा; B5 तदा (for च ये). D5m दार्याः कंदरावासिनः; T1 G2.4.5 दार्विकानथ तं(G4 का)कणान्; G1 दर्विकानविकंकणान्; G3 दार्वकानथ कंकणान्; G6 दार्विकानपि कंकणान्; M दर्वी(M2 °विं)कानथ तंकणान्. — $^{c}$) S क्षत्रियान्सुबहूत्राजन्. — $^{d}$) K4 S (except G3) °वर्तत.

18 $^{a}$) Ś1 अभीसारीं; B1 अभिषारीं; B4 अभिसारी; B6 अभिसारिं; D3 आभीरीं च. Ñ1 तथा (for ततो). K2 अभिसारंस्तथा रम्या; K3.4 अभिसारांस्ततो (K3 °था) रम्यान्; D5 (marg. *sec. m.*) अभिकस्कारतो रम्यां; D6m अपि सारास्ततो रम्यान्; T1 G2.4 M अभिसारं तथा रम्यं; G1 °धारं तथारभ्य; G3.5 °सारं तदा (G5 ततो) रम्यं; G6 °यायं (*sup. lin.* °धायं) तथारभ्य. — $^{b}$) K1 G1.6 विजित्य. Ś1 पुरुषर्षभः; K2 कुलनंदनः; B1 भरतर्षभ; T1 G1.3.4.6 M कुरुसत्तमः (G1.6 °म). — After $18^{ab}$, G4 reads 21. — $^{c}$) Ś1 तरसावासिनं; K1 कुलूता°; K2 अलूत°; K3 करूत°; K4 उलूच°; D6 (m as in text) उलूत°; S करूश° (G5 °शा°). — $^{d}$) Ś1 G4 ततो (for रणे). Ñ1 रोचमानं धनंजयः.

19 $^{a}$) B3 चित्रं (for रम्यं). — $^{b}$) G3 चक्रायुध°; G4 पित्रायुध°. — $^{c}$) B (except B3) Dn M2 प्राधमद्; D3 प्रमथ्य; D5 प्रामथ्य; T1 प्रामधद्; G6 प्राथमद्. K2 ज्वलम्; D3.5 रथम् (for बलम्). T1 G3–5 आश्रित्य (for आस्थाय).

20 Ś1 lacuna for $20^{a}$. — $^{a}$) K1 सर्वांश्च; K2.3 सर्वांस्तु; K4 सुह्मान्सु-; B3 सुम्मांश्च; Dn1 सुक्षां°; D6 (m as in text) स्वक्षां°; T1 G3 M1 वंगां°; G2.4.5 वंकां°; M2 वंशां° (for सुह्मां°). K1 शैलांश्च; K3 वैनां°; B1.4 लोलां°; B2 चोनां° (for चोलां°). G1.6 ततोंगानपि (G6 °वि-) चोलांश्च. — $^{b}$) G1 कीनदी; G6 विजिग्ये (for किरीटी). K4 T1 °र्षभ. — G1.2.6 M1 om. $20^{c}$–$21^{b}$. — $^{d}$) V1 प्राजयत्. T1 G3–5 पृथुविक्रमः (for कुरु°).

21 G1.2.6 M1 om. $21^{ab}$ (cf. v.l. 20). G4 reads 21 after $18^{ab}$. — $^{a}$) T1 G3–5 ततः परमसंहृष्टो. — $^{b}$) Ś1 K1.2 B5 D1 बाह्लिकान्; D5 वाह्ली°. Ś1 K4 D6 सुमहाबलान्; V1 B3–5 Dn D3–5 M2 पाकशासनिः; B1.2.6 D1.2 पांडवर्षभः; T1 G3–5 समितिंजयः (for कुरु°, as in K1–3 Ñ1). — $^{c}$) K1.2 परिबर्हेण; B5 (m as in text) °तापेन; G4 परमर्देन. Ś1 lacuna; D6 कुंतीपुत्रो महाबाहुर्. — $^{d}$) Ś1 वशी-. K3 वश्येन च नरा*पान्. — After 21, G3 ins. a passage given in App. I (No. 12).

22 G3 om. 22. — $^{a}$) K1.2 गृहीत्वा बलसारं तु; S (G3 om.) ततः सारबलं गृह्य. — $^{b}$) Ś1 फल्गुणो भरतर्षभ;

दरदान्सह काम्बोजैरजयत्पाकशासनिः ॥ २२
प्रागुत्तरां दिशं ये च वसन्त्याश्रित्य दस्यवः ।
निवसन्ति वने ये च तान्सर्वानजयत्प्रभुः ॥ २३
लोहान्परमकाम्बोजानृषिकानुत्तरानपि ।
सहितांस्तान्महाराज व्यजयत्पाकशासनिः ॥ २४
ऋषिकेषु तु संग्रामो बभूवातिभयंकरः ।
तारकामयसंकाशः परमर्षिकपार्थयोः ॥ २५
स विजित्य ततो राजनृषिकान्रणमूर्धनि ।
शुकोदरसमप्रख्यान्हयानष्टौ समानयत् ।
मयूरसदृशानन्यानुभयानेव चापरान् ॥ २६
स विनिर्जित्य संग्रामे हिमवन्तं सनिष्कुटम् ।
श्वेतपर्वतमासाद्य न्यवसत्पुरुषर्षभः ॥ २७ C. 2. 1037 B. 2. 27. 29 K. 2. 28. 29

इति श्रीमहाभारते सभापर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

Ñ1 V1 B Dn1 (m as in text). n2 D3–5 फा(D3 फ)ल्गुनः पांडुनंदनः; S (G3 om.) फल्गुनो(G1. 2 न्यो, in G1 corr. *pr. m.* to नो)न्यद्दि(T1 G4. 5 °न्यान्वि)मृज्य सः. **Cd** cites फल्गु (as in text). — c) B1. 3 D2 °न्सहकांबोजान्; D4 °न्सह वांबोजैर्; T1 G4. 5 °न्सिहकांबोजैर्; G1. 3 न्सिहकांश्चोग्रान्; G2 °न्सह कांभोजैर्. — d) Ś1 K D5 व्यजयत्. — T1 G2. 4 (om. line 4). 5. 6 M2 ins. after 22: G1, after 23:

279* यवनांश्च महाराज शकांश्च व्यजयद्युधि ।
किरातान्सभयान्खर्वान्खलान्काचान्बहुव्रतान् ।
नीरानुत्पासिकांश्चैव म्लेच्छांश्चान्यान्सहस्रशः ।
तान्सर्वानजयत्पार्थो धर्मराजप्रियेप्सया ।

[ (L. 1) G1. 2 M2 यवनान्स (G1 °नांश्च) महाराजः. G1 शकांश्च; G2 M2 वंकांश्च. — (L. 2) T1 सहसान्; G2 M2 सहयान्; G4 सह तान्; G5 डमकान् (for समयान्). G1. 6 खङ्गान्; G4. 5 सर्वान् (for खर्वान्). T1 खुरान्; G4. 5 खरान् (for खलान्). T1 सबभृकान्; G4 सुबभ्रकान्; G5 सबभुकान् (for बहुव्रतान्). G2 क्षुद्रान्कौचान्सव्याहकान्; M2 कुररांश्च सहूहुकान्. — (L. 3) T1 वीरानुवासकां°; G2 M2 वीरानुपसकां°; G4 नीराभिनासिकां°. G1 म्लेच्छानन्यान्. ]

23 T1 G3–5 read $23^{a}$–$25^{b}$ after 271* (cf. v.l. 2. 23. 16); T1 G5 *repeat* $23^{a}$–$25^{b}$ here; G4 *repeats* $25^{ab}$ only. — a) G1. 5. 6 ते (for ये). — c) K1 च ते; D6 वनं (for वने). G1. 5. 6 चैव (for ये च). — d) K4 transp. तान् and सर्वान्. S (except M1) युधि (for प्रभुः). D6 तान्विजिग्ये धनंजयः.

24 For sequence of T1 G3–5, cf. v.l. 23. — a) K2 लोकान्; K4 मौंकान्; D5 होलान्; T1 G1. 2. 4 ततः; G3. 5 (both times) गतः (for लोहान्). G5 (first time) परमकांभो°. Ś1 लहान्परमकांभोजान्; K1 पंड्यान्परमकंबोजान्; V1 लंबकान्परकांबोजान्; B1. 2. 4. 6 महाकंदरकांबो°; B3 महाकंधककंबो°; B5 D3. 4. 5 (marg. *sec. m.*) लंपाकान्परकांबो°; D1. 2 मदा(D2 °हा)कंदककांबो°. — b) D1 ऋषकान्; T1 G5 (first time) M2 ऋषी°; G1 इषि°; G5 (second time). 6 इषी°. — c) K4 सहितांश्च; Ñ1 V1 B2–4. 6 D1. 2 सहितस्तैर्; G (G5 both times) सहितैस्तैर् (G1 °तैस्ते). T1 (both times) सहितैस्तैर्महाबाहुर्. — d) T1 (both times) अज° (for व्यज°).

25 G2 om. $25^{a}$–$26^{b}$. For sequence of $25^{ab}$ in T1 G3–5, cf. v.l. 23. — a) K1 हृषीकेषु तु; Ñ1 V1 B Dn D1. 2. 4 ऋषिकेष्व(B4 °केना)पि; D3. 5 ऋषी(D5 °षि)केष्वति-; T1 ऋर्षकेर्षितु (sic); G1 इषीकेषतु; G4 (*sup. lin.*) ऋषिकेषु सु-; G5 (first time) हृषिकेषु तु; G5 (second time) M इषीकेषु तु; G6 येषु केषु तु. — b) T1 G1. 3. 4. 5 (second time). 6 M बभूव सुभयंकरः. — G3 om. from $25^{cd}$ up to stanza 6 of the next adhy. — c) G4 °संकाशं. — d) K4 परमार्षिक°; Ñ1 V1 B Dn1 D1. 3–5 परस्त्वृ(D3 °स्तृ-; D4 °स्त्वृ-; D5 °स्त्र)षिक°; D6 (before corr.) परावृषिक°; T1 G4. 5 परं त्वृषिक°; G1. 6 परमैषि(G6 °षी)क°; M परमर्षीक°.

26 G3 om. 26; G2 om. $26^{ab}$ (cf. v.l. 25). — a) D6 निर्जित्य. K3 T1 M तदा; G1. 4–6 तथा (for ततो). K1 राजा. B1. 2 D1. 2 स विनिर्जित्य समरे. — b) K1 हृषि°; K3 T1 G4 ऋर्षी°; K4 मृषि°; G1. 6 इषी°. — c) V1 B1. 3. 5. 6 Dn D3–5 M2 शुकोदरसमां(B5 °हयां)स्तत्र. — D3 om. $26^{ef}$. — ef) Ś1 °न्यानौतयानेव चाप°; K4 D6 °ननेकानपि चाप°; Ñ1 V1 B2. 4–6 Dn °नुत्तरा(Dn1 m °ननेका)नपरानपि; B1 °न्हयानेवापि चापरान्; B3 D1. 2. 4. 5 °नुत्तमानपरानपि; G1 °नुभयाते च चापरान्; G2 °न्सुहयानेव चाप°. — After 26, N (D3 om.) ins.:

280* जवनानाशुगांश्चैव करार्थं समुपानयत् ।

[ K3 पवनान्; B6 D1. 2 य(D2 या)वनान्. K1. 2 जवमानाशुगांश्चैव. D1 करार्थ-; D4. 6 करार्थे. ]

— On the other hand, S (G3 om.) ins. after 26:

281* ततः स जित्वा बीभत्सुर्भारतं वर्षकं तदा ।
अन्यान्वै दिव्यवर्षांश्च जितवान्कुलपर्वतान् ।

# २५

C. 2. 1038
B. 2. 28. 1
K. 2. 29. 1

वैशंपायन उवाच ।
स श्वेतपर्वतं वीरः समतिक्रम्य भारत ।
देशं किंपुरुषावासं द्रुमपुत्रेण रक्षितम् ॥ १
महता संनिपातेन क्षत्रियान्तकरेण ह ।
व्यजयत्पाण्डवश्रेष्ठः करे चैव न्यवेशयत् ॥ २
तं जित्वा हाटकं नाम देशं गुह्यकरक्षितम् ।
पाकशासनिरव्यग्रः सहसैन्यः समासदत् ॥ ३
तांस्तु सान्त्वेन निर्जित्य मानसं सर उत्तमम् ।
ऋषिकुल्याश्च ताः सर्वा ददर्श कुरुनन्दनः ॥ ४
सरो मानसमासाद्य हाटकानभितः प्रभुः ।
गन्धर्वरक्षितं देशं व्यजयत्पाण्डवस्ततः ॥ ५
तत्र तित्तिरिकल्माषान्मण्डूकाक्षान्हयोत्तमान् ।

जनमेजयः ।
कथं स जितवान्पार्थो दिव्यान्वर्षान्सपर्वतान् ।
आनुपूर्व्याच्च मे शंस नामभिः सह वै द्विज ।
वैशंपायनः ।
स जित्वा भारतं वर्षं बलाद्राजा धनंजयः ।
दस्यूंश्चाप्यजयत्सर्वान्कुक्षौ हिमवतो बलात् ।

[(L. 1) G4.5 तथा (for तदा). G6 M1 भारतं वर्षमुत्तमं. — (L. 2) M1 नव- (for दिव्य-), and कुलपर्वतैः. — (L. 3) G6 च सर्वतः (for सपर्वतान्). — A few MSS. om. वैशं° before line 5. — (L. 5) T1 G4.5 राजन् (for राजा). — (L. 6) G1.6 यथा (for बलात्).]

27 G3 om. 27 (cf. v.l. 25). — $^{a}$) B3 समरे (for संग्रामे). — $^{b}$) K2 समिष्कुटं; K4 D6 सनिःकुटं; D4 सुनिष्टिरं; T1 विनिष्क्रमन्; G1 स निष्कुमन्; G2 स निष्क्रमत्; G4.5 व्यनिष्क्रमत् (G5 °मं); G6 स निष्क्रमन्; M समंततः (for सनिष्कुटम्). Cd निष्कुटो गृहारामः; Cn निष्कुटं शैलविशेषं. — $^{c}$) K1.2 D3.5.6 श्वेतं (for श्वेत-). — $^{d}$) Ñ1 V1 B D (except D6) न्य(B3 प्रा)विशत्. T1 G5 M2 भरतर्षभः; G1.2.4.6 M1 भरतर्षभ.

Colophon om. in G3. — *Sub-parvan:* Ś1 K1-3 B1 G5 दिग्विजय. K4 B2-6 D G1 M2 (all om. sub-parvan name) mention only अर्जुन(K4 D6 उत्तर-; B5 Dn D4 फाल्गुन)दिग्विजय. — *Adhy. name:* G1 भारतवर्षविजयः; G2 हिमवत्प्रवेशः. — *Adhy. no.* (figures, words or both): K1 (marg.).3 24 (as in text); K2 D3 25; Dn1 27; S (G3 om.) 29. — *S'loka no.:* Dn1 D2 29; T1 32; M1 28.

## 25

1 G3 om. 1-6 (cf. v.l. 2. 24. 25). G6 om. the ref. — $^{a}$) K1 D1.2 G4.5 श्वेतं (for श्वेत-). Ś1 चैव; K4 D6 श्रीमान् (for वीरः). — $^{b}$) Ñ1 D1 भारतः; V1 B3-5 Dn D3-5 वीर्यवान्. — D6 reads $1^{d}$–$3^{a}$ on marg. (*sec. m.*). — $^{d}$) D2 राज°; S (G3 om.) राम° (for द्रुम°). Ś1 K4 D1.2 पालितं (for रक्षितम्).

2 G3 om. 2 (cf. v.l. 1). — $^{b}$) Ś1 K4 वै; B2-4 D3.5 च; G1.6 M हि (for ह). D1.2 क्षत्रांतकरणेन ह; G2 क्षत्रियांतवरेण हि. — $^{c}$) V1 B2-5 Dn D3-5 S (G3 om.) अज° (for व्यज°). — $^{d}$) Ś1 करे चैवं; K1 V1 B1-5 Dn D3-5 करे चैनं; T1 G1.2.4.6 करं चैव. G1.2 न्यवेदयत्.

3 G3 om. 3 (cf. v.l. 1). — $^{a}$) K1-3 स (for तं). G1 नीत्वा (for जित्वा). G6 हाटकान्. — $^{b}$) B4 गुंभकरक्षितं; D1.2 गुह्यकरक्षकं (D2 °क्षितः). — $^{d}$) K2.4 D3.4 सहसैन्यसमा°; T1 G4.5 M ससैन्यो वशमानयत्; G1.2.6 ससैन्यो (G6 °न्ये) वै समाविश(G2 °नय)त्.

4 G3 om. 4 (cf. v.l. 1). — $^{a}$) Ś1 D4 तं तु; K2 तास्तु. B5.6 शांत्वेन; G2 सत्वेन. — $^{b}$) K2.3 सरमुत्तमं; B4.5 सर उत्तरं. — $^{c}$) D3 ऋषी°. K3 Ñ1 V1 B4.5 Dn D4 तथा; B1 च तान्; D3 ततः; D5 तदा (for च ताः). Ś1 ऋषिकुल्यांस्तथा साध्यान्; S (except M1; G3 om.) ऋषिकुल्यांश्च तान्सर्वान्. — $^{d}$) Ś1 विजित्य कुरुनंदन.

5 G3 om. 5 (cf. v.l. 1). — $^{a}$) K1 D2 S (G3 om.) transp. सरः and मानसं. B1.2.6 D1 सरश्च मानसं प्राप्य. — After $5^{a}$, G1.6 ins. a passage given in App. I (No. 13). — G1.6 om. $5^{b}$–$6^{d}$. — $^{b}$) Ś1 हाटकम्. T1 G4.5 अजयत् (for अभितः). V1 हाटकानां च स प्रभुः; G2 हाटकानमितप्रभान्. — Ś1 om. (hapl.) $5^{d}$–$7^{c}$. — $^{d}$) K3 V1 B3-5 Dn D3-5 G2 M2 अजयत्. K1 B1 पांडवस्तदा; V1 पांडवः प्रभुः; B2.6 D2 G2 पांडुनंदनः; D1 यदुनंदनः; M2 पाकशासनिः.

6 Ś1 G1.3.6 om. 6 (cf. v.l. 1, 5). — $^{a}$) B6 Dn2 D1.2 ततस् (for तत्र). K4 D4 °रकल्माषान्; D6 m °रवर्णा*न् (gloss?). — $^{b}$) K1.2 मांडूकाक्षान्; K3.4 B D

लेभे स करमत्यन्तं गन्धर्वनगरात्तदा ॥ ६
उत्तरं हरिवर्षं तु समासाद्य स पाण्डवः ।
इयेष जेतुं तं देशं पाकशासननन्दनः ॥ ७
तत एनं महाकाया महावीर्या महाबलाः ।
द्वारपालाः समासाद्य हृष्टा वचनमब्रुवन् ॥ ८
पार्थ नेदं त्वया शक्यं पुरं जेतुं कथंचन ।
उपावर्तस्व कल्याण पर्याप्तमिदमच्युत ॥ ९
इदं पुरं यः प्रविशेद्ध्रुवं स न भवेन्नरः ।
प्रीयामहे त्वया वीर पर्याप्तो विजयस्तव ॥ १०
न चापि किंचिज्जेतव्यमर्जुनात्र प्रदृश्यते ।
उत्तराः कुरवो ह्येते नात्र युद्धं प्रवर्तते ॥ ११
प्रविष्टश्चापि कौन्तेय नेह द्रक्ष्यसि किंचन ।
न हि मानुषदेहेन शक्यमत्राभिवीक्षितुम् ॥ १२
अथेह पुरुषव्याघ्र किंचिदन्यच्चिकीर्षसि ।
तद्ब्रवीहि करिष्यामो वचनात्तव भारत ॥ १३
ततस्तानब्रवीद्राजन्नर्जुनः पाकशासनिः ।
पार्थिवत्वं चिकीर्षामि धर्मराजस्य धीमतः ॥ १४
न प्रवेक्ष्यामि वो देशं बाध्यत्वं यदि मानुषैः । C. 2. 1052 B. 2. 28. 15 K. 2. 29. 74

(D6 marg. as in text) G4 मंडूकाख्यान्; T1 मंडूका*न्; G2 M समुद्रा(M1 °ल्पा)क्षान्. — $^{c}$) K1.3.4 G2 सकलम्; K2 स फलम्; M1 स्स करम्. B1 अभ्येत्य; B3 M अत्यर्थं (for अत्यन्तं). D6 लेभे सकलरत्नानि. — $^{d}$) K2–4 B4 D2 °नगरं; D6 °नगरे. K2–4 Ñ1 B1–3.6 D1.2.6 तथा; B4 महत्; D3 ततः (for तदा). — A passage given in App. I (No. 13) is ins. in S after 6 (in G1.3 after $5^{a}$; in G3 after 2. 24. 21).

7 Ś1 om. $7^{abc}$ (cf. v.l. 5). — $^{a}$) B2 बर्हिवर्षस्; G1.6 M कुरुवर्षं. K1.4 D6 च; D1 नु (for तु). — $^{b}$) Ñ1 V1 B4.5 Dn D3–5 transp. समासाद्य and स. K2.3 च (for स). S धनंजयः (for स पाण्डवः). K1.4 D6 समासाद्याथ पांडवः. — After $7^{ab}$, S ins.:

282* विद्याधरगणांश्चैव यक्षेन्द्रांश्च विनिर्जयन् ।
तत्र लेभे महात्मा वै वासो दिव्यमनुत्तमम् ।
किंनरद्रुमपत्रांश्च तत्र कृष्णाजिनान्बहून् ।
याज्ञीयांस्तांस्तदा दिव्यांस्तत्र लेभे धनंजयः ।

[ (L. 2) G5 महाबाहुर् (for महात्मा वै). — (L. 3) G5.6 किंनगान्द्रुमपुत्रांश्च. — (L. 4) G5 यज्ञीयांश्चैव वै दिव्यान्. ] — $^{c}$) D3 देशं (for जेतुं). G2 M तस्योर्ध्वं (for तं देशं). K3 B1 G6 (by transp.) इयेष देशं तं (B1 ते) जेतुं. — $^{d}$) G2 M तं देशं पाडुनंदनः.

8 $^{ab}$) B3.4.6 तत्र (for तत). K1 एवं; B2 एतं. B1.5 Dn1 D3–5 T1 G3–5 transp. °काया and °वीर्या. Ñ1 V1 B3.4 Dn2 °वीर्यं (for °काया), and °काया (for °वीर्या). G1 तत एनं महाकायं महावीर्यं महाबलं. — $^{c}$) Ñ1 समागम्य; B4 समाहृष्टा. — $^{d}$) B4 इदं; T1 G2.5 घ्रष्टा; G1.6 M घृष्टं; G3.4 दृष्ट्वा (for हृष्टा).

9 $^{a}$) B1 जातु (for पार्थ). D3 (corrupt) पंथा नेदपुरं शक्यं. — $^{b}$) D3 त्वया; G2 पुनर् (for पुरं). — $^{c}$) Ś1 उपारमस्व. B (except B4) D1.2.4 कल्याणं. — $^{d}$) Ś1 उच्यते; K4 अच्युतः; G2 अर्जुन.

10 $^{b}$) K4 Ñ1 V1 Dn D3.5.6 transp. स and न. K2 D4 G3 om. न. B1.4 भुवनं स (for ध्रुवं स न). K1 विशेन् (for भवेन्). — $^{c}$) Ś1 प्रीयामहं; Dn2 D3 T1 G1.2.5.6 प्रियामहे.

11 $^{a}$) D1.2 स (for न). Ś1 Ñ1 V1 Dn M2 चात्र; K1–3 चैव (for चापि). K3 कर्तव्यम् (for जेतव्यम्). — $^{b}$) G5 प्रविश्य ते. G1.6 अर्जुनो (G6 °ने-) नात्र दृश्यते. — $^{c}$) G1 उत्तरां. — $^{d}$) Ś1 transp. नात्र and युद्धं.

12 $^{a}$) B1 प्रविष्टोपि च; B2 D2 °ष्टोपि नु; B4–6 Dn D3–5 °ष्टोपि हि; D1 °ष्टोपि नु (for °ष्टश्चापि). Ś1 कौंतेये. — $^{b}$) K4 M1 न च; G3 न हि; M2 न स (for नेह). G1.3 कंचन. G2 नाद्रक्ष्यसि नरैर्भुवि. — $^{c}$) G2 °वेषेण (for °देहेन). — $^{d}$) T1 G1.4–6 अत्रापि; G2 तत्रापि (for अत्राभि-).

13 $^{a}$) B1 यथेह; B3 तथेह; M1 अथ हे. G6 पुरुषव्याघ्रात्. — $^{b}$) K3 चिकीर्षय; T1 G2–5 M चिकीर्षितं. G1.6 कियदस्ति चिकीर्षितं. — K3 om. $13^{c}$–$14^{d}$. — $^{c}$) K2 तद्ब्रूहि नः; Ñ1 B3 G1.2.6 M तद्वदस्व; V1 B2–5 Dn D1.3.4 तत्प्रब्रूहि; B1 तद्वदाशु; D2 एतद्ब्रूहि; G3–5 तद्ब्रवीषि. K1 तद्ब्रवीहि (वः) करिष्यामि. — $^{d}$) G1.2 M वचनं तव.

14 K3 om. 14 (cf. v.l. 13). — $^{b}$) S पांडवः (G5 अब्रवीत्) (for अर्जुनः). Ś1 K (K3 om.) D6 परवीरहा; V1 B Dn D1–5 प्रहसन्निव (for पाक°, as in Ñ1 S). — $^{d}$) Ñ1 धर्मतः (for धीम°). — After 14, T1 G3–5 ins.:

283* कृष्णस्य शासनाच्चैव पार्थिवत्वं चिकीर्षति ।
[ G4 वचना° (for शासना°). ]

15 $^{a}$) Ś1 को देशं; K3 G6 वै देशं; D3 देशं तं. — $^{b}$) K1–3 अगम्यं; K4 D6 वर्जितं; Ñ1 वर्ज्येयं; V1 अजितं; B (B2 marg.) Dn D3–5 विरुद्धं; B2 (orig.) D1.2 न जितं

C 2.1052 B 2.28.15 K 2.29.74 युधिष्ठिराय यत्किंचित्करवन्नः प्रदीयताम् ॥ १५
ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च ।
मोकाजिनानि दिव्यानि तस्मै ते प्रददुः करम् ॥ १६
एवं स पुरुषव्याघ्रो विजिग्ये दिशमुत्तराम् ।
संग्रामान्सुबहून्कृत्वा क्षत्रियैर्दस्युभिस्तथा ॥ १७
स विनिर्जित्य राज्ञस्तान्करे च विनिवेश्य ह ।
धनान्यादाय सर्वेभ्यो रत्नानि विविधानि च ॥ १८
हयांस्तित्तिरिकल्माषाञ्शुकपत्रनिभानपि ।
मयूरसदृशांश्चान्यान्सर्वाननिलरंहसः ॥ १९
वृतः सुमहता राजन्बलेन चतुरङ्गिणा ।
आजगाम पुनर्वीरः शक्रप्रस्थं पुरोत्तमम् ॥ २०

इति श्रीमहाभारते सभापर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

(for बाध्यत्वं). S यद्यदश्याः स्थ (G1 °श्यास्थि; G2 °श्यास्त; G3.4 °श्यं हि; G6 °श्य स्थ) मानुषैः. — $^{c}$) K1.2 यः कश्चित्; K3 M1 वः कश्चित्; G2 M2 वः किंचित्. — $^{d}$) K1.2 करः समुपदी(K2 °नी)यतां; K3 ** समुपनीयतां; K4 D2 करं नः (D2 तु) संप्रदी°; Ñ1 V1 B Dn D1.3–5 M1 कर(B6 करं)पण्यं प्रदी°; D6 करं तत्र प्रदी°; T1 G3–5 करमत्र प्रदी°; G1.2.6 M2 करं (M2 °रः) साधु प्रदी°. — After 15, G1.6 ins.:

284* नो चेत्कृष्णेन सहितो योधयिष्यामि पालकाः ।

16 $^{a}$) D3–5 transp. दिव्यानि and वस्त्राणि. — G2 om. 16$^{c}$–18$^{d}$. — $^{c}$) K1 D6m मौक्तिकानि च; K2–4 मौकाजिनानि; Ñ1 V1 B1.4.5 Dn D3–5 क्षौमाजि°; B2.3.6 D1.2 मुक्ताजि°; D6 शुभ्राजि°; G6 रत्नाजि°; M1 (*inf. lin.*) Cv योगाजि°. B3 द्रव्याणि; T1 G5.6 M2 शुभ्राणि (for दिव्यानि). G1 रत्नामोकानिजनानि; G3 मेषाजिनानि तस्यैते; G4 कंबळाजिनानि शुभ्राणि (hypermetric). — $^{d}$) Ñ1 B (except B3) D (except D6) तस्य ते; G3 तथा च.

17 G2 om. 17 (cf. v.l. 16). Ś1 om. 17$^{ab}$. — $^{b}$) K3 V1 B1.4.5 Dn त्रिजित्य. — After 17$^{ab}$, T1 G5 ins.:

285* सुदर्शनद्वीपमिदं कार्त्स्न्येन भरतर्षभः ।

— $^{c}$) Ś1 K2–4 D6 विविधान्; D4 स बहून्. — $^{d}$) Ś1 K2–4 D6 M1 बहुभिस् (for दस्युभिस्). Ś1 K2.3 तदा (for तथा). G1.6 देवगंधर्वमानुषैः.

18 G2 om. 18 (cf. v.l. 16); G1.6 om. 18$^{ab}$. — $^{a}$) G4 हि (for त्रि-). K2.3 तान्सर्वान्; K4 तान्राज्ञः; D6 राजन्यान्; T1 राज्ञास्तान्. — $^{b}$) Ś1 करे वै; Ñ1 करेण; T1 G3–5 करेषु (for करे च). Ś1 K1 V1 B3 T1 G3–5 M च; B1 सः; B4.5 Dn D3–5 तु (for ह). K4 तान्करे च न्यवेश्य ह. — $^{c}$) D1.2 धनमादाय. K2.3 राजभ्यो; G1 सत्ये° (for सर्वे°).

19 $^{a}$) K2.4 D1.2.4 °स्तित्तिर°. — $^{b}$) Ś1 शुभान् (for अपि). K1 शुकोदरशुभानपि. — $^{c}$) K1–3 Ñ1 V1 B1.3–5 Dn D3–5 T1 G3–5 मयूरसदृशानन्यान्; D6 मयूरापच्छवणाश्च. — $^{d}$) T1 G5 सोश्वान् (for सर्वान्).

20 $^{a}$) T1 G2–4 M1 स (for सु-). G1.6 ततः समाहृता राजन्. — $^{c}$) G6 निर्जगाम. K2 पुरं (for पुनर्). B2.6 D1.2 धीमान् (for वीरः). — After 20, V1 B D T1 G3 ins.:

285* धर्मराजाय तत्पार्थो धनं सर्वं सवाहनम् ।
न्यवेदयदनुज्ञातस्तेन राज्ञा गृहान्ययौ ।
[(L. 2) B3 आवेद°. V1 B5 G3 गृहं (for गृहान्).]

Colophon. — *Sub-parvan:* Ś1 दिग्विजय. K B1.5.6 Dn D1.2.4.6 (all om. sub-parvan name) mention only उत्तरदिग्विजय; B2–4 G1 M (likewise) only अर्जुनदिग्विजय; D3.5 only अर्जुनस्योत्तरदिग्विजय (followed by समाप्त); G5 only धनंजयस्योत्तरदिग्विजय. — *Adhy. name:* K4 अर्जुनागमनं. — *Adhy. no.* (figures, words or both): K1 (marg. *sec. m.*).3 25 (as in text); K2 D3 26; Dn1 28; S 31. — *S'loka no.:* K2 20; K3 18; Dn D1.2 21.

## 26

1 $^{c}$) G1.6 धर्मसूनुम्. K3 D1 G4 M1 (*inf. lin.* as in text) अनुप्राप्य. Ñ1 V1 धर्मराजाभ्यनुज्ञातः. — $^{d}$) Ś1 K4 B5 D3–5 प्रययौ पुरुषर्षभः (D3 °भ); Ñ1 V1 B1–4.6 D1.2 प्रययौ भरतर्षभः (B2.6 °भ).

2 $^{a}$) G1.6 महाबलस्य चक्रेण. — $^{b}$) K2 T1 G पर(G1 पुरा)राष्ट्रविमर्दि(G1 °र्द)ना; V1 B4 परराष्ट्रप्रमर्दिना. — After 2$^{ab}$, V1 B D M2 ins.:

286* हस्त्यश्वरथपूर्णेन दंशितेन प्रतापवान् ।

— $^{c}$) K2 G1 वृत्तो; V1 D5 ततो; D4 घृतो. Ś1 K2 B6 D2 T1 G3.5 M भरतशार्दूल; G1 भारतशार्दूलो. — $^{d}$) K4 G6 द्विषतां शोकवर्धनः; G2 द्विषां शोकवि°. — After

# २६

वैशंपायन उवाच ।
एतस्मिन्नेव काले तु भीमसेनोऽपि वीर्यवान् ।
धर्मराजमनुज्ञाप्य ययौ प्राचीं दिशं प्रति ॥ १
महता बलचक्रेण परराष्ट्रावमर्दिना ।
वृतो भरतशार्दूलो द्विषच्छोकविवर्धनः ॥ २
स गत्वा राजशार्दूलः पाञ्चालानां पुरं महत् ।
पाञ्चालान्विविधोपायैः सान्त्वयामास पाण्डवः
ततः स गण्डकीं शूरो विदेहांश्च नरर्षभः ।
विजित्याल्पेन कालेन दशार्णानगमत्प्रभुः ॥ ४
तत्र दाशार्णको राजा सुधर्मा लोमहर्षणम् ।
कृतवान्कर्म भीमेन महद्युद्धं निरायुधम् ॥ ५
भीमसेनस्तु तद्दृष्ट्वा तस्य कर्म परंतपः ।
अधिसेनापतिं चक्रे सुधर्माणं महाबलम् ॥ ६
ततः प्राचीं दिशं भीमो ययौ भीमपराक्रमः ।
सैन्येन महता राजन्कम्पयन्निव मेदिनीम् ॥ ७
सोऽश्वमेधेश्वरं राजन्रोचमानं सहानुजम् । C. 2. 1066 B. 2. 29. 8 K. 2. 30. 8

2, S reads for the first time 8ᵃ–9ᵇ, *repeating* the lines in their proper place (G1.6 read them here only).

3 ᵃ) K1 गजशार्दूलः (sic); K2.4 G3 राजशार्दूल; Ñ1 V1 B Dn D1–5 M नरशार्दूलः (M °ल). — After 3ᵃ, D4 *repeats* 2ᵈ–3ᵃ. — ᵇ) K1.2.4 Ñ1 V1 B Dn D4–6 पंचाला°. T1 G2–5 M transp. पुरं and महत्. G1.6 ययौ (for महत्). — ᶜ) K1.2.4 Ñ1 V1 B Dn D4–6 G1.6 M पंचाला°. — ᵈ) Ś1 K2 (marg. *sec. m.*) D6 शमयामास; K1–3 साथ°; B3.5.6 शांत्व°. Ś1 K4 D6 भारत; G1.6 गर्वितान् (for पाण्डवः). — After 3, T1 G (except G2) ins.:

287* किंचित्करं समादाय विदेहानां पुरं ययौ ।

4 G1.6 om. 4ᵃᵇ. — ᵃ) K1 गल्लकीं; K4 गंडिकीं; Ñ1 B4 Dn D6 गंडकान्; B5 D3–5 कुंडिनं; T1 कंदर्कीं; G2 कटकीन्; G3 कंटकीन्; G4 कंटकिं; G5 कंटकीं; M1 कंडकीन्; M2 कंडकिं. Cd cites गंडकी. K1 Ñ1 T1 G3–5 वीरो; B5 D3–5 गत्वा (for शूरो). K3 ततः संगतुकान्छूरो (sic); V1 B3 ततः स गंडकीयांस्तु; B1 ततः कंकडकान्वीरो; B2 ततः स गंडकीभाश्च; B6 D1.2 ततः स गंडकीयांश्च. — ᵇ) B3 विदेहांस्तु; B5 D4.5 सिंधुराजं; D3 भीष्मकं स; G2 विदेशांश्च. Cd cites विदेहां (=मिथिलां). Ś1 K2.4 G3 नरर्षभ; B1.2.6 D1.2 महाबलः. Ñ1 B4 Dn D6 विदेहान्भरतर्षभः. — ᶜ) K4 स विजित्याल्पकालेन. — ᵈ) K2 दशास्नान्; D1 दशार्णाम्; D6 दशार्णम्; Cd as in text. Ñ1 V1 B (except B2) Dn D3.4 S अजयत्.

5 G1.6 om. 5ᵃᵇ. — ᵃ) G2 तदा (for तत्र). K4 B2 दशार्णको; D6 दाशार्णिको. — ᵇ) K2–4 T1 G4.5 M2 सुवर्मा; Ñ1 सुशर्मा. K1.3 B1.2.6 D1.2 लोमहर्षणः; T1 G2–5 M रोमहर्षणः (G4 M °णं). — ᶜ) T1 G3–5 अद्भुतं (for कृतवान्). Ś1 K B5 Dn D3–6 कृतवान्भीमसेनेन (D5 °नस्तु); G1.6 सुवर्मा तत्र भीमेन. — ᵈ) Ś1 महयु *; K4 B1 सह युद्धं; T1 G2.5 M युधि चक्रे (for महद्युद्धं). B2–4.6 D1.2 सह युद्धे (D1 शुद्धं) दृढायुधः; G1.6 रणं चक्रे सुदारुणं; G3.4 युद्धं (G4 °धि) चक्रे निरायुधः.

6 ᵃ) K3 Dn D1.2 T1 G1.3.4.6 तं (for तद्). — ᵇ) Ś1 K D6 transp. तस्य and कर्म. V1 B3–5 Dn D3–5 महात्मनः; G5 परंतप. — After 6ᵃᵇ, T1 G1.3.5.6 ins.:

288* बलं सर्वमवष्टभ्य परिचक्राम मण्डलम् ।
पोथयित्वा पुरं सर्वं सुवर्माणं ततोऽजयत् ।
[ (L. 2) G1 नृपं; G6 नृपो (for ततो). ]

— ᶜ) V1 अथ; B3 अध; B6 T1 G यु(G5 वि)धि; Cd अधि- (as in text). B3 कृत्वा (for चक्रे). — ᵈ) Ś1 K2–4 D6 S सुवर्माणं; Ñ1 सुश°. B1.2.5 D1.2 नराधिपं (for महाबलम्).

7 G1.6 om. 7ᵃᵇ. — ᵃ) M2 तत्र (for ततः). B3 प्राची-. — ᵇ) Ś1 K4 D6 प्रययौ भीमविक्रमः. — ᶜ) S ब(G6 का)लेन (for सैन्येन). K4 D6 युक्तः (for राजन्). — After 7, G4 reads 9ᶜᵈ.

8 S reads (for the first time) 8ᵃ–9ᵇ after 2, *repeating* the lines here (G1.6 read them after 2 only). — ᵃ) Ś1 सोश्वमेदेश्वरं; G1.6 अप्रमेयबलं; M1 (second time) अश्वमेधेश्वरं. T1 G2–5 M (all first time) अप्रमेयबलं राजन्. — ᵇ) K D6 महाभुजं; Ñ1 V1 B Dn D1–5 T1 G4.5 M1 (last four second time) स(D1 म)हानुगं; G3 (second time) महाबलं. — ᶜ) D1 जीगाय; G1 जगाद; G4 (second time) जगाय.

C. 2. 1067 B. 2. 29. 8 K. 2. 30. 8

जिगाय समरे वीरो बलेन बलिनां वरः ॥ ८
स तं निर्जित्य कौन्तेयो नातितीव्रेण कर्मणा ।
पूर्वदेशं महावीर्यो विजिग्ये कुरुनन्दनः ॥ ९
ततो दक्षिणमागम्य पुलिन्दनगरं महत् ।
सुकुमारं वशे चक्रे सुमित्रं च नराधिपम् ॥ १०
ततस्तु धर्मराजस्य शासनाद्भरतर्षभः ।
शिशुपालं महावीर्यमभ्ययाज्जनमेजय ॥ ११
चेदिराजोऽपि तच्छ्रुत्वा पाण्डवस्य चिकीर्षितम् ।
उपनिष्क्रम्य नगरात्प्रत्यगृह्णात्परंतपः ॥ १२
तौ समेत्य महाराज कुरुचेदिवृषौ तदा ।
उभयोरात्मकुलयोः कौशल्यं पर्यपृच्छताम् ॥ १३
ततो निवेद्य तद्राष्ट्रं चेदिराजो विशां पते ।
उवाच भीमं प्रहसन्किमिदं कुरुषेऽनघ ॥ १४
तस्य भीमस्तदाचख्यौ धर्मराजचिकीर्षितम् ।
स च तत्प्रतिगृह्यैव तथा चक्रे नराधिपः ॥ १५
ततो भीमस्तत्र राजन्नुषित्वा त्रिदशाः क्षपाः ।
सत्कृतः शिशुपालेन ययौ सबलवाहनः ॥ १६

इति श्रीमहाभारते सभापर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

K1 समये; K2 स मेदिनीं (sic); G2 (first time) स तदा. B2 धीरो. — d) Ś1 K2 वरं (K2 also वरः as in text). B1 बलेन महता वृतः.

9 For S cf. v.l. 8. — b) T1 नातीतीव्रेण. — G4 reads 9cd after 7. — c) K2 पूर्वां दिशां. V1 पूर्वदेशाधिपं संख्ये. — d) G1.6 विजित्य.

10 a) K1.3 D3.5 M2 आगत्य; B2.6 D1.2 T1 G M1 आसाद्य. — b) S प्रति (for महत्). — c) Ś1 वशी-; K2 वशं. D6 (m as in text) सुकुमारेण युद्धेन. — d) B3 सुजितं (for सुमित्रं). K2.3 जनाधिपं (K3 °प). Ś1 वसुमित्रं नराधिपं; D6 वशे चक्रे नराधिपं (m सुमंत्रं च जनाधिपं).

11 G1.6 om. 11ab. — a) T1 G2.3.5 M ततः स; G4 ततस्य. — b) Ś1 K3.4 B1–3.6 D1.3–5 भरतर्षभ; Ñ1 पांडवर्षभः; T1 G3–5 M कुरुनंदनः (G5 °न). — c) T1 G3.5 महाबाहुम्; G4 महीपालम् (for महावीर्यम्). G1.6 शिशुपालपुरं राजन्. — d) Ñ1 V1 B (except B2) D (except D6) अभ्यगाज्. G1.6 ययौ माहिष्मतीं पुरीं.

12 a) G2 चेदिराजोथ. — c) D2 (marg. *sec. m.*) भयात् (for उप-). K2.3 D6m भयान्निष्क्रम्य; K4 उपसंगम्य; D4 उपनिष्क्राम्य — d) K1.3 Ñ1 V1 Dn D3 परंतप; B1.2.6 D1.2 अरिंदमः (B1 °मं).

13 b) K1.3 V1 B2.3.6 D1.2.6m °नृपौ; K4 G2.4 °पती (for °वृषौ). G4 तथा. — c) K2.3 T1 G2.3.5 उभयो राजकुलयोः; G1.6 एतावुभावप्युभयोः; G4 उभयोस्तुष्टयो राजन्. — d) Ś1 K2.4 G2–4 कुशलं; G1.5 M कौशलं. K4 पर्यपृच्छत; B2 °तोः; D6 °तौ; G1.6 परिपृच्छतां.

14 a) B3 T1 G3 निवेश्य. Ś1 K2.4 D6 T1 G2–5 तद्राज्यं; G1.6 तं दृष्ट्वा. — b) T1 चेदीराजो; G1 चेदिराजा. — c) B1 वीरं (for भीमं). — d) K3 D3 कुरुते; S क्रियते.

15 D4 om. 15c–16d. — c) K4 Ñ1 V1 B1–5 D (except D1.6; D4 om.) स च तं; T1 G3 तत्स च; G1.6 स च तां; G4.5 तद्वचः; M1 स चाज्ञां. D3 °गृह्यैवं; T1 (corrupt) °गृह्येतु. — d) Ś1 तदा नृपं; K1 नराधिप; T1 G5 परंतपः (G5 °प).

16 D4 om. 16 (cf. v.l. 15). — a) Ś1 transp. ततो and तत्र. D1 तु तं (for तत्र). S भीमसेनस्तदा (G4 °था) राजन्. — b) Ś1 D3 T1 G1.2.4–6 M1 त्रिदश क्षपाः; G3 द्वादश क्षपाः; M2 त्रिदशस्तपाः. Cd cite त्रिदशाः (as in text). — d) Ś1 K1–3 D6 सुखी (for ययौ).

Colophon. — *Sub-parvan:* Ś1 K1–3 B6 दिग्विजय. K4 B1–5 D G1 M2 (all om. sub-parvan name) mention only भीम(K4 D6 पूर्व-; B1 पूर्वादि-; D3 G1 M2 भीमसेन)दिग्विजय; G5 likewise only भीमपूर्वदिग्विजय; M1 only भीमविजयः. — *Adhy. no.* (figures, words or both): K1 (marg. *sec. m.*) 25; K2 D3 27; K3 26 (as in text); Dn1 29; S 32. — *S'loka no.:* K2.3 Dn 16; D1.2 M1 17.

## 27

1 G1–3.6 om. the ref. — a) Ś1 कुमारविजये; V1 B3.6 कुलिंदविषये; B1.2 (m as in text) पुलिंद°; S कुणिंद°. — b) K1 श्रेणिवंतम्; T1 श्रेणीमंतम्; G1 श्रोणि°. Ś1 K1.3 B1 M2 अवाज°; B2 तथाज°; D5 (m as in text) अपूज°. — c) B1.3 कोषला°; B4.6 Dn D1–4

# २७

वैशंपायन उवाच ।
ततः कुमारविषये श्रेणिमन्तमथाजयत् ।
कोसलाधिपतिं चैव बृहद्बलमरिंदमः ॥ १
अयोध्यायां तु धर्मज्ञं दीर्घप्रज्ञं महाबलम् ।
अजयत्पाण्डवश्रेष्ठो नातितीव्रेण कर्मणा ॥ २
ततो गोपालकच्छं च सोत्तमानपि चोत्तरान् ।
मल्लानामधिपं चैव पार्थिवं व्यजयत्प्रभुः ॥ ३
ततो हिमवतः पार्श्वे समभ्येत्य जरद्गवम् ।
सर्वमल्पेन कालेन देशं चक्रे वशे बली ॥ ४
एवं बहुविधान्देशान्विजित्य पुरुषर्षभः ।
उन्नाटमभितो जिग्ये कुक्षिमन्तं च पर्वतम् ।
पाण्डवः सुमहावीर्यो बलेन बलिनां वरः ॥ ५
स काशिराजं समरे सुबन्धुमनिवर्तिनम् ।
वशे चक्रे महाबाहुर्भीमो भीमपराक्रमः ॥ ६
ततः सुपार्श्वमभितस्तथा राजपतिं क्रथम् ।
युध्यमानं बलात्संख्ये विजिग्ये पाण्डवर्षभः ॥ ७ 2. 1062 2. 30. 8 2. 31. 8

कोशला°; G कौसला°. $Ś_1$ K $D_6$ कोश($Ś_1$ °स)लानामधिपतिं. — $^d$) $B_1$ $D_6$ अरिंदमं; $D_3$ अरिंदम; $G_3$ अथापि च. $T_1$ $G_{1.2.4-6}$ M कौसल्यममितौजसं.

2 $^a$) $B_{1.2.3}$ $D_{1.2}$ च धर्मज्ञं; $D_5$ नु धर्मज्ञं; $D_3$ सुधर्मज्ञं; S महीपालं ($T_1$ $G_3$ °ल). — $^b$) $K_3$ $V_1$ $B_{4.5}$ Dn $D_5$ दीर्घयज्ञं; $D_3$ om. — $^d$) S सततं भूरिदक्षिणं.

3 $Ñ_1$ om. $3^a$–$8^b$. — $^a$) $Ś_1$ गोपालवच्छं; $K_{3.4}$ $V_1$ $B_4$ °कक्षं; Dn(!) °लक्षं; $D_{1.2}$ °कष्टं; $D_{3.5}$ °कत्वं. $V_1$ तु (for च). S गोपालकं च ($G_{1.5.6}$ °लं चैव) कौंतेयो. — $^b$) $K_4$ सोत्तरामपि; $V_1$ B D $T_1$ सोत्तरानपि. $K_3$ केरलान्; $V_1$ सोमकान्; $B_1$ कोषलान्; $B_{2.4.5}$ $Dn_2$ $T_1$ कोसलान्; $B_3$ चोत्तमान्; $B_6$ $Dn_1$ $D_{1-5}$ कोशलान्. G M ह्यंतपालं तथोत्तमं ($G_3$ °लमथोत्तरं; $G_4$ °लं तथोत्तरं). — $^d$) $G_{1.5.6}$ कौसल्यम् (for पार्थिवं). $V_1$ $B_{3-5}$ Dn $D_{3-5}$ चाजयत्; $G_{1.5.6}$ अज°; $G_4$ $M_2$ ह्यज°.

4 $Ñ_1$ om. 4 (cf. v.l. 3). — $^a$) $Ś_1$ $V_1$ $B_5$ D (except $D_{1.2}$) पार्श्वं. $B_3$ ततश्च हिमवत्पार्श्वं. — $^b$) $V_1$ B (except $B_5$) $D_{1.2}$ समासाद्य (for समभ्येत्य). $K_2$ om. from जरद्गवं up to $5^c$ (inclusive). $K_1$ $D_5$ (marg. *sec. m.*) जरंगवं; $B_{1.2}$ जरोद्गवं; $B_{4.5}$ Dn $D_{4.5}$ जलो($D_5$ °नो)द्भवं; $D_3$ जनेश्वरं. S देशान्बहुविधान्बहून्. — After $4^{ab}$, $G_{1.6}$ read $5^{cd}$. — $^{cd}$) $K_3$ $V_1$ $G_{1.4-6}$ D (except $D_6$) वशं. $Ś_1$ $K_{1.3.4}$ $B_3$ वशी (for बली). $T_1$ $G_{2-5}$ M सर्वानल्पेन यत्नेन वशे चक्रे बलाद्बली ($G_4$ °क्रे बहून्बलीन्); $G_{1.6}$ सर्वानयत्नेन वशमनयत्पांडुनंदनः.

5 $Ñ_1$ om. 5; $K_2$ om. $5^{abc}$ (cf. v.l. 3, 4). — $^a$) $Ś_1$ एवं विजित्य तान्सर्वान्; $G_{1.6}$ मागधान्बहुधा देशान्. — $^b$) $V_1$ $B_{4.5}$ Dn $D_5$ विजिग्ये; $B_{1.2.6}$ $D_{1.2}$ निर्जित्य; $D_{3.4}$ विजिज्ञे. $K_3$ $G_3$ पुरुषर्षभ; $V_1$ $B_{1.2.4-6}$ Dn $D_{1-5}$ $T_1$ $G_{1.2.6}$ M भरतर्षभः ($B_5$ $Dn_2$ °भ). $Ś_1$ बहून्पुरुषसत्तमः. — $G_{1.6}$ read $5^{cd}$ after $4^{ab}$. — $^c$) $Ś_1$ lacuna; $K_3$ उन्नादम्; $V_1$ त(read उ?)न्नाटम्; B ($B_1$ marg.) Dn $D_{4.5}$ (marg. *sec. m.*) भल्लाटम्; $B_1$ उल्लाटम्; $D_{1.2}$ मल्लारम्; $D_3$ मल्लाटम्; $T_1$ कर्णाटम्; $G_1$ कुंजागम्; $G_2$ कर्गासिम्; $G_{3-5}$ कुंतलान् ($G_3$ °म्); $G_6$ कुञ्जागम्; $M_1$ कर्णाटीम्; $M_2$ कन्मापीम्. $G_6$ आस्थितो. $K_4$ जग्ये; $D_4$ जज्ञे; $D_6$ जिज्ञे; $G_{1.6}$ जित्य. — $^d$) $Ś_1$ $B_2$ कुक्षिवंतं; $K_1$ कुक्षमंतं; $B_{1.5}$ $D_{3.5}$ कुंति°; Dn(!) $D_6$ शुक्ति°; $D_4$ कुंती°. — $G_{1.6}$ om. $5^{ef}$. — $^e$) $Ś_1$ पांडवः स महा°; $T_1$ $G_2$ पांडुपुत्रो महावीर्यो. — $^f$) = 1. 208. $10^d$: 4. 21. $48^b$. $B_{1.2.6}$ $D_{1.2}$ बलेन चतुरंगिणा.

6 $Ñ_1$ om. 6 (cf. v.l. 3). — $^a$) $D_3$ कासि°. $Ś_1$ काशिराजं च समरे; $D_{1.2}$ स काशिराजसमरे; S काशिराजं समेयाय ($T_1$ स समरे; $G_{1.6}$ विनिर्जित्य). — $^b$) $Ś_1$ संबंधम्; $K_1$ स्तुवंतुम्; $K_2$ सत्रंधूम्; $V_1$ B Dn $D_{1-5}$ $T_1$ $G_3$ सु($D_4$ स-; $D_5$ स्व)बाहुम्; $G_2$ सत्रंधुम्; $G_6$ सुबुद्धिम्. $K_2$ अभिवर्तनं (sic); $K_3$ $V_1$ अभिवर्तिनं; $Dn_1$ $G_6$ अनिवर्तनं; $G_1$ अतिवर्तिनं; $G_2$ अतिवर्तनं. $K_4$ $D_6$ सम($D_6$ °ग)रेष्वनिवर्तिनं. — $^c$) $Ś_1$ वशीचक्रे.

7 $Ñ_1$ $G_{1.6}$ om. 7 (for $Ñ_1$ cf. v.l. 3). — $^a$) $Ś_1$ *पार्श्वम्; $K_3$ तु पार्श्वम्; $K_4$ स पार्श्व°; $Dn_1$ $D_5$ स्वपार्श्व°; $M_1$ सुपार्श्वां°. — $^b$) $M_2$ तदा. $K_1$ राजमतिं; $K_3$ गजपतिं; $K_4$ पारापतिं; $G_{2.4}$ काशी°; $G_3$ राजपार्थिं. $Ś_1$ $G_2$ नृपं; $K_4$ $G_4$ कविं; $D_3$ क्रमात्; $D_4$ $G_3$ कथं; $D_6$ क्रतुं; $G_5$ कुथं; $M_1$ कृतिं; $M_2$ कृतं. $V_1$ $B_{1-4.6}$ तथा ग($B_1$ रा)जपराक्रमं ($B_4$ °मः); $T_1$ नृथं गजपतिं कृति (sic). — $^c$) $V_1$ बलं. $G_5$ $M_2$ संघे. — $^d$) $K_{2.3}$ भरतर्षभः ($K_2$ °भ); $K_4$ पुरुषर्षभः.

C. 2. 1082 B. 2. 30. 8 K. 2. 31. 8 ततो मत्स्यान्महातेजा मलयांश्च महाबलान् ।
अनवद्यान्गयांश्चैव पशुभूमिं च सर्वशः ॥ ८
निवृत्य च महाबाहुर्मदर्वीकं महीधरम् ।
सोपदेशं विनिर्जित्य प्रययावुत्तरामुखः ।
वत्सभूमिं च कौन्तेयो विजिग्ये बलवान्बलात् ॥ ९
भर्गाणामधिपं चैव निषादाधिपतिं तथा ।
विजिग्ये भूमिपालांश्च मणिमत्प्रमुखान्बहून् ॥ १०
ततो दक्षिणमल्लांश्च भोगवन्तं च पाण्डवः ।
तरसैवाजयद्भीमो नातितीव्रेण कर्मणा ॥ ११
शर्मकान्वर्मकांश्चैव सान्त्वेनैवाजयत्प्रभुः ।
वैदेहकं च राजानं जनकं जगतीपतिम् ।
विजिग्ये पुरुषव्याघ्रो नातितीव्रेण कर्मणा ॥ १२
वैदेहस्थस्तु कौन्तेय इन्द्रपर्वतमन्तिकात् ।
किरातानामधिपतीन्व्यजयत्सप्त पाण्डवः ॥ १३
ततः सुह्मान्प्राच्यसुह्मान्समक्षांश्चैव वीर्यवान् ।
विजित्य युधि कौन्तेयो मागधानुपयाद्बली ॥ १४

8 Ñ1 om. $8^{ab}$ (cf. v.l. 3). — $^{a}$) K1 तथा (for ततो). D1.2 मल्लान् (for मत्स्यान्). S ततः काशिपतिं (T1 G2.5 °पतीन्) मत्स्यान्. — $^{b}$) Ś1 सालवांश्च; K1 नलयां°; K4 पलादां°; V1 B2–4 Dn D1.2.6 मलदां°; B1 वलवां°. T1 मल्लजांश्चैव पांडवः; G1.6 मालवांश्च भ(G6 इ)योषितान्; G2 मानवानिव पांडवः; G3–5 M मालवानिह (G4 °वानपि; M2 °वांश्चैव) पांडवः. — G1.6 om. $8^{c}$–$9^{d}$. — $^{c}$) K2 अनवाद्यान्; K3 अनघान् (submetrical); D5 अनवधां; T1 अनवध्यान्; G2.3 M अनवद्यां. V1 B2–4.6 ह्यांश्चैव; G3 भयां°; G4 गाधां°. Ñ1 B1.5 Dn D3.4 अनघान(B1 °वद्या)भयांश्चैव. — $^{d}$) K3 D5.6 वसु(D6m वत्स)भूमिं; K4 मरु°; T1 पशुभूं°. G4 सर्वतः. K2 सभूमिश्चैव सर्वशः.

9 G1.3 om. $9^{abcd}$ (cf. v.l. 8). — $^{a}$) K1.2 B2 विजित्य च; K3.4 G3.5 निर्जित्य च; B1 निवर्तनं; B6 निवर्त्य च; T1 वशे चक्रे. Ś1 महावीर्यो; K1.3 महातेजा. — For $9^{b}$ and $9^{e}$ see Addenda. — $^{b}$) Ś1 मदवीर्यं; K3 D6 मदधीकं; K4 मंदवीरं; Ñ1 V1 B Dn D1–5.6m मदधा(B1 °वी)रं. T1 अटविय्यं च पर्वतं; G2 अटवीं चैव सर्वतः; G3.4 आटवीयं (G4 °यं) च पर्वतं; G5 M अटवीयं च पर्वतं. — $^{c}$) V1 सोमदेशं; B1 सोधिपांश्च; D1.2 सोपदंशं; D3 सापदेश (sic). Ś1 K1–3 Ñ1 सोमधे-(K2 सोमवे-; K3 सोमकी)यांश्च निर्जित्य; K4 सोमवेयांस्तु निर्जित्य; T1 G2.4.5 M गोपतेयांश्च निर्जित्य; G3 damaged. — $^{d}$) K4 प्रययावुत्तरां दिशं. — $^{e}$) Ś1 कर्मभूमिं; K4 वश°; B1 रत्न°; G6 मरु°. — $^{f}$) K2 विजिग्य; D6 विजिज्ञे. K बली (for बलात्). G5 विजिग्येरिबलान्बलात्.

10 G1.6 om. $10^{ab}$. — $^{a}$) Ś1 B2 भार्गाणाम्; K1.2.4 B3 D6 M गर्गा°; K3 सर्गा°; G4.5 भृंगा°. T1 गर्गाणामधिपांश्चैव; G2 गर्गानाधिपतिं चैव. — $^{b}$) Ś1 निषधाधि°. K2 D1–3.5 तदा (for तथा). — $^{c}$) D6 विजिज्ञे; T1 विजित्य. K2–4 °पालांस्तु. — $^{d}$) Ś1 G4 नृपान्; D4 वहन्.

11 $^{a}$) G2 °मद्रांश्च. — $^{b}$) D1.2 G1.2.5 M1 भोग(G2 °ज)वंतश्च; G4 भागवंतं च. V1 B3.5.6 Dn D3–5 पर्वतं (for पाण्डवः). B4 भोगमंतं च पर्वतं; T1 भोजवंतं च पांडवं. — G5 om. $11^{cd}$. — $^{c}$) D4 तरसैवांज°; T1 G2 तरस्वी चाज°; G1.6 तरसोपाज°. — $^{d}$) = $12^{f}$. K4 धर्मशर्मांश्च सात्विकान्.

12 K4 M1 om. $12^{ab}$. — $^{a}$) K1 शर्मकाश्चर्म°; V1 शकांश्च वर्म°; B1 शर्मकाच्चर्म°; B3 शकांश्च धर्म°; B5 T1 G1.6 शर्मकान्धर्म°; D3 शार्मकान्वर्म°; D4 शाङ्गकान्वर्म°; D5 शार्मकावर्म°; D6 शर्मकान्मर्म°; G2 शमकान्धर्म°; G3 गुर्मगान्धर्मगां°; G4 शर्मगांधारगां°; G5 शर्मगान्धर्मगां°. — $^{b}$) G3 damaged. B1.4 शांत्वेनैवा°; B5 शांत°; B6 शांत्व°. V1 Dn D3–5 व्यजयत्सांत्वपूर्वकं. — G1.6 om. $12^{c}$–$13^{b}$. — $^{c}$) Ś1 वैदेहाकं; K1–3 वैदेहि°; K4 विदेह°; D1.2 वेदेह°. D3 G5 वैदेहं चैव (G5 चापि) राजानं. — $^{d}$) B1.2.5.6 (m as in text) D1.2 शाल्वं च; B4 चनकं; G4 जानकं. Ś1 जानाकिं जगतीपतिः; K4 जानाकिं च महीपतिं. — $^{e}$) Ś1 विजित्य; D6 विजिज्ञे. D3.5 पुरुषश्रेष्ठो. — After 12, Ñ1 Dn (!) ins.:

289* शकांश्च बर्बरांश्चैव अजयच्छद्मपूर्वकम् ।

[ Dn1 वर्षवां°; Dn2 वर्षकां° (for बर्बरां°). Dn1 छंदपूर्वकं; Dn2 सांत्वपू°. ]

13 G1.6 om. $13^{ab}$ (cf. v.l. 12). — $^{a}$) K B3.4 D1.2 M विदेहस्थस्तु (K1 °श्च); B1 वैदेहस्थांस्तु; B5 damaged; T1 वैदेहसस्थु (corrupt); G3–5 वि(G3 °वै)देहस्थं तु. — $^{b}$) K1 चंद्रपर्व°. K4 अभ्यगात् (for अन्तिकात्). — $^{c}$) B1.6 अधिपती. S किराताधिपतीन्सप्त. — $^{d}$) Ñ1 V1 B3–5 Dn D3.5 अजयत्; D4 अज(न)यत्. T1 G2–5 M तत्र (for सप्त). G1.6 इंद्रकेतुमुखांस्ततः.

14 $^{a}$) B1 शुह्मान्; B3 सुम्मान्. Cn सुह्माः (= राढाः). Ñ1 B Dn D3.4 T1 G2.5 M प्रसुह्मां(B3 °म्मां)श्च;

दण्डं च दण्डधारं च विजित्य पृथिवीपतीन् ।
तैरेव सहितः सर्वैर्गिरिव्रजमुपाद्रवत् ॥ १५
जारासंधिं सान्त्वयित्वा करे च विनिवेश्य ह ।
तैरेव सहितो राजन्कर्णमभ्यद्रवद्बली ॥ १६
स कम्पयन्निव महीं बलेन चतुरङ्गिणा ।
युयुधे पाण्डवश्रेष्ठः कर्णेनामित्रघातिना ॥ १७
स कर्णं युधि निर्जित्य वशे कृत्वा च भारत ।
ततो विजिग्ये बलवान्राज्ञः पर्वतवासिनः ॥ १८
अथ मोदागिरिं चैव राजानं बलवत्तरम् ।
पाण्डवो बाहुवीर्येण निजघान महामृधे ॥ १९
ततः पौण्ड्राधिपं वीरं वासुदेवं महाबलम् ।
कौशिकीकच्छनिलयं राजानं च महौजसम् ॥ २० C. 2. 1096 B. 2. 30. K. 2. 31.

D6 (m as in text) प्राच्यपुत्रान्. K1 (corrupt) ततः प्राच्यसुषान् जजैह्मान्; V1 ततः शुष्कान्प्रशुष्कांश्च; D1.2 ततः सूक्ष्मान्प्रसूक्ष्मांश्च; D5 ततः सुब्रह्मान्प्राच्यास्तु; G1.6 ततः सुहृष्पसुह्मां(G6 °म्मां)श्च; G3 ततः सिंहान्प्रसिंहाश्च; G4 ततः सुमहितान्प्राह. — b) Ś1 K1-3 D6 सु(D6 स)-पक्षांश्चैव; Ñ1 T1 G1.3.5 M2 समक्षांश्चापि (G1 °ति-); V1 B4 Dn(!) सपक्षानति- (Dn2 °पि); B1 समर्थांश्चैव; B2.5m.6 D1.2 समस्तांश्चैव; B3 स यक्षानपि; B5 D4 सुपक्षानपि; D3.5 स्वपक्षानपि; G2 समकांश्चैव; G4 समक्षं चापि; G6 भीमसेनोति-; M1 सपक्षांश्चापि. B1.2.6 D1.2 पार्थिवान् (for वीर्य°). — G1.6 om. $14^{cd}$. — c) K3 यदि (for युधि). — d) G3 damaged. D4 मगधान्. K1 आययौ; Ñ1 प्रययौ; V1 B2-5 Dn1 D3 G4.5 Cn अभ्यधाद्; B1 अन्वयाद्; B6 D1.2.5 अभ्य°; Dn2 अभ्यगाद्; D4 अभ्यायाद्. T1 बलान्.

15 D1.2 om. (hapl.) 15–16. — a) B1.6 दंडांश्च. G1 दंडदरां च. — b) K4 विजित्ये; Ñ1 T1 G2.4.5 M विजिग्ये. Ś1 K4 D6 जगतीपतीन्; K1.2 V1 B3.4 G4 पृथिवीपतिं; K3 T1 G5 °पतिः; Ñ1 तरसा बली; B1.2.6 तरसा रणे; M1 पृथिवीपती. G1.6 मागधानजयत्प्रभुः. — After $15^{ab}$, Ś1 K2-4 V1 read $17^{ab}$, K2-4 V1 *repeating* it (some with v.l.) in its proper place. — c) G3.5 तथैव; G4 तदैव (for तैरेव). Ś1 K1.2 Ñ1 V1 B4.5 Dn2 D3.4.6 G2 सहितैः. — d) D4 गिरिं व्रजम्. K1 अथाद्रवत्; K3 उपागमत्; G4 °द्रवन्.

16 D1.2 om. 16 (cf. v.l. 15). — a) K1-3 D3.6 (before corr.) जरासंधिं; K4 D5 (by corr.) G2 जारासंधं. K2.4 G2.5 M साधयित्वा; B5 शांत्व°; D4 शांत°; D5m घात°; T1 साद°. G1.6 करे च विनिवेश्याशु (G6 °श). — b) K1.2 T1 G2-4 M1 च; B1 G5 सः; M2 तं (for ह). Ś1 K4 D6 करे चापि निवेश्य ह; G1.6 जरासंधिमयो(G6 °शो)जयत्. — c) G3.4 M तेनैव. Ñ1 V1 B4.5 Dn2 D4.5 सहितैः. Ñ1 V1 B Dn D3-5 सर्वैः; S पार्थः (for राजन्). — d) B5 damaged. B1.2.6 एवाभ्ययाद्; T1 G5 अभ्यगमद्; G1.6 M अभ्यागमद्. G4 कर्णावभ्यागमद्बली.

17 Ś1 K2-4 V1 read $17^{ab}$ after $15^{ab}$, K2-4 V1 *repeating* it here. — a) K2 (first time) D4 सं- (for स). V1 (first time) शकं चैव ययातिं च. — b) T1 °रंगिणां. — c) T1 पांडवः श्रेष्ठः. — d) K1-3 T1 G1.4-6 M1 °मित्रकर्शिना; Ñ1 °मित्रकर्षिणा; B1.2 °मित्रकर्षणः; D1.2 °मित्रकर्षनः; G2 °मित्रकर्शना. — After 17, Ś1 ins. (a v.l. of $16^{cd}$):

290* तैरेव सहितः सर्वैः कर्णं चाप्यजयत्प्रभुः ।;

while G1.6 ins.:

291* शिशुपालेन सहितस्तं विनिर्जित्य पाण्डवः ।

Thereafter G6 reads 20.

18 Ś1 om. 18–21; G1 om. 18–19; G6 om. $18^{ab}$. — b) K2 T1 G3-5 चक्रे (for कृत्वा). K1.3.4 D5 वीर्यवान् (for भारत). — c) K2.3 च बलान् (for बलवान्). — d) G3 राज्यं (for राज्ञः).

19 Ś1 G1 om. 19 (cf. v.l. 18). — a) K1 मौदागिरिं; K2 गोद(ति)गिरिं; K3 D6m गोदगिरिं; Ñ1 B4.5 Dn D4-6 मोदागिरौ; V1 मेदोगिरौ; B1 मोधगिरिं; B2.3.6 D1.2 मोदगिरौ. B1.2.6 D1.2 चापि (for चैव). T1 G4 अथमोधा(G4 °धं)गिरिपतिं; G2.3.5.6 M अथ मोदा(G3.5 °दं)गिरिपतिं. — b) D1.2 राजानं बलवत्तरः; S (G1 om.) राजानं वै महौजसं (T1 °सा). — After $19^{ab}$, G2.6 read $23^{c}$–$25^{b}$. — c) G4 पांडवं. B1 बहुवीर्येण; T1 G2 भुज°. — d) D3 निध्यानं च (for निजघान). T1 G2.6 मृधे तदा (T1 °तः); G3-5 महाबलः (G3 °लं) (for महामृधे). K1 निर्जित्य सुमहामृधे.

20 Ś1 om. 20 (cf. v.l. 18). — a) K4 पौंढ्र°; Ñ1 B2-5 Dn D5 G M पुंड्र°; D1.2 पौंड्र(D2 °द्रा)धिपश्च; D4 पुंद्राधिपं; D6 पौड्र°; T1 पूड्र°. B1.6 D1.2 चैव; D4 वीर; G2-5 M वीरो. D3 पुंड्राधिपं रणे वीरं. — b) D3 बाहुदेवं. D1.2 महौजसं; T1 G2 महाबलः. G1.6 वासुदेवाख्यमाययौ. — After $20^{ab}$, G1.5.6 ins.:

292* इदानीं वृष्णिवीर्येण न योत्स्यामीति पौण्ड्रकः ।
कृष्णस्य भुजसंत्रासात्करमाशु ददौ नृपः ।

भवनैः सविमानाग्र्यैः सोदर्कैर्बलसंवृतैः ।
लोकराजविमानैश्च ब्राह्मणावसथैः सह ॥ १२
कृतैरावसथैर्दिव्यैर्विमानप्रतिमैस्तथा ।
विचित्रै रत्नवद्भिश्च ऋद्ध्या परमया युतैः ॥ १३
राजभिश्च समावृत्तैरतीवश्रीसमृद्धिभिः ।
अशोभत सदो राजन्कौन्तेयस्य महात्मनः ॥ १४
ऋद्ध्या च वरुणं देवं स्पर्धमानो युधिष्ठिरः ।
षडग्निनाथ यज्ञेन सोऽयजद्दक्षिणावता ।
सर्वाञ्जनान्सर्वकामैः समृद्धैः समतर्पयत् ॥ १५
अन्नवान्बहुभक्ष्यश्च भुक्तवज्जनसंवृतः ।
रत्नोपहारकर्मण्यो बभूव स समागमः ॥ १६
इडाज्यहोमाहुतिभिर्मन्त्रशिक्षासमन्वितैः ।
तस्मिन्हि ततृपुर्देवास्तते यज्ञे महर्षिभिः ॥ १७
यथा देवास्तथा विप्रा दक्षिणान्नमहाधनैः ।
ततृपुः सर्ववर्णाश्च तस्मिन्यज्ञे मुदान्विताः ॥ १८ 2. 1306 2. 35. 19 2. 38. 21

इति श्रीमहाभारते सभापर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥ समाप्तं राजसूयपर्व ॥

G5 M स(Ś1 सा-; D1 च)विमानाग्र्यैः; K1 सविमानास्यैः (*sup. lin.* as in text); K2 D4 सविमानोग्रैः; V1 B D2 सु(D2 स्व)विमानाभैः (B1 °ढ्यैः; B1m °ग्रैः). — ) K Ñ1 V1 Dn1 D1–3.5 T1 G3.6 M सोदर्कैर्; D4 G2 सोमकैर् (for सोदर्कैर्). K1 बलिसंवृतैः; K4 घटसं°; B1 वन(m °ल)-संभृतैः; B2 धनसंभृतैः; D1.2 बलिसंभृतैः; S (G1 om.) बहुसंवृतैः. — ) K2 D4.6 लौक्यराजविमानैश्च; V1 B2–4.6 D1.2 देवा इव विमानाग्रैर् (B2 °ग्र्ये; B3.4 °ग्रे; D1 °ग्नि-); S (G1 om.) लो(G2.6 M1 लौ)क्यै राजविमानैश्च. Cd cites लोकराजाः. — ) M1 अपि (for सह). V1 B2–4.6 D1.2 ब्राह्मणास्तत्र संस्थिताः (B2.6 संश्रिताः; D1 संशत; D2 संसिताः).

13 G1 om. 13 (cf. v.l. 10). — ) B2–4.6 D1.2 ब्राह्मणा° (for कृतैरा°). — ) K1.2 B3–5 D1.2.4 T1 G2.5 M2 तदा (for तथा). — ) K3 B1–3.6 D2.4 त्रिचित्र-. K2 D1.4 रत्नवि(D4 °वे)द्भिश्च. — ) G4 बुद्ध्या (for ऋद्ध्या). V1 वृतैः (for युतैः).

14 G1 om. 14 (cf. v.l. 10). — ) K2 राजतै- (also °भि)श्च. G4.5 श्री- (for च). Ś1 B5 समावृतैर्; K1–3 Ñ1 D4 महावृत्तैर्; B1.2 D1.2 परा°; S (G1 om.) समानीतैर्. — Cd cites 14 entirely as in text. — ) Ś1 M1 महा-; K1 V1 B1.2.4.5m.6 D1–3.5 G2.6 तदा; K2 D4 सभा; K3 सदा; T1 G3–5 ततो; Cd (as in text) सदः (=सभा). M1 -राज (for राजन्). — ) B2.5.6 D1.2 महामखः; T1 G3–5 °ध्वरः; M1 °क्रतुः; Cd as in text. B4 नक्षत्राधिपतिर्यथा.

15 ) Ś1 न; Ñ1 V1 B3–5 D2 तु; D5 नु; Cd च (as in text). G6 देवः (for देवं). — ) V1 यत्राग्निनाथ; D3m वितिषट्केन (gloss); T1 ऋषज्ञीनथ (sic); G2.5 षडग्नीनथ; Cv as in text. Cd cites षडग्निना (as in text). K2.3 B1.2.6 D1.2 G1 च (for [अ]थ). — ) M2 [ऽ]यमद् (for ऽयजद्). D1 दक्षिणावतां; G6 °वृतान्. — ) K4 सर्वाजनान्; B D1–3.5 सर्वं जनं. V1 सदा कामैः. D6 सर्वाञ्जनपदान्कामैः. — ) G4 संवृद्धैः (for समृ°).

16 ) D5 (by corr. *sec. m.*) अन्नादी. Some MSS. बहुभक्षः; D3 (before corr.) °भक्ष्यैः; G4 °दक्षः. M2 [अ]थ (for च). G1 अन्नवन्बहुभक्षांश्च. — ) D5.6 मुक्तवज् (for भु°). B1 G5 °नसंभृतः. G1 भोक्तव्यं जनसंवृतः; G2 भुक्तः सज्जनसं°. Cv as in text. — ) Ś1 रत्नोपहारः कर्मण्यो; K1 रत्नोपकार°; K2 D4 रभोपहार°; K3 रत्नापहारकर्मण्या; K4 B Dn D1–3.5 G3 रत्नोपहार(B1 °चय)संपन्नो; D6 °हारकर्माणो; G1 अन्नोपहानकर्मम्यो; G6 रत्नोपहारकरणे; Cd.v as in text. Cnp रक्षोपहारकर्मण्यो (gloss रक्षसां नाशे साधुना कर्मणा युक्तः). — ) T1 G4.5 महानृपः; G2 समागतः.

17 Ś1 om. 17. — ) K1 G3.4 M1 इडाज्य(K1 °थ)सो(G4 °सा)माहुतिभिर्; K2 इडोज्यहोमा°; V1 B D1.2 तिलाज्यहोमा°; D5 (by corr.) ईज्याहोमा° (sic); T1 G5 इध्माज्यसोमा°; G2 इळानसोमानाहुतिर्; G6 इळान्नसोमाहुतिभिर्; M2 इळाज्यहामा Cd cites इडा. — ) K1.2 D4 मंत्रशिष्या- (K2 °ष्यान्); B1 °शिख्या°; G5 मंत्राक्षर- (for मन्त्रशिक्षा-). K B5 Dn D3–6 -विशारदैः; Ñ1 B4 -समाहितैः. — ) B1 तस्मिंस्तु; B2 हुतेग्नौ; T1 G3–5 तस्मिन्वै; G1 यथोक्तैस्; G2.6 M2 तस्माद्धि (for तस्मिन्हि). — ) K1 भूते; K3 D6 S (except M1) ततो (G1 तस्मिन्); D1.4 सूते (for तते). K3 D3 G3 यज्ञ-; G6 यज्ञि (for यज्ञे). K2 सूतयज्ञो (for तते यज्ञे). K1 V1 B (except B5) D3.5 मनीषिभिः; M1 सहर्षिभिः.

18 ) B2.6 D1.2 दक्षिणानां; D3.5 S °णाभिर् (for °णान्न-). — ) D2 ससवर्णाश्च. — ) K2 D4 यज्ञे तस्मिन्

# ३३

C. 2. 1307 B. 2. 36. 1 K. 2. 39. 1 वैशंपायन उवाच ।
ततोऽभिषेचनीयेऽह्नि ब्राह्मणा राजभिः सह ।
अन्तर्वेदीं प्रविविशुः सत्कारार्थं महर्षयः ॥ १
नारदप्रमुखास्तस्यामन्तर्वेद्यां महात्मनः ।
समासीनाः शुशुभिरे सह राजर्षिभिस्तदा ॥ २
समेता ब्रह्मभवने देवा देवर्षयो यथा ।
कर्मान्तरमुपासन्तो जजल्पुरमितौजसः ॥ ३
इदमेवं न चाप्येवमेवमेतन्न चान्यथा ।
इत्यूचुर्बहवस्तत्र वितण्डानाः परस्परम् ॥ ४
कृशानर्थांस्तथा केचिदकृशांस्तत्र कुर्वते ।
अकृशांश्च कृशांश्चक्रुर्हेतुभिः शास्त्रनिश्चितैः ॥ ५
तत्र मेधाविनः केचिदर्थमन्यैः प्रपूरितम् ।
विचिक्षिपुर्यथा श्येना नभोगतमिवामिषम् ॥ ६
केचिद्धर्मार्थसंयुक्ताः कथास्तत्र महाव्रताः ।

(by transp.). K2.3 D4 मुदा युताः; G1 महात्मनः.

Colophon. — *Sub-parvan:* N (except Dn!) G1 M1.2 राजसूय. — *Adhy. name:* M2 परिकर्मनियोगः. — *Adhy. no.* (figures, words or both): K1.3 D4 (marg. *sec. m.*) 32 (as in text); K2 D3 33; Dn1 35; S 42. — *S'loka no.:* K3 D1.2 20; Dn 19; M1 25.

## 33

1 a) Ś1 K1–3 B5 D1.2.4 Cd °नीयेन; Ñ1 B2.3.5m.6 °नायैव; V1 °नीये च; B1 M2 °नीये तु (for °नीयेऽह्नि). D3.5 तमाभिषेचनीये च. ❀ Cd: अभिषेचनीयेन युधिष्ठिरेणेति शेषः । अथ वा अभिषेचनीयं अभिषेचनं तेन हेतुना ।❀ — b) Ś1 ब्राह्मणै. K1 समं (for सह). — c) K1.2 D4 S (except M1) Cv अंतर्वेदिं; K4 Dn2 D2.3 °र्वेदी; B6 °र्वेद्यां; Cd as in text. — d) K1 सत्कारार्थैं; K3 सत्कार्थं च; Ñ1 Dn D1.6 (m as in text) सत्कारार्हां; S स(M सा)दस्यार्थं (G3 °श्च; G4 °र्थैं).

2 a) B5 तस्या; G3 तस्य (for तस्याम्). — b) B1 S महर्षयः (for महात्मनः). — c) K2 V1 D4 समानीताः; K3 समानीतैः; G4 सहासीनाः. — d) B D1.2.5.6 (before corr.) तथा (for तदा). T1 G3–5 तत्र वै राजभिः सह; G1.2.6 M तत्र (G1 °दा) राजर्षिभिः सह.

3 a) K2 ब्रह्मवदने; B2.5.6 D1–3.5 °सदने. — b) Ś1 K2.3 D4 देव-; T1 G3–5 देवैर् (for देवा). K4 B4–6 D3.5 M1 देवर्षिभिर् (for °र्षयो). Ñ1 V1 B3 Dn तथा (for यथा).

4 a) K1.3 इदमेव; Ñ1 V1 B2–6 G M Cn (!) एवमेतन्; T1 एवमेवं. K2 वा (for च). D2.3.5 एवमेतन्न वाप्येव(D2 °चाप्येत)म्; K4 एवमेतं न वाप्येदम्; D1 एवं ते तत्र चाप्येवम्. — b) K1 G1 एवमेव; K4 B4 एवमेवं; Ñ1 V1 B2.3.5.6 Dn1 D3.5 T1 G3–5 M एवं चैतन्; B1 D2 एवं चैव. K1 वान्यथा. D1 एवं वै तत्र नान्यथा; G2 एवमेवान्यथान्यथा; G6 एवं चेदन्यथा यथा. — c) K4 B1.4 Dn1 D6 प्रत्यूचुर्. — d) Ś1 विवृण्वानाः; Ñ1 V1 B2–6 D1.3.5 वितंडां (Ñ1 V1 D3 °डा) वै; B1 T1 G3.5 वितंडा(G3 °डां)श्च; G1.2 वितंडानां (G2 °नः); M2 वितन्वानाः. Cd.v as in text (Cv gloss वितंडावादं कुर्वंतः); Cn cites वितंडां. K4 Dn (!) D6 वितंडा(K4 °तडं)वादिनो द्विजाः.

5 a) K1 कृतान्; Cd कृशान् (as in text). K2 अर्चांस्; D1.2 अन्यांस् (for अर्थांस्). K4 Ñ1 V1 B1.2.4.6 Dn D1.2.6 ततः; T1 G1.3.5 M तदा (for तथा). — b) K1 अकृतांस्; K4 G2 अकृशा(K4 °सा)स् (for अकृशांस्). Cd cites तत्र (as in text). B1 अकृशांश्चक्रिरे मिथः. — c) G3 चक्रे; M1 चक्रार् (sic). K1 अकृतांश्च कृतांश्चैव; B1 अकृषांश्च कृषांश्चकुर्; D3 अकृशांश्चकुर्हेतुभिः; G1 कृशांश्चैव कृशांस्तत्र. — d) G4 बहुभिः (for हेतु°). K3.4 B1 Dn D6 शास्त्रनिश्चयैः. D3 सर्वशास्त्रविनिश्चितैः.

6 a) K4 Dn (!) D6 अर्थं; G6 अत्र; Cn तत्र (as in text). — b) K4 तत्र; D1.2 अन्यम् (for अर्थम्). Dn (!) D6 अनुमानैः (for अर्थमन्यैः). K4 V1 B2–6 D1–3.5 उदी(D2 °क्षी)रितं; Cd (as in text) प्रपूरितं (=समर्थितं). — c) G1 विचिक्षेपुर्; Cd as in text. B3 तथा (for यथा). K1 सेनो; D1 G1.2.4 श्येनो (G1 °न); D4 सेना (for श्येना). T1 (corrupt) विचिविक्षिप्ययथा श्येना.

7 a) Ś1 केचिदुन्मार्गकुशलाः; K2–4 Dn D4.6 °द्धर्मार्थकुशलाः. — b) K4 Dn (!) D6 केचित् (for कथास्). G1 प्रभाषिरे; G2 महाप्रभाः; G6 °त्मनः (for °व्रताः).

रेमिरे कथयन्तश्च सर्ववेदविदां वराः ॥ ७
सा वेदिर्वेदसंपन्नैर्देवद्विजमहर्षिभिः ।
आबभासे समाकीर्णा नक्षत्रैर्द्यौरिवामला ॥ ८
न तस्यां संनिधौ शूद्रः कश्चिदासीन्न चाव्रतः ।
अन्तर्वेद्यां तदा राजन्युधिष्ठिरनिवेशने ॥ ९
तां तु लक्ष्मीवतो लक्ष्मीं तदा यज्ञविधानजाम् ।
तुतोष नारदः पश्यन्धर्मराजस्य धीमतः ॥ १०
अथ चिन्तां समापेदे स मुनिर्मनुजाधिप ।
नारदस्तं तदा पश्यन्सर्वक्षत्रसमागमम् ॥ ११
सस्मार च पुरावृत्तां कथां तां भरतर्षभ ।
अंशावतरणे यासौ ब्रह्मणो भवनेऽभवत् ॥ १२
देवानां संगमं तं तु विज्ञाय कुरुनन्दन ।
नारदः पुण्डरीकाक्षं सस्मार मनसा हरिम् ॥ १३
साक्षात्स विबुधारिघ्नः क्षत्रे नारायणो विभुः ।
प्रतिज्ञां पालयन्धीमाञ्जातः परपुरंजयः ॥ १४
संदिदेश पुरा योऽसौ विबुधान्भूतकृत्स्वयम् ।
अन्योन्यमभिनिघ्नन्तः पुनर्लोकानवाप्स्यथ ॥ १५
इति नारायणः शंभुर्भगवाञ्जगतः प्रभुः ।
आदिश्य विबुधान्सर्वानजायत यदुक्षये ॥ १६
क्षितावन्धकवृष्णीनां वंशे वंशभृतां वरः । C. 2. 1322 B. 2. 36. 17 K. 2. 39. 17

— c) D4 रेमिरे कथयस्तत्र (sic). — d) Ś1 K2.3 Dn D4.6 सर्वभाष्यविदां; Ñ1 V1 B2–4.6 D1.2 T1 G5 सर्वे वेद°.

8 a) K2.4 वेदैर्; B (except B5) D1–3.5 वेदी (for वेदिर्). K4 वेदसंपन्ने. — b) Ś1 देवैर्द्विजमहर्षिभिः; K1 देवद्विजमनीषिभिः; S महर्षिद्वि(G1 °हर्ष्विद्वि)जपार्थिवैः. — c) B1.6 आबभाषे; B5 आविभागे; Dn D4 अव(or °ब)-भासे. — d) K4 नक्षत्रे. Dn1(!) D6 °रिवायता; G4 °रिवामरा. Ś1 रत्नैर्द्यौरिव निर्मला.

9 a) Ś1 M1 तस्याः; T1 G M2 °स्य (for °स्यां). Ś1 शूराः (for शूद्रः). — b) D8 अस्यां (for आसीन्). B5 उताव्रती (m न वाव्रती) (for न चाव्रतः). K1 वाव्रतः; K2 चाहतः; K4 B1–3 Dn D1–3.5.6 चाव्रती (D5 marg. sec. m. ब्राह्मणः); B6 चाब्रवीत्; D4 चानृतः. G4 कश्चिदासीदनावृतः. — c) Ś1 अंतर्वेद्यास्; K4 G1 M1 °द्या. V1 ततो राजन्; B6 D1.2 तथा राजन्; S महाराज. — d) K3 °निवेशनं.

10 a) G2.6 च (for तु). G1 लक्ष्मीयुतो. K3 नित्यं (for लक्ष्मीं). — b) S (except M2) तथा (for तदा). B5 यज्ञविधानतां; G1 °वितानजां. — d) Ś1 पश्यतः; K1 धीमतेः (for धीमतः).

11 Cd cites 11ab entirely as in text. — b) D1 स पुनर्; D6 स मन्युर्; G1 स ऋषिभिर् (hypermetric). K1.4 D1 T1 G3 मनुजाधिपः; D6 °धिपान्. — c) K2.3 D3.4 नारदस्तत्; K4 B1 Dn D6 S °दस्तु. V1 B3.5.6 D3.5 G2.6 तथा; B3 सदा (for तदा). D2 प्रापत् (for पश्यन्). Ś1 नारदस्तत्र चापश्यत्. — d) K3 सर्वक्षेत्र°; G1 °क्षत्रसमागमान्; G4 °गतं.

12 a) G1 स मस्मार. K1 पुरावृतां; K2.3 D3 पुरां(K3 परा-)वृत्तां; K4 D6 G4.6 पुरावृत्तं (D6 °वृत्तान्); B3 प्रवावृत्तां (sic). — b) K4 कथं तां; D6 कथितान् (for कथां तां). K3 G1 भरतर्षभः; V1 B1.3.5 Dn D3.5 T1 G2–5 पुरुषर्षभ(G5 °भः); B2.6 D1.2 मनुजाधिप (D1 °पः); B4 मनुजर्षभ. G3 तं तं भरतसत्तम. — c) K1.3.4 D2.6 T1 G योसौ; K2 D4 वासौ; V1 या तु; B2.5.6 D1–3 M या सा; B3.4 पूर्वं; D5 राज्ञां (for यासौ). — d) K1.2 D4.6 ब्राह्मणो; G1 ब्रह्मण्यो. G6 भुवने.

13 a) Ś1 संविदं; B1 शंकरं; G1 M संगरं; G2.6 संभवं; G5 संगमे. Ś1 तांस्तु; G4 तत्तु. — b) K4 D1.2 कुरुनंदनः; B1 यदुनंदनं. — c) K3.4 नारद (sic). K4 D4 पुंडरीकाक्ष. — d) S जगाम (for सस्मार).

14 a) B2.5.6 D1–3.5 G2.6 transp. साक्षात् and स. G4 स्व- (for स). K2 D4 विविधारिघ्नः. — b) K1 D3.4 G2 क्षेत्रे; K4 M2 क्षे(M3 क्ष)त्रं; D5 (by corr.) क्षात्रे; T1 G1.3–6 M1 क्षितौ; Cd as in text. K3 नारायणे. Ś1 G1 हरिः; K3 V1 B D1–3.5 प्रभुः (for विभुः). — c) B5 प्रतिज्ञापालनं; M3 °ज्ञां धारयन्. K2.3 D4 श्रीमान्; Ñ1 Dn(!) D6 चेमां; T1 धामां (for धीमान्). — d) T1 जातं; Cd as in text.

15 a) G1 पुरं. — b) Ś1 विबुधा; D4 विवि[धा]न्. — c) K1 °मपि निघ्नंतः; K3 °मभिमिघ्नंत. — d) G6 लोकमवा°.

16 a) K4 देवो; B2 शंभुं. Cd cites शंभुं (=ब्रह्माणं). — b) B (except B3) D1–3.5 भूतभावनः; M1 जगतः पतिः (for जगतः प्रभुः). — c) D4 G5 आ(D4 अ)दिश्य; G4 आविश्य. G1 भगवान् (for विबुधान्). — d) G1 अवतीर्य (for अजायत). S यदोः कुले; Cd.n (as in text) यदुक्षये (=यदुगृहे). D4 निजायत्तत्तदुक्षये (corrupt).

17 a) K3 क्षितो बंधूकदृष्णीनां (corrupt); D2 स्थितावंधक°. — b) M1 वंश- (for वंशे). B6 D3.5 वंशवतां.

C. 2. 1322 B. 2. 36. 17 K. 2. 39. 17 परया शुशुभे लक्ष्म्या नक्षत्राणामिवोडुराट् ॥ १७
यस्य बाहुबलं सेन्द्राः सुराः सर्व उपासते ।
सोऽयं मानुषवन्नाम हरिरास्तेऽरिमर्दनः ॥ १८
अहो बत महद्भूतं स्वयंभूर्यदिदं स्वयम् ।
आदास्यति पुनः क्षत्रमेवं बलसमन्वितम् ॥ १९
इत्येतां नारदश्चिन्तां चिन्तयामास धर्मवित् ।
हरिं नारायणं ज्ञात्वा यज्ञैरीड्यं तमीश्वरम् ॥ २०
तस्मिन्धर्मविदां श्रेष्ठो धर्मराजस्य धीमतः ।
महाध्वरे महाबुद्धिस्तस्थौ स बहुमानतः ॥ २१
ततो भीष्मोऽब्रवीद्राजन्धर्मराजं युधिष्ठिरम् ।
क्रियतामर्हणं राज्ञां यथार्हमिति भारत ॥ २२
आचार्यमृत्विजं चैव संयुक्तं च युधिष्ठिर ।
स्नातकं च प्रियं चाहुः षडर्घ्यार्हान्नृपं तथा ॥ २३
एतानर्हानभिगतानाहुः संवत्सरोषितान् ।
त इमे कालपूगस्य महतोऽस्मानुपागताः ॥ २४
एषामेकैकशो राजन्नर्घ्यमानीयतामिति ।

— $^{c}$) G1 श्रीमान् (for लक्ष्म्या). — $^{d}$) K1 °मिवोंडुराट्द (corrupt, but significant); K2–4 D4 °मिवेंदुराट्.

18 $^{a}$) D1.4 बाहुबलस्सें(D4 °सें)द्राः. T1 G3–6 M सर्वे; G2 सर्वं (for सेन्द्राः). — G2 om. $18^{b}$–$19^{c}$. — $^{b}$) K3 नित्यं; D1 सदा; D2 शूराः (for सुराः). D4 सर्वम्; S (except G1; G2 om.) सेंद्रा (for सर्वं). — $^{c}$) V1 B3.6 D1.2 मानुषदेहेन (V1 also °देहस्थ-); B1 S (G2 om.) °रूपेण; B4 °देहस्तु (for °वन्नाम). Cd cites (as in text) नाम (=स्फुटं). — $^{d}$) K2.3 D4 S (except G5; G2 om.) जनार्दनः (for ऽरिमर्दनः).

19 G2 om. $19^{abc}$ (cf. v.l. 18); G3 om. 19. — $^{a}$) K1 महद्रूपं. — $^{b}$) G6 M2 स्वयंभुर्. B2 यमिदं; G1 यत्तदा (for यदिदं). D4 om. from इदं up to उपनीतां (inclusive) in $18^{b}$ of the next adhy. — $^{c}$) B5 प्रादास्यति; G4.6 आधा°; Cd आदा° (as in text). Cv as in text, but gloss: दो अवखंडन इति धातोः आ समन्तात् संहरिष्यति. — $^{d}$) Ñ1 V1 B2.3 G1 बलसमन्वितः; M1 बहुसमन्वितं.

20 D4 om. 20 (cf. v.l. 19). — $^{b}$) K1.2 Dn1 सर्वे° (for धर्म°). — $^{c}$) K2 D3 हरि-. Ś1 K1 D3.6 ध्यात्वा; K3 कृत्वा; V1 मत्वा (for ज्ञात्वा). — $^{d}$) Ś1 B3 D2.6 G3.6 Cv यज्ञैरिज्यं (Cv gloss पूजायोग्यं); K4 Ñ1 V1 B1.2.4–6 Dn D1.5 M2 °रीज्यं; D3 यज्ञेराजं; T1 यज्ञैरिड्यं; G1 °रीड्य. K1 महेश्वरं; K2.3 B3 अधीश्वरं (for तमी°).

21 D4 om. 21 (cf. v.l. 19). — $^{a}$) K3 धर्मवतां; K4 D6 °विदः; Ñ1 V1 B3 G1 °भृतां (for °विदां). K4 D6 श्रेष्ठ (for श्रेष्ठो). — K3 om. $21^{c}$–$22^{b}$. — Cd cites $21^{cd}$ entirely as in text. — $^{c}$) T1 G1.2.6 M1 महाबाहुस्; G3–5 °तेजास्; M2 °बाहो (for °बुद्धिस्). — $^{d}$) Ś1 बहुमानितः; T1 G2 M °मानवान्; G1.3–5 °मानवित् (G5 °वत्); G6 °मा * * न्; Cd as in text. — After 21, S ins. an addl. colophon (*adhy. no.:* 43), followed by a passage given in App. I (No. 18).

22 D4 om. 22 (cf. v.l. 19); K3 om. $22^{ab}$ (cf. v.l. 21). — Before 22, S ins. वैशं°. — $^{b}$) Cd धर्मपुत्रं (for °राजं). B1.2.6 D1.2 इदं वचः (for युधि°). — K4 om. $22^{c}$–$23^{b}$. — $^{c}$) K1 D5 M2 अर्हणां; B D2 M1 अर्हणा; D1 अर्हण- (sic); D3 अर्हणो (for अर्हणं).

23 D4 om. 23 (cf. v.l. 19); K4 om. $23^{ab}$ (cf. v.l. 22). — $^{a}$) B3.5 D2 ऋत्विजश्चैव; G1 ऋत्युजं चैव. — $^{b}$) B2.4.5.6 (m as in text) Dn D3.5 G1.5 संयुजं; D2 विवाह्यं; G3 पितरं; Cd.v संयुक्तं as in text (gloss: Cd विवाहेन संयुक्तं, Cv तत्काले आगतमतिथिं). G1.5 तं (for च). B2.4 D1.2 युधिष्ठिरः; G3 °रं. — $^{c}$) B5 (m as in text) नृपं (for प्रियं). Ś1 K3 बाहुः; K4 Ñ1 Dn D6 G6 M1 प्राहुः; V1 B (B5 marg.) D1–3.5 चैव (for चाहुः). — $^{d}$) Ś1 षडर्घ्यार्हान्; K1.2 D5 °र्घार्हा; K3 °र्घ्यार्हान्; K4 °र्घ्यार्हां; Ñ1 B5m °र्घार्हान्; Dn D3.6 °र्घ्यार्हा; G4 तदर्घ्यार्हान् (for षडर्घ्यार्हान्). K2 नृपस्; B1 G3 नृपास्; M नृपांस् (for नृपं). B1.2.5m D1.2 ततः (for तथा). V1 वीर्यश्रेष्ठे च पंडितान्; B3 षडर्घ्यार्हान्नृपतींस्ततः (hypermetric); B4.6 संहर्षा(B6 षडर्हा)न्नृपतींस्ततः; B5 वीर्यश्रेष्ठं च पंडिताः; D1.2 षडर्हान्नृपति(D2 °तीं)स्ततः.

24 D4 om. 24 (cf. v.l. 19). — $^{a}$) K1 एताम् (for एतान्). K4 V1 B3–6 Dn D3.5 अर्घ्यान् (for अर्हान्). K1.3 B1 अभिमतान्; B2 °हितान्; G5 अधिगतान्. M2 एतानर्घ्यार्हकानाहुः. — $^{b}$) G1.2 M परि-; G3.5 बहु- (for आहुः). D1.2 संवत्सरोषिताः. — G1 om. $24^{cd}$. — $^{c}$) K4 D6 कालयुक्तस्य; B1 [ऽ]भ्यागता राजन्; B2–4.5m D1.2 T1 राजसूयस्य (D2 °श्र); D1 (before corr.) राजसूर्यस्य. — $^{d}$) B1.5 G2.6 °नुपागतान्.

25 D4 om. 25 (cf. v.l. 19). — $^{a}$) Dn1 एतेषामेकशो; G2 एषामेकैकतो. — $^{b}$) K1–3 अर्घम्; K4 Ñ1

अथ चैषां वरिष्ठाय समर्थायोपनीयताम् ॥ २५

युधिष्ठिर उवाच ।

कस्मै भवान्मन्यतेऽर्घ्यमेकस्मै कुरुनन्दन ।
उपनीयमानं युक्तं च तन्मे ब्रूहि पितामह ॥ २६

वैशंपायन उवाच ।

ततो भीष्मः शांतनवो बुद्ध्या निश्चित्य भारत ।
वार्ष्णेयं मन्यते कृष्णमर्हणीयतमं भुवि ॥ २७
एष ह्येषां समेतानां तेजोबलपराक्रमैः ।
मध्ये तपन्निवाभाति ज्योतिषामिव भास्करः ॥ २८
असूर्यमिव सूर्येण निवातमिव वायुना ।
भासितं ह्लादितं चैव कृष्णेनेदं सदो हि नः ॥ २९
तस्मै भीष्माभ्यनुज्ञातः सहदेवः प्रतापवान् ।
उपजह्रेऽथ विधिवद्वार्ष्णेयायार्घ्यमुत्तमम् ॥ ३०
प्रतिजग्राह तत्कृष्णः शास्त्रदृष्टेन कर्मणा ।
शिशुपालस्तु तां पूजां वासुदेवे न चक्षमे ॥ ३१
स उपालभ्य भीष्मं च धर्मराजं च संसदि ।
अपाक्षिपद्वासुदेवं चेदिराजो महाबलः ॥ ३२ C. 2. 1337 B. 2. 36. 32 K. 2. 39. 52

इति श्रीमहाभारते सभापर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

V1 Dn D6 अर्घं; G2 अर्घ्यं (for अर्घ्यम्). Ñ1 B4 इह (for इति). B1–3. 5. 6 D2. 3. 5 अर्घः (B2. 6 D3 °र्घ्यः) समुपनी(B5 दी)यतां; D1m तदर्घमुपनीयतां. — $^{c}$) D4 इति (for अथ). Ś1 K4 B2. 3. 6 D2 T1 M1 अथ वैषां; K1 अथ तेषां; B5 D3. 5 अथैषां च (for अथ चैषां). K2 वरिष्ठायां; S वरिष्ठो यस्. — $^{d}$) S तस्यार्घ्य(G1 °र्घ)-मुपकल्प्यताम्.

26 D4 om. 26 (cf. v.l. 19). — $^{a}$) K3 यस्मै. D3. 5 S [ऽ]र्घ्यम्. K2 यस्मै भगवान्मन्येर्घम्. — $^{b}$) G2 अमुष्मै (for एकस्मै). — $^{c}$) Hypermetric! S आनीयमाने (G3 °नो). V1 युक्तं यत्; B1. 3. 4 संयुक्तं; D3. 5 तद्युक्तं (for युक्तं च). — $^{d}$) Ñ1 V1 तन्नो; T1 तस्मिन् (for तन्मे).

27 D4 om. 27 (cf. v.l. 19). — $^{b}$) Ś1 K Dn D6 वीर्यवान् (for भारत). — $^{c}$) G1 वार्ष्णेय. M2 अब्रवीत् (for मन्यते). K4 कृष्ण. V1 B4–6 D3. 5 अमन्यत तदा कृष्णम्; G2 वार्ष्णेयं कृष्णं मन्यस्व; G6 कृष्णं मन्यस्व वार्ष्णेयम्. — $^{d}$) K3 अर्हणीयसमं; K4 B1 Dn D6 पूजनीयतमं; Cn as in text. K2 विभुं (for भुवि). S अर्हणीयमरिंदमः (T1 G2. 3. 6 °म; G1. 4 °मं).

28 D4 om. 28 (cf. v.l. 19) — Before 28, T1 ins. भीष्मः. — $^{a}$) K2 एषां ह्येषां; D6 एतह्येषां (sic); T1 येषु ह्येषां; M2 एह्येतेषां. K1. 4 B D (D4 om.) T1 समस्तानां (for समे°). V1 एषां तु समवेतानां. — $^{b}$) G3 °पराक्रमं. — $^{c}$) Dn1 तिष्ठन्निव; G6 तमस्विव; Cn तपन्निव (as in text). — $^{d}$) B1. 2. 5. 6 D1–3. 5 भानुमान् (for भास्करः). K1 G3–5 M ज्योतिषां रवि(G3 पति)रंशुमान् (= Gītā 10. 21$^{b}$); Ñ1 ज्योतिषा रविरंशुभिः; T1 G2. 6 तेजसा रविरंशुमान्; G1 ज्योतिषां रविरिवाबभौ (hypermetric).

29 D4 om. 29 (cf. v.l. 19). — $^{a}$) G1. 5. 6 आसूर्यम्. — $^{b}$) K (except K2) Dn D1m. 6 T1 निर्वातमिव; D1 (before corr.) विवातमिव; G1 तपंतमिव; Cn निवा° (as in text). — $^{c}$) K3 B3. 5. 6 भाषितं; Dn1 भासिनं; G1 हासितं (for भासितं). G1 हासितं; G6 ह्रादितं (for ह्लादितं). B1 भीतिसंह्लादितं चैव. — $^{d}$) D3 G4 सदा (for सदो). Ś1 हि वः; K2 ·हिनीः; D3 ·हि नाः; G1 हितः; G4 [ऽ]द्य सः; (for हि नः).

30 D4 om. 30 (cf. v.l. 19). — $^{a}$) K1–3 ततो; K1 तस्माद् (for तस्मै). D2 भीष्माद्यनुज्ञातः. — G4 om. from 30$^{cd}$ up to line 2 of 349*. — $^{c}$) K1 उपयज्ञे; K4 V1 B3. 4 D3. 5 उपाजह्रे. S (G4 om.) च (for ऽथ). — $^{d}$) K1. 4 V1 B1. 3 Dn D1. 2. 6 M1 [अ]र्घम् (for [अ]र्घ्यम्). K3 वार्ष्णेयापार्थमुत्तमं. — S ins. after 30 (G4, which om. 30$^{cd}$ with lines 1–2 of the foll. passage, ins. after 30$^{ab}$):

349* गामर्घ्यं मधुपर्कं चाप्यानीयापाहरत्तदा ।
चरणावस्पृशच्छौरेः सहदेवो विशां पते ।
केशवश्चाप्युपाघ्राय मूर्ध्नि शस्त्रभृतां वरः ।
सहदेवमथोवाच कच्चिद्वः कुशलं गृहे ।

[ (L. 1) G6 M2 °र्कं च ह्यानीया°. — (L. 2) T1 M2 नाम; G6 नाम्ना (for शौरेः). — (L. 3) G4 उपजह्रे स गोविंदं (for the prior half). ]

— G1. 3–6 (G4 om. line 2) cont.:

350* सोऽपि तं तु तथेत्याह सर्वं ननु तवाज्ञया ।
एतस्मिन्नन्तरे राजन्निदमासीद्यथाद्भुतम् ।

# ३४

C. 2. 1338
B. 2. 36. 32
K. 2. 40. 1

शिशुपाल उवाच ।
नायमर्हति वार्ष्णेयस्तिष्ठत्स्विह महात्मसु ।
महीपतिषु कौरव्य राजवत्पार्थिवार्हणम् ॥ १
नायं युक्तः समाचारः पाण्डवेषु महात्मसु ।

[ (L. 1) G1.3 सर्वा (for सर्वे). G6 नस्तु (for ननु). — (L. 2) G6 तदा (for अथ). ]
— G1.3-6 cont.: T1 G2 M ins. after 349*:

351* तां दृष्ट्वा क्षत्रियाः सर्वे पूजां कृष्णस्य भूयसीम् ।
संप्रेक्ष्यान्योन्यमासीना हृदयैस्तामधारयन् ।

[ (L. 1) G4 तं; G6 तद् (for तां). — (L. 2) T1 G6 प्रेक्षान्योन्यमथासीना (for the prior half). ]

31 D4 om. 31 (cf. v.l. 19). — a) G4 इति (for प्रति-). K B (except B5) D1-3.5 Cd तं; S तां (for तत्). G3 पूजां (for कृष्णः). — b) B2 शास्त्रदिष्टेन. — c) D1 Cd तदा (for तु तां). — d) D2 Cd (corrupt) चक्ष्महे.

32 D4 om. 32 (cf. v.l. 19). — a) B5 D3.5 T1 G1 उपा(G1 °प)लभ्य च; G2-6 M उपालभ्य स (by transp.). — c) K4 अथोक्षयद्; Ñ1 M Cd (one MS.; the other as in text) अवाक्षि°; Dn D6 G4 अयाक्षि°; Cn as in text. Ś1 अक्षिपद्वासुदेवं च; K2 T1 G2 आक्षिपद् (G2 आक्षिप्य) वासुदेवं च.
— After 32, S (T1 om. lines 1-4; G2 om. line 8; G4 M2 om. lines 2-3 and 5-8; G5 om. lines 2-3 and 8) ins.:

352* तेषामाकारभावज्ञः सहदेवो न चक्षमे ।
मानिनां बलिनां राज्ञां पुरः संदर्शिते पदे ।
पुष्पवृष्टिमहत्यासीत्सहदेवस्य मूर्धनि ।
जन्मप्रभृति वृष्णीनां सुनीथः शत्रुरब्रवीत् ।
प्रष्टा वियोनिजो राजा प्रतिवक्ता नदीसुतः ।
प्रतिग्रहीता गोपालः प्रदाता च वियोनिजः ।
सदस्या मूकवत्सर्वे आसतेऽत्र किमुच्यते ।
इत्युक्त्वा स विहस्याशु पाण्डवं पुनरब्रवीत् ।
अतिपश्यसि वा सर्वान्न वा पश्यसि पाण्डव ।
तिष्ठत्स्वन्येषु पूज्येषु गोपमर्चितवानसि ।
एते चैवोभये तात कार्यस्य तु विनाशके ।
अतिदृष्टिरदृष्टिर्वा तयोः किं त्वं समास्थितः ।

[ G2 transp. lines 1-4 and 5-7. — (L. 2) G2 राज्ञः (for राज्ञां). G6 संदिशते (for संदर्शिते). — (L. 4) G2 सुनितः; G6 °यः (for °थः). — (L. 5) G2.6 यष्टा (for प्रष्टा). G2 परिवेत्ती; G6 परिहर्ता (for प्रतिवक्ता). — (L. 7) G2 आस्ते तत्र (for आसतेऽत्र). — (L. 9) G2 सर्वाश्चो (for वा सर्वान्). G4 हि (for the *second* वा). — (L. 10) G2.6 सत्स्वेव; G4 M2 यत्सत्सु (for तिष्ठत्सु). T1 G2.4-6 कृष्णम् (for गोपम्). — (L. 11) G6 एते वै भवितारे च (for the prior half). G5 विनाशिके; G6 °शने. G4 कार्यस्य तुलिकाशिने (for the post. half). — (L. 12) T1 G6 M2 त्वं (G6 न) तयोः किं; G2 द्वयोः किं त्वं (for तयोः किं त्वं). ]

Colophon om. in D4. — *Sub-parvan:* Ś1 K2-4 B5 Dn1 D1-3.5.6 अर्घा(Ś1 D3 °र्घ्या)भिहरण; K1 B2.6 अर्घ्या(K1 °र्घा)भिहरण and शिशुपालवध; B1 शिशुपालवध; B4 राजसूय (followed by वासुदेवार्घ्याभिहरण); G1 राजसूय. B3 (om. *sub-parvan* name) mention only वासुदेवार्घाभिहरण. — *Adhy. name:* G1 भगवदर्घ्यप्रदानं; G5 कृष्णस्याग्रसंभावनाप्रदानं. — *Adhy. no.* (figures, words or both): K1(marg.).3 33 (as in text); K2 32; Dn1 36; S 44 (G1 erroneouesly 24). — *S'loka no.:* K3 31; Dn D1.2 32; M1 33.

## 34

☞ D4 om. from 1 up to उपानीतां in 18b (cf. v.l. 2. 33. 19). The MS. is ignored up to the end of the lacuna.

1 K2 वैशं° (for शिशुपाल उ°). — a) S गोविंदस् (for वार्ष्णेयस्). — b) K3 तिष्ठत्विव; B1 °त्सु सु-; T1 G2 °त्स्वसि; G1.3 °त्स्वपि; G4 °त्विह; G6 °त्स्वसिन्. — K2 om. (hapl.) 1c-2b. — c) G4 महापतिः स कौरव्यो. — d) B1.5 D2 राजेव (B5 °ह); S अराजा (for राजवत्). K3 पार्थिवार्पणं; B Dn1 G1 M °वार्हणां; Dn2 °वोर्हणां; D2.5 °वोर्हणं. K4 Ñ1 V1 राजेवापार्थिवोर्हणं (K4 °णां); D1.3 राजेवापार्थिवार्हणां (D3 °णं).

2 K2 om. 2ab (cf. v.l. 1). — a) K3 न्यायं; G1 नाथ; G6 न च (for नायं). D1 उक्तः (for युक्तः). K3 समाहार. G2 न चायुक्तसमाचारः. — b) K3 पांडवेय. B3.5 D3.5 पांडवानां महात्मनां. — c) K1-3 यत्कामं. S (except G5) देवकीपुत्रं (for पुण्डरी°). — d) S (except T1) पांडवार्चितुमर्हसि.

यत्कामात्पुण्डरीकाक्षं पाण्डवार्चितवानसि ॥ २
बाला यूयं न जानीध्वं धर्मः सूक्ष्मो हि पाण्डवाः ।
अयं तत्राभ्यतिक्रान्त आपगेयोऽल्पदर्शनः ॥ ३
त्वादृशो धर्मयुक्तो हि कुर्वाणः प्रियकाम्यया ।
भवत्यभ्यधिकं भीष्मो लोकेष्ववमतः सताम् ॥ ४
कथं ह्यराजा दाशार्हो मध्ये सर्वमहीक्षिताम् ।
अर्हणामर्हति तथा यथा युष्माभिरर्चितः ॥ ५
अथ वा मन्यसे कृष्णं स्थविरं भरतर्षभ ।
वसुदेवे स्थिते वृद्धे कथमर्हति तत्सुतः ॥ ६
अथ वा वासुदेवोऽपि प्रियकामोऽनुवृत्तवान् ।
द्रुपदे तिष्ठति कथं माधवोऽर्हति पूजनम् ॥ ७
आचार्यं मन्यसे कृष्णमथ वा कुरुपुंगव ।
द्रोणे तिष्ठति वार्ष्णेयं कस्मादर्चितवानसि ॥ ८
ऋत्विजं मन्यसे कृष्णमथ वा कुरुनन्दन ।
द्वैपायने स्थिते विप्रे कथं कृष्णोऽर्चितस्त्वया ॥ ९
नैव ऋत्विङ्न चाचार्यो न राजा मधुसूदनः ।　C. 2. 1354 B. 2. 37. 17 K. 2. 40. 17

3 G2 om. $3^{ab}$. — a) Ś1 जानीध्वे. — b) K1 B1 धर्मः सूक्ष्मं; K2–4 M1 धर्मसूक्ष्मो; B2.6 D1.2 G5 धर्मं सूक्ष्मं; D3 T1 G1.3.4.6 M2 धर्मसूक्ष्मं (for धर्मः सूक्ष्मो). Ś1 पांडवः; K1 पांडव. — D3 om. $3^{c}$–$4^{b}$; G2 reads these lines after 9. Cv seems to have read $3^{c}$ (at least) twice, once before 4 and once later, perhaps placed as in G2. — c) Ś1 तत्रात्यतिक्रांत; K1 क्षत्राभ्यति°; K3 तत्रानति°; K4 च स्मृत्यविक्रांत; V1 चाभिभ्यति°; B Dn D2.5 च स्मृ(D5 स्म)त्यति°; D1 च स्मृत्य निष्क्रांत; T1 अत्र ह्यतिक्रांत; G2 M1 Cv (second time) तत्र व्यति°; G3 तत्राह्यति°; G4 त्वत्राभ्यति°; G5 अत्राभ्यति°; G6 ततोभ्यति°; M2 चात्राभ्यति°. Cv cites (first time) अयं त्वत्र (cf. G4), with gloss अयं सूक्ष्मो धर्मः; and (second time) अयं तत्र. D6 अयं च तत्रात्यतिक्रामो (hypermetric); G1 अयमत्राप्यतिक्रम्य. — d) K3 आपगेया°; K4 Ñ1 V1 Dn D6 ह्यापगेयो°; G1 अपगेयो°; G2 कर्मणा त्व°.

4 D3 om. $4^{ab}$ (cf. v.l. 3). — a) K1 तादृशां; K2.3 तादृशं; B5 G5 त्वादृशे (for °शो). K4 धर्मयुक्ति; B1 G5 °युक्ते. — b) G3 प्रतिकाम्यया; Cd प्रिय° (as in text). — c) K1 भवत्यभ्यषिकं; K3 भवत्येभ्यधिकं; B1 G3 भवत्यभ्यधिको; B3 संभवत्यधिकं; G4.5 भवत्त्वभ्यधिकं. Cv cites text, but glosses कमभि कं प्रति । अधि अधिकः भवति इति योजना (!). K4 B3.6 D1.5 T1 G3 Cv भीष्म; B5 भीमं (for भीष्मो). D3 भवत्यधिकं भीष्म (submetrical). — d) Ś1 लोकेषु वसतः; K1 °ष्वेव मतः; B2 °ष्वनुमतः; D1 G6 °षु च मतः; D3 °ष्ववमतं; G1 °ष्वभिमतः; G3.5 °ष्वपि मतः; G4 °षु विमतः; Cv cites text. Ś1 सुखं (m सता); D3.5 परं (for सताम्).

5 D1 om. $5^{ab}$. — a) K1 स राजा; G1 ह्यदाता; G2.6 हि राजा (for ह्यराजा). — b) G1.2 सर्वमभी°. — c) G4 अर्हणम्. K1 B5 G2.6 यथा (for तथा). — d) B6 तथा (for यथा). G2.6 अच्युतः (for अर्चितः).

6 a) G1 हि त्वं (for कृष्णं). — b) Ś1 K4 Dn D5 कुरुपुंगव (D6 °वः); K1–3 कुरुनंदन (K3 °नः) (for भर°). — c) K2 D1 (before corr.) वासुदेवे. G1 वृद्धिं (for वृद्धे).

7 a) G1.2.4.6 M2 वसुदेवो. B1 हि; T1 G3–5 [ऽ]यं (for ऽपि). — b) K1 B1 प्रिय(B1 हित)कामोनुवृत्तिमान्; B3 D1.2 हितकामोनुवृत्त(D2 °वर्त)वान्; T1 प्रेयमित्यनुवृ°; G1.2.6 M2 यथा पुत्रेग (G2 °त्रेषु; G6 °त्रे तु) वृ°; M1 यथा पुत्रेनुवृ°. — c) K1 द्रुपदे सति वार्ष्णेयं. — d) D6 सज्जनं (m as in text); M पूजनां (for पूजनम्). K1 कथमर्चितवानसि.

8 b) K1.4 B5 Dn D3.5.6 T1 कुरुनंदन (K4 °नः); G3 °पुंगवः. B1.2 स्थविरं भरतर्षभ. — c) D1.2 वार्ष्णेय. — d) Ś1 K1.2 B3 D3 G6 कथम् (for कस्माद्).

9 G1 om. $9^{bc}$. — b) Ś1 कुरुसत्तम; K4 D2 M2 °नंदनः; B2 G5 कुरुपुंगव (B2 °वः). — c) Ś1 K B4 Dn D6 वृद्धे; V1 B5 D3.5 कृष्णे (for विप्रे). — d) G1 स्थिते व्यासेर्चितः कथं. — After 9, K4 V1 B D1–3.5 ins. a passage given in App. I (No. 19); a variant and expanded form of this passage, given in App. I (No. 20), is ins. in S after 9 (in G2, which reads $3^{c}$–$4^{b}$ after 9, it is ins. after $4^{ab}$).

10 a) Ś1 K1.2 Ñ1 नैवर्त्विङ्नापि; K3.4 V1 B1.4 Dn1 D1.3.6 नैवर्त्विङ्नैव; T1 M नैव चर्त्विङ्न; G1 नैव चत्ति न (corrupt); G2.6 नैव वंद्यो न; G3 (corrupt) न हि चक्रश्च; G4 नैव चर्त्विश्च; G5 न हि चर्त्विङ्न. K1.2.4 D2.6 T1 G1 वा (for च). — b) V1 B1(m as in text).4–6 D2.5 न राजायं बलानुजः; B2 °जा धर्मसूदनः. — After $10^{ab}$, G1.3.5 ins.:

353* न स्नातको न जामाता कथं कृष्णोऽर्चितस्त्वया ।

— D6 om. (hapl.) $10^{c}$–$11^{b}$; G1 om. $10^{cd}$. — c) G2.6 अतश्च त्वं (for अर्चितश्च). Cv cites अर्चितस्त्वत्

C. 2. 1354 B. 2. 37. 17 K. 2. 40. 17 आर्चितश्च कुरुश्रेष्ठ किमन्यत्प्रियकाम्यया ॥ १०
अथ वाप्यर्चनीयोऽयं युष्माकं मधुसूदनः ।
किं राजभिरिहानीतैरवमानाय भारत ॥ ११
वयं तु न भयादस्य कौन्तेयस्य महात्मनः ।
प्रयच्छामः करान्सर्वे न लोभान्न च सान्त्वनात् ॥ १२
अस्य धर्मप्रवृत्तस्य पार्थिवत्वं चिकीर्षतः ।
करानस्मै प्रयच्छामः सोऽयमस्मान्न मन्यते ॥ १३
किमन्यदवमानाद्धि यदिमं राजसंसदि ।
अप्राप्तलक्षणं कृष्णमर्घ्येणार्चितवानसि ॥ १४
अकस्माद्धर्मपुत्रस्य धर्मात्मेति यशो गतम् ।
को हि धर्मच्युते पूजामेवं युक्तां प्रयोजयेत् ।
योऽयं वृष्णिकुले जातो राजानं हतवान्पुरा ॥ १५
अद्य धर्मात्मता चैव व्यपकृष्टा
कृपणत्वं निविष्टं च कृष्णेऽर्घ्यस्य निवेदनात् ॥ १६
यदि भीताश्च कौन्तेयाः कृपणाश्च तपस्विनः ।
ननु त्वयापि बोद्धव्यं यां पूजां माधवोऽर्हति ॥ १७
अथ वा कृपणैरेतामुपनीतां जनार्दन ।
पूजामनर्हः कस्मात्त्वमभ्यनुज्ञातवानसि ॥ १८

(gloss त्वत्तः). B1.2.5.6 D1–3.5 अर्चितः कुरुशार्दूल. — $^{d}$) T1 किमस्य.

11 D6 om. 11$^{ab}$ (cf. v.l. 10). — $^{a}$) K4 D3 वा ह्यर्चनीयो; V1 B Dn D1.2 G1 M1 वाभ्यर्च°; D5 वात्यर्च° (for वाप्यर्च°). — $^{b}$) S युष्माभिर्वृष्णि(G1 °कं वृष्णि-; G3 °भिः कुरु)पुंगवः. — $^{d}$) B1 अपमानाय.

12 $^{a}$) Ñ1 V1 भयात्तस्य; G3 °देव; G4 °दन्ये. — $^{b}$) Ś1 पांडवस्य (for कौन्ते°). — $^{c}$) K2 D3.5 T1 G3.5 M प्रयच्छाम. Cv cites text. B1 करान्सर्वान्प्रयच्छाम. — $^{d}$) A few MSS. शांत्वनात्. K2 न लोभान्न यमां च तान् (corrupt).

13 $^{a}$) S अस्य धर्म(M2 सर्व)प्रधानस्य. — $^{c}$) K1 करान्नस्मै; K3 करं तस्मै; M1 करमस्मै; M2 करान्सर्वै. — $^{d}$) K1 T1 मन्यसे.

14 $^{b}$) Ś1 यदियं; K1 Ñ1 G2.6 यदयं; K4 D3.5 यादवं; V1 B Dn D1.2.6 यदेनं (B5 °वं); T1 G3 यदित्थं; G4 M1 यदिदं; G5 यदीत्थं; text (यदिमं) as in K2.3 G1 M2. — $^{c}$) K1 B6 अप्राप्तलक्षण-; K4 D6 अराजलक्षणं; D1 अप्राप्यलक्षणं. — $^{d}$) K B2–5 Dn1 D5 अर्घेण (K3 अर्थेण); Ñ1 Dn2 D6 अर्वेन; T1 M1 अर्घ्येन (for अर्घ्येण). V1 D5 नृपः; D8 न स (for असि).

15 $^{a}$) Ś1 V1 B (except B2) D1–3.5 M1 धर्मराजस्य (for °पुत्रस्य). — $^{b}$) T1 G3.5 वचो गतं; G1 गतो वचः; G4 च चागतं (for यशो गतम्). Cd cites गतं (as in text). — $^{c}$) D6 यो (for को). D1 धर्मच्युतं; G1.2.4 M धर्माच्च्युते; G5 धर्मोच्च्युते. K1 पूज्यम्; B5 D3.5 राजा (for पूजाम्). B1 यो धर्म्यामच्युते पूजाम्. — $^{d}$) Ś1 युक्ते; K1–3 वृत्ते; B2.6 D2 युक्तः; T1 G3–5 एनां (for युक्तां). K4 Dn (!) D6 नियोजयेत्; B1.2.6 D1.2 समाचरेत् (for प्रयो°). B5 D3.5 पूजामेवं समाचरेत्; G6 एवं युक्ताव्रपूजयेत्. — After 15$^{cd}$, B3 reads 16$^{ab}$. — After 15, K4 V1 B D (D4 om.) G3 ins.:

354* जरासंधं महात्मानमन्यायेन दुरात्मवान् ।

[ B1.6 अनयेन; D1 भवने च; D2 G3 भयेन च (for अन्यायेन). G3 (before corr.) महात्मवान् (for दुरा°). ]

16 D1 om. 16. — $^{a}$) K1 अन्यधर्मात्मना चैव; K4 G3.4 अद्य धर्मात्मना (G3 °नां) चैव; G2.6 कोन्यो धर्मात्मनां चैव. — $^{b}$) Ś1 व्यपदिष्टा; G1 °कृष्गा; G3.4 ह्यपकृष्टा (G4 °ष्टो); G6 व्यपकृष्टो. Cd cites अपकृष्टा. K2 युधिष्ठिर; B1 T1 (before corr.) °ष्ठिरे. — After 16$^{ab}$, G1 (which om. 16$^{c}$–17$^{b}$) ins. 355*. — $^{c}$) Ś1 विचित्यं च; K1 च निर्दिष्टं; K2.3 D6 हि निर्दि(K3 °र्षि)ष्टं; K4 दर्शितं च; G2.6 निकृष्टं च (for निविष्टं च). Ñ1 V1 B3–5 Dn D3.5 दर्शितं कृपणत्वं च; B1.2.6 D2 कृपणस्त्वं निमग्नश्च. Cd cites कृपणत्वं निदिग्धं (v.l. निदग्धं; gloss उपचितं). — $^{d}$) K1 वार्ष्णेयस्य; K2–4 Ñ1 V1 B (except B2) Dn D2.5.6 T1 कृष्णे(D6 °ष्णो)र्घस्य. D3 कृष्णोर्घ्यस्य प्रदर्शनात्.

17 G1 om. 17$^{ab}$ (cf. v.l. 16). — $^{a}$) G4 M2 यद्भीताश्च; Cv as in text. Ś1 कौरव्याः; G6 कौंतेय; Cv as in text. — $^{b}$) K3 मनस्विनः; B1 D1.2 तरस्विनः; Cd as in text. — S Cv ins. after 17$^{ab}$ (G1, which om. 16$^{c}$–17$^{b}$, ins. after 16$^{ab}$):

355* राज्ञां तु मध्ये पूजां ते कृतवन्तो गरीयसीम् ।

[ M Cv हि (for तु). G2.3 [ऽ]भिभूयसीं; G4.6 M हि भूयसीं (for गरी°). G1 राज्ञां मध्ये पांडवेय पूजां तामभिभूयसीं. ]

— $^{c}$) Ś1 अनु-; D1.2 एतत्; G6 तत्तु (for ननु). G2 त्वया वि-; M1 त्वया हि. T1 बोद्धव्या. K4 D6 न त्वयात्यपि (D6 °या ह्यपि) बोद्धव्यं. — $^{d}$) B1.2.6 D1.2 पूजां यां (by transp.); K4 Ñ1 V1 B3–5 Dn D1 (after corr.).2.5 T1 G1.3.5.6 M माधवार्हसि; D1 (before corr.) °वोर्हसि. See Addenda.

18 $^{a}$) K2 एत्वाम्; V1 B1–3.6 D1.2 एतैर्; G1 एनाम्

अयुक्तामात्मनः पूजां त्वं पुनर्बहु मन्यसे ।
हविषः प्राप्य निष्यन्दं प्राशितुं श्वेव निर्जने ॥ १९
न त्वयं पार्थिवेन्द्राणामवमानः प्रयुज्यते ।
त्वामेव कुरवो व्यक्तं प्रलम्भन्ते जनार्दन ॥ २०
दारक्रिया यादृगन्धे वा रूपदर्शनम् ।
अराज्ञो राजवत्पूजा तथा ते मधुसूदन ॥ २१
दृष्टो युधिष्ठिरो राजा दृष्टो भीष्मश्च यादृशः ।
वासुदेवोऽप्ययं दृष्टः सर्वमेतद्यथातथम् ॥ २२
इत्युक्त्वा शिशुपालस्तानुत्थाय परमासनात् ।
निर्ययौ सदसस्तस्मात्सहितो राजभिस्तदा ॥ २३

इति श्रीमहाभारते सभापर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

## ३५

वैशंपायन उवाच ।
ततो युधिष्ठिरो राजा शिशुपालमुपाद्रवत् ।
उवाच चैनं मधुरं सान्त्वपूर्वमिदं वचः ॥ १
नेदं युक्तं महीपाल यादृशं वै त्वमुक्तवान् । C. 2. 1370 B. 2. 38. 2 K. 2. 41. 2

(for एताम्). — $^{b}$) K$_1$ उपानीतां; K$_2$ D$_3$ उपनीता; K$_4$ B$_1$ °नीतो. — D$_4$ resumes from जनार्दन! — Ś$_1$ जनार्दने; K$_{2-4}$ B$_1$ T$_1$ G$_4$ °नः; D$_5$ °नं. — G$_1$ om. (hapl.) 18$^{c}$–20$^{d}$. — $^{c}$) Ś$_1$ अनर्हें; D$_5$ अर्हः; G$_2$ अनर्हन्; G$_6$ अनार्हं (for अनर्हः). T$_1$ G$_{3-5}$ M transp. कस्मात् and त्वं. — $^{d}$) K$_4$ V$_1$ B$_1$ D$_6$ G$_6$ °ज्ञातुमर्हसि.

19 G$_1$ om. 19 (cf. v.l. 18). — $^{a}$) K$_3$ G$_3$ अयुक्तम्; K$_4$ अयुक्तान्; G$_2$ अयत्नम्. — $^{b}$) T$_1$ G$_{3-5}$ कस्माद् (for पुनर्). — $^{c}$) K$_4$ हविषं; B$_1$ °ष्यं. K$_1$ D$_{2.5}$ निस्पंदं; K$_{2.4}$ D$_{1.3.6}$ निष्पंदं; B$_1$ T$_1$ G$_{3.4}$ M$_1$ Cv विष्यंदं; B$_2$ Dn$_2$ निःस्पंदं; B$_3$ निःष्यंदं; B$_{4-6}$ निःस्यंदं; Cd निस्यंदं (=प्रवाहं); Cn as in text. G$_{2.6}$ हविष्यं प्राशितुं श्वेव (G$_6$ चैव). — $^{d}$) Ś$_1$ K$_4$ Cd प्राशिता (Cd gloss भक्षिता); K$_{1.2}$ प्राशिताश्च; Ñ$_1$ V$_1$ प्राशितं (read °तुं?); D$_4$ °तंश्च. K$_{1.2}$ D$_{4.6}$ M$_2$ चैव (for श्वेव). K$_3$ प्राशितस्येव निर्जितः; G$_{2.6}$ विप्रगेहे च निर्जने.

20 G$_1$ om. 20 (cf. v.l. 18). — $^{a}$) B$_6$ D$_{1.2}$ M$_1$ न त्वया; T$_1$ G$_{2.6}$ M$_2$ नन्वयं (for न त्वयं). K$_1$ पृथिवींद्राणाम्. — $^{b}$) K$_2$ अवमान्मनः; K$_3$ B$_{2-6}$ Ñ$_1$ V$_1$ Dn D$_{3.5}$ G$_2$ अपमानः; G$_6$ अवमानं (for अवमानः). — $^{d}$) K$_4$ प्रलम्यंते; D$_2$ प्रलंभस्ते; T$_1$ G$_{3-5}$ M$_1$ प्रहसंते (G$_4$ °ति); G$_2$ प्रालंभंते; G$_6$ प्रलभंते; Cd as in text.

21 $^{a}$) K$_3$ -योगं; G$_1$ यातृग्; G$_2$ वा स्याद्; G$_6$ यास्य (for यादृग्). — $^{b}$) K$_3$ D$_1$ गंधे; G$_6$ दृंडे (for अन्धे). G$_2$ कूपदर्शनं; G$_6$ रवि° (for रूप°). — $^{c}$) Ś$_1$ अराज्ये; K$_2$ अ(स्य) राज्ञो; K$_4$ अराज्ञौ; B$_3$ °ज्ञे; B$_4$ °ज्ञा; B$_5$m.$_6$ D$_2$ °ज्ञि; D$_1$ (before corr.) आराज्ञि.

22 $^{a}$) G$_3$ दुष्टो; Cd as in text. B$_2$ D$_{3-5}$ यादृग् (for राजा). — $^{b}$) G$_3$ दुष्टो; G$_6$ रुष्टो. B (except B$_3$) D$_6$ भीमश्च; G$_2$ भीताश्च. K$_1$ B$_{2.3}$ G$_5$ तादृशः. — $^{c}$) G$_3$ दुष्टः; G$_6$ रुष्टः. — $^{d}$) B$_1$ M$_2$ सर्वमेव; G$_1$ सर्वं ते यद् (for सर्वमेतद्). K$_{2-4}$ D$_5$ T$_1$ G$_{2-5}$ यथा तथा; G$_1$ यता यथा. Ś$_1$ (*sup. lin.* as in text) सर्वथा कुरुनंदन.

23 $^{ab}$) K$_2$ D$_6$ शिशुपालास्तान्; K$_3$ °पालेन; Ñ$_1$ V$_1$ B$_{2.3.5}$ D$_5$ G$_6$ °पालस्तु; B$_{1.6}$ D$_{1.2}$ °पालश्च. K$_3$ परमासने. G$_1$ शिशुपालः सभामध्ये इत्युक्त्वोत्थाय चासनात्. — $^{c}$) K$_4$ सदृशस् (for सदसस्). G$_1$ स्वपक्षैर्निर्ययुस्तस्मात्. — $^{d}$) B$_{3.6}$ तथा (for तदा).

Colophon om. in B$_6$; B$_1$ reads it in marg. — *Sub-parvan:* Ś$_1$ D$_{1-3.5}$ अर्घ्याभिहरण; K B$_5$ Dn D$_{4.6}$ अर्घाभिहरण; B$_3$ राजसूय and अर्घाभिहरण; B$_4$ राजसूय (followed by वासुदेवार्घाभिहरण); G$_5$ M$_{1.2}$ राजसूय. B$_1$ (om. sub-parvan name) mentions only कृष्णार्घाहरण; B$_3$ likewise only वासुदेवार्घाभिहरण. — *Adhy. name:* B$_5$ शिशुपालवाक्यं; G$_1$ शिशुपालाधिक्षिपः; G$_3$ शिशुपालपुरुषवाक्यं; M$_2$ शिशुपालाधिक्षेपवचनं. — *Adhy. no.* (figures, words or both): K$_1$(marg.).$_3$ 34 (as in text); K$_2$ D$_3$ 35; Dn$_1$ 37; S 45. — *S'loka no.:* K$_2$ 23; K$_3$ 24; Dn 31; D$_{1.2}$ 30; M$_1$ 39.

## 35

1 K$_3$ om. 1. — $^{b}$) Ś$_1$ उपादधत्; K$_1$ अथाब्रवीत्; (for उपाद्रवत्). — $^{c}$) G$_1$ उवाच भ्रातृभिः सार्धं; G$_3$ उवाच मधुरं पथ्यं. — $^{d}$) B$_{1.5.6}$ शांत्वपूर्वम्; G$_1$ साम° (for सान्त्व°).

2 $^{a}$) B$_{3.4}$ नैवं (for नेदं). — $^{b}$) B$_1$ यादृशो; T$_1$ G$_{3-5}$ तादृशं; G$_1$ त्वादृशो; G$_2$ तादृशो; M तादृशे

C. 2. 1370 B. 2. 38. 2 K. 2. 41. 2 अधर्मश्च परो राजन्पारुष्यं च निरर्थकम् ॥ २
न हि धर्मं परं जातु नावबुध्येत पार्थिव ।
भीष्मः शांतनवस्त्वेनं मावमंस्था अतोऽन्यथा ॥ ३
पश्य चेमान्महीपालांस्त्वत्तो वृद्धतमान्बहून् ।
मृष्यन्ते चार्हणां कृष्णे तद्वत्त्वं क्षन्तुमर्हसि ॥ ४
वेद तत्त्वेन कृष्णं हि भीष्मश्चेदिपते भृशम् ।
न ह्येनं त्वं तथा वेत्थ यथैनं वेद कौरवः ॥ ५

भीष्म उवाच ।
नास्मा अनुनयो देयो नायमर्हति सान्त्वनम् ।
लोकवृद्धतमे कृष्णे योऽर्हणां नानुमन्यते ॥ ६
क्षत्रियः क्षत्रियं जित्वा रणे रणकृतां वरः ।
यो मुञ्चति वशे कृत्वा गुरुर्भवति तस्य सः ॥ ७
अस्यां च समितौ राज्ञामेकमप्यजितं युधि ।
न पश्यामि महीपालं सात्वतीपुत्रतेजसा ॥ ८

(for यादृशं). K1 B6 D1.2 च (K1 corr. to व); B1 [ऽ]थं; T1 G1.2.4.5 M2 यत् (for वै). V1 त्वादृशे वक्तुमीदृशं; B2–5 D3–5 त्वा(B4 या)दृशैर्वक्तुमीदृशं (D3 °शे); D6 यादृशं वै त्वयुक्तवान्; G6 त्वादृशो धर्ममुक्तवान्. — $^{c}$) G2 पुरो; G4 पलो (sic) (for परो). — $^{d}$) K3 V1 B1.2.6 D4 G1–4.6 Cnp पौरुषं च; K4 पारुष्यं यन्; Dn1 पौरुष्यं च; D1.2 परुषं च; T1 G5 परुषं तु. M प(M2 पु)-रुषश्च निरर्थकः; Cn as in text.

3 $^{a}$) G1 तु (for हि). K2.4 Dn2 G1.3.4 धर्मपरं; T1 धर्मपरां; G5.6 धर्मं प(G6 धर्मपु)रान्. B5 राजन्; G6 जेतुं (for जातु). — $^{b}$) B5 G1.5 नावमन्येत; D1.2 नान्व(D2 °व)बुध्यति; T1 G3.4 नैव मन्येत; G6 अवबुध्येत. K4 Ñ1 V1 B D (except Dn2 D2) T1 G1.4.5 M1 पार्थिवः (B5 कर्हिचित्). — $^{c}$) K2.3 B5 T1 G3–5 भीष्मं. K2.3 B5 T1 G3–5 शांतनवं. K1.2 चैनं; K3 B1 त्वेवं; G1.2.6 M तेन (for त्वेनं). — $^{d}$) T1 G2.6 मा त्वं (G2 त्व-) मंसीर्; G1.3.5 M मावमंसीर् (G1 °द्) (for मावमंस्था). K4 यतोन्यथा; Ñ1 B2–6 Dn D1–3.5 त्वमन्यथा; V1 ततोन्यथा; D4 lacuna; G4 इतोन्यथा; B1 मावमंस्थाप्यतोन्यथा. Cv cites अतोऽन्यथा.

4 $^{a}$) Cv also cites यमं (for पश्य); gloss यमसदृशं भीष्ममिति पूर्वेणान्वयः. Ś1 चैतन्-; K1 चैमान् (sic); K2–4 V1 Dn D1.6 M1 चैतान्; T1 G3–5 Cv चैनान्; G6 *माम् (for चेमान्). — $^{b}$) K1.4 B (except B2.3) Dn D6 G1.2.6 M वृद्धतरान्. K3 त्वत्तो वृद्धतमा बहू (sic). — $^{c}$) K4 मृषंति; B2.4.5 D3–5 मृष्यंति; G1.6 मर्ष्यं(G6 °र्षं)ते; M1 मृष्यतश्. T1 G3.4 चार्हणं. K3 कृष्णो. — $^{d}$) T1 G1 तद्वक्त (T1 °क्त्वं); G2.6 किं च त्वं; M2 तद्वत्तं (for तद्वत्त्वं).

5 $^{a}$) B1.6 D1.2 कृष्णं वै; D6 (before corr.) कृष्णेन (for कृष्णं हि). — $^{b}$) K2 भीष्मं. D1 G4 चेदिपतेर्. — $^{c}$) D3.5 त्वेनं; G2 ह्येवं; G6 हि च (for ह्येनं). G4 यथा. K3 B1.6 D1 G4 M2 वेद; M1 वेत्सि (for वेत्थ). — $^{d}$) V1 B3–5 D3–5 यथार्थं; G4 तथैनं (for यथैनं). Ś1 देव; B2.5 D3–5 वेत्ति (for वेद). D1.2 कौरवं. K2 (corrupt) यथैवैनेद कौरवा.

6 $^{a}$) K1.2 नास्मिन्; B2 नासौ; D1.2 नास्य (for नास्मा). B2.3.5.6 D1–5 ह्य(B6 D2 चा-; D1 वा)नुनयो (for अनुनयो). Ś1 नास्मायननुयो (sic) देयो; Ñ1 V1 B4 Dn (!) नास्मै (V1 °स्मिन्) देयो ह्यनुनयो; K3 तस्यायां-नुनयो देयो; K4 D6 नास्माभिरनुनेतव्यो; B1 नास्य चानुनयो युक्तो; S न चास्यानुनयो देयो (G2.6 राजन्). Cd.n अनुनयः (Cd gloss प्रकुपितप्रसादनं, and so alternatively Cn). — $^{b}$) V1 नापि चा°; G1 नाहम° (for नायम°). B1.5.6 शांत्वनं; T1 G2.5.6 M2 सांत्वनां; G4 सांत्वतां. — $^{c}$) G1 लोकवृद्धितमे; M2 °वृद्धमते. — $^{d}$) Dn (!) G4 °र्हणं (for °र्हणां). K V1 Dn D6 नाभिमन्यते; M2 न तु मन्यते.

7 $^{a}$) K2 अक्षयः; D5 क्षत्रिया (for क्षत्रियः) B1 transp. क्षत्रियः and क्षत्रियं. D3 T1 G5.6 क्षत्रियान् (for °यं). — $^{b}$) Ś1 B1.6 D1.2 G6 रणभृतां. Ś1 K3 वर. — $^{d}$) B1 प्रभुर् (for गुरुर्).

8 $^{a}$) G1 तस्यां (for अस्यां). Ś1 तु; K (except K3) V1 B2–5 Dn D3–6 M1 हि (for च). — $^{b}$) V1 B2–4 D3–5 G6 रणे (for युधि). — $^{c}$) Ś1 महीपाल; D1 महापालं. T1 न हि पश्यामि महीपालं (hypermetric). — $^{d}$) Ś1 सात्वतीपुत्रसांत्वतं; K1 साकृती° °सात्वतात्; K2 सांत्वती° °सांत्वतान्; K3 सात्वती° °सांत्वनात्; K4 सात्वति° °तेजसा; B1.2 सात्वतीपुत्रसात्वतात् (B2 °त्वतः); D1 °पुत्रमोजसा; D6 °पुत्रसात्वतान्; S कृष्णेनाक्लिष्टकर्मणा. Cd cites सात्वतात् (gloss सात्वतेन । पंचमी विभक्ति-व्यत्ययात्).

9 $^{a}$) Ś1 K1.4 Ñ1 B1.6 D2.6 च (for हि). — $^{b}$) Ś1 अन्य°; K1 B1 अर्घ्य° (for अर्च्य°). S अर्चितव्यो (G2.6 अर्चनीयो) जनार्दनः. — G1.4 om. 9$^{cd}$. — $^{d}$) T1 G5 अर्चि(T1 °र्च)तव्यो; M2 पूजनीयो (for अर्चनीयो). Ś1 K2–4 Dn D6 महाभुजः; M2 महीधरः (for जना°).

10 $^{a}$) Ś1 निहता; S (except G2.6) विजिता (for हि जिता). K3 सर्वे (for युद्धे). — B3 om. (hapl.)

न हि केवलमस्माकमयमर्च्यतमोऽच्युतः ।
त्रयाणामपि लोकानामर्चनीयो जनार्दनः ॥ ९
कृष्णेन हि जिता युद्धे बहवः क्षत्रियर्षभाः ।
जगत्सर्वं च वार्ष्णेये निखिलेन प्रतिष्ठितम् ॥ १०
तस्मात्सत्स्वपि वृद्धेषु कृष्णमर्चाम नेतरान् ।
एवं वक्तुं न चार्हस्त्वं मा भूत्ते बुद्धिरीदृशी ॥ ११
ज्ञानवृद्धा मया राजन्बहवः पर्युपासिताः ।
तेषां कथयतां शौरेरहं गुणवतो गुणान् ।
समागतानामश्रौषं बहून्बहुमतान्सताम् ॥ १२
कर्माण्यपि च यान्यस्य जन्मप्रभृति धीमतः ।
बहुशः कथ्यमानानि नरैर्भूयः श्रुतानि मे ॥ १३
न केवलं वयं कामाच्चेदिराज जनार्दनम् ।
न संबन्धं पुरस्कृत्य कृतार्थं वा कथंचन ॥ १४
अर्चामहेऽर्चितं सद्भिर्भुवि भौमसुखावहम् ।
यशः शौर्यं जयं चास्य विज्ञायार्चां प्रयुज्महे ॥ १५
न हि कश्चिदिहास्माभिः सुबालोऽप्यपरीक्षितः ।
गुणैर्वृद्धानतिक्रम्य हरिरर्च्यतमो मतः ॥ १६
ज्ञानवृद्धो द्विजातीनां क्षत्रियाणां बलाधिकः ।
पूज्ये ताविह गोविन्दे हेतू द्वावपि संस्थितौ ॥ १७
वेदवेदाङ्गविज्ञानं बलं चाप्यमितं तथा । 2. 1387 2. 38. 19 2. 41. 19

from क्षत्रिय° up to बहवः (in $12^{b}$). — c) D4 हि (for च). G4 वार्ष्णेयं.

11 B3 om. 11 (cf. v.l. 10). — b) Ñ1 V1 B1.4.6 Dn अर्चामि (for अर्चाम). Ś1 नेरतं; G1 °रतान्. B2.5 D1–5 कृष्णमर्चामहेर्चितं; T1 G3.5 संपूज्यः कृष्ण एव नः (G3 हि; G5 सः); G4 श्रेष्ठ एव जनार्दनः. — c) D3 एव (for एवं). K2 B2.6 D1–5 transp. न and च. — d) Ś1 K4 Ñ1 V1 B1 Dn D1.2.6 G3 transp. भूत् and ते.

12 B3 om. $12^{a}$ (cf. v.l. 10). — a) G1 (before corr.) ज्ञानवृद्धो. G1 हि मे; G2.6 यथा (for मया). — After $12^{ab}$, G1 ins.:

356* यस्य राजन्प्रभावज्ञाः पुरा सर्वे च रक्षिताः ।

— c) K3 S (except G1) गुणवतां (for कथयतां). G4 शौरिर्. — d) G4 गुणवते. — f) K2–4 D2.6 G3.5 बहुमतां; G1 °तरान् (for °मतान्). D4 बहून्बहुमता सतां.

13 a) M2 हि (for च). K1 न चान्यस्य (for च यान्यस्य). — b) G2.3 धर्मतः (for धीमतः). — c) Ñ1 V1 B1.3–5 D2.4 (before corr.).5 बहुभिः; B2.6 D1 बंदिभिः; D4 (by corr.) S बहूनि (for बहुशः). — d) G1 नः (for मे). Ś1 K1 नरैरूप(K1 °र्बहु)श्रुतानि मे; K2 नरैर्भूयो युतानि मे; G2 हरेर्भूयः श्रितानि मे; G6 हरेः सम्यक्छ्रुतानि मे.

14 G1 om. $14^{a}$–$18^{c}$; G2.6 M2 om. $14^{a}$–$16^{b}$. — a) T1 G2–5 M1 भयात् (for वयं). T1 कर्मात् (for कामात्). — c) B1.2.6 D1 (m as in text).2 संबंधकं; T1 न संबद्धं (for न संबन्धं). — d) K2.3 D4.5 कृत्यर्थं वा; Ñ1 V1 D1.2.6 कृत्यार्थं वा; B1 कृष्णं चापि (for कृतार्थं वा). K1 नैवार्थं चापि किंचन; T1 G3 कृत्यार्थं चापि कं(G3 वापि किं)चन; G4.5 M1 कृतार्थं चा(G5 वा)पि कं(M1 किं)चन.

15 G1.2.6 M2 om. 15 (cf. v.l. 14). — a) V1 B3 D3.5 T1 G3.5 M1 अर्चयामो (M1 °म); D1 (m as in text) अर्घामहे (for अर्चा°). D4 अर्चमोर्चिन तं सद्भिर्; G4 अर्चयत्यच्युतं सद्भिर्. — b) K1 युधि (for भुवि). Ś1 K4 Dn D3 G4 भूतसुखावहं; K1–3 V1 B D1–5 भीमपराक्रमं; Ñ1 भीमसुखावहं (for भौम°). See Addenda. G3 सर्वभूतसुखावहं. — c) K3 यस्य (for यशः). V1 B3.4 महाराज; B5 D3–5 T1 G3–5 M1 बलं चास्य; D1 ज [marg. adds यं] चारस्य (for जयं चास्य). — d) K2 विज्ञेयार्चां; K3 विज्ञायार्घ्यं; D3 विज्ञायास्य (for °यार्चां). Ñ1 V1 B Dn2 D1–3.5 T1 G4 M1 प्रयुञ्ज्म(D3 °ज्म)हे; G3 प्रमाज्महे.

16 G1 om. 16; G2.6 M2 om. $16^{ab}$ (cf. v.l. 14). — a) K4 Dn D6 च (for हि). Ś1 किंचिदिहा°; G3 कश्चिदिवा°. — b) K4 सुबलो; V1 B2–4.6 D1–5 दुर्बलो; B1 स्वबलो. T1 G5 सुखं लोक्य परीक्ष्य वै; G3.4 M1 सुबालोपि (G4 °ले वि°; M1 °लोप्य) परीक्ष्य वै. — c) D3 गुणे (for गुणैर्). T1 G (G1 om.) अन्यान्; M1 अर्च्यान् (for वृद्धान्). M2 गणैरर्च्यानतिक्रम्य. — d) G2 हरिम् (for हरिर्). Ñ1 मम; B3 हि नः (for मतः).

17 G1 om. 17 (cf. v.l. 14). — a) Ś1 ज्ञानवृद्धिं; K2 °वृधो. — After $17^{ab}$, K4 V1 B D ins.:

357* वैश्यानां धान्यधनवाञ्छूद्राणामेव जन्मतः ।

— c) Ś1 K2.3 पूज्यौ (K2 °ज्या) द्वावपि; K1 पूज्येन्यौ द्वावपि; K4 B3.4 पूज्यै (B3 °ज्यौ; B4 °ज्ये) तावपि; B1 पूज्योसाविह; Dn(!) पूज्यतायां च; D4 पूज्यताविह; D6 पूज्यस्तावपि; T1 M1 युज्येते तौ च; G2 युज्यने ते च; G3–5 युज्यते तौ च; G6 युज्यंते चैव; M2 पूज्यते तौ च. Ś1 गोविंद; B1 °दो; S कृष्णे वै. — d) Ś1 K3 तावपि; K2 वृद्धापि (for द्वावपि). T1 G2–5 M संमतौ (for

C. 2. 1367 B. 2. 38. 19 K. 2. 41. 19 नृणां हि लोके कस्यास्ति विशिष्टं केशवादृते ॥ १८

दानं दाक्ष्यं श्रुतं शौर्यं ह्रीः कीर्तिर्बुद्धिरुत्तमा ।
संनतिः श्रीर्धृतिस्तुष्टिः पुष्टिश्च नियताच्युते ॥ १९

तमिमं सर्वसंपन्नमाचार्यं पितरं गुरुम् ।
अर्च्यमर्चितमर्चार्हं सर्वे संमन्तुमर्हथ ॥ २०

ऋत्विग्गुरुर्विवाह्यश्च स्नातको नृपतिः प्रियः ।
सर्वमेतद्धृषीकेशे तस्मादभ्यर्चितोऽच्युतः ॥ २१

कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः ।
कृष्णस्य हि कृते भूतमिदं विश्वं समर्पितम् ॥ २२

एष प्रकृतिरव्यक्ता कर्ता चैव सनातनः ।
परश्च सर्वभूतेभ्यस्तस्माद्वृद्धतमोऽच्युतः ॥ २३

बुद्धिर्मनो महान्वायुस्तेजोऽम्भः खं मही च या ।
चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम् ॥ २४

आदित्यश्चन्द्रमाश्चैव नक्षत्राणि ग्रहाश्च ये ।

संस्थितौ). G$_6$ क्षत्रज्ञावपि सत्तमौ.

18 G$_1$ om. 18$^{abe}$ (cf. v.l. 14). — $^{b}$) D$_4$ धनं (for बलं). Ś$_1$ चाप्यधिकं; K$_4$ Dn (!) D$_6$ चा(D$_6$ वा)-भ्यधिकं (for चाप्यमितं). — $^{cd}$) K$_4$ Ñ$_1$ V$_1$ B$_6$ Dn transp. हि and लोके. K$_4$ Ñ$_1$ V$_1$ B D कोन्योस्ति; T$_1$ G$_{2.6}$ M कश्चास्ति (for कस्यास्ति). K$_4$ Ñ$_1$ V$_1$ B D (D$_{1.2}$ marg.) T$_1$ G$_{2.6}$ M विशिष्टः. K$_2$ (corrupt) नृणां लोकोस्ति लोको हि कश्चास्ति केशवावृते.

19 $^{a}$) G$_6$ कृतं (for श्रुतं). B$_1$ G$_5$ वीर्यं; G$_6$ कीर्तिर् (for शौर्यं). — $^{b}$) G$_4$ प्रा-; G$_5$ धीः (for ह्रीः). K$_2$ बुद्धिलक्षणं; D$_6$ (before corr.) बुद्धिसत्तमा. G$_6$ बुद्धिरुत्तमसंनतिः. — $^{cd}$) Dn (!) G$_1$ संततिः; G$_6$ श्रीः पुष्टिः (for संनतिः). D$_4$ G$_{1.2}$ श्री-; G$_6$ च (for श्रीर्). T$_1$ G$_{1-5}$ M transp. तुष्टिः and पुष्टिः. G$_6$ बुद्धि° (for पुष्टि°). Ñ$_1$ निरता°; D$_1$ (before corr.) नियुता° (for नियता°).

20 $^{a}$) K$_1$ तमेवं- (for तमिमं). K$_1$ गुणसंपन्नम्; K$_3$ B$_{3-5}$ D$_{3-5}$ M$_1$ Cn (!) लोक°; K$_4$ Dn (erroneously!) D$_6$ सत्व° (for सर्व°). — $^{b}$) G$_1$ आर्यं च (for आचार्यं). — $^{c}$) K$_4$ B$_1$ Dn$_1$ D$_{4.6}$ T$_1$ G$_5$ अर्च्यम्; G$_6$ अर्चाम् (for अर्च्यम्). K$_4$ अर्च्यतम्; G$_{1.2}$ अच्युतम्; G$_3$ अर्चितुम् (for अर्चितम्). Ś$_1$ V$_1$ अर्च्यार्हं; T$_1$ G अर्चा(G$_{3.5}$ °र्च्या)मः (for अर्चार्हं). K$_1$ अभ्यर्चतमनर्घ्यार्हं; Dn$_2$ अर्च्यमर्चितवानस्मि; M अभ्यर्च्यतममर्चाम (M$_2$ °र्च्यामः). — $^{d}$) B$_2$ सर्वं. K$_4$ Dn D$_{3.6}$ संक्षंतुम्; B$_3$ शंसितुम्; D$_4$ शंसंतुम् (for संमन्तुम्). D$_2$ अर्हसि. D$_1$ सर्वं तत्क्षंतुमर्हसि.

21 $^{a}$) K$_{1.2}$ गुरु-; D$_6$ मनुर् (for गुरुर्). S तथाचार्यः (G$_{2.3.6}$ M$_2$ °र्ये) (for विवाह्यश्च). — $^{b}$) K$_4$ D$_3$ G$_6$ M$_2$ नृपतिप्रियः. B$_3$ प्रभुः (for प्रियः). — $^{c}$) K$_{3.4}$ B$_{1-5}$ Dn D$_{3-5}$ G$_{3-5}$ M$_1$ हृषीकेशः (K$_4$ °शेः; D$_3$ °श). — $^{d}$) B$_{1.2}$(m as in text)$_{.3.6}$ D$_{1.2}$ मया (for ऽच्युतः). — After 21, B$_4$ ins. 358*.

22 K$_2$ transp. 22 and 23. — $^{a}$) G$_1$ च (for हि). G$_6$ कृष्णो हि सर्वलोकानाम्. — $^{b}$) Ś$_1$ °रथ; K$_4$ °रह; D$_6$ °रिह (for °रपि). Ś$_1$ lacuna; K$_{1.3}$ Ñ$_1$ V$_1$ B (B$_1$ marg.) Dn$_1$ (before corr.).n$_2$ D$_{3-6}$ G$_{1.4.5}$ M$_2$ Cn (p as in text) चाव्ययः; B$_1$ चात्ययः; G$_3$ चाप्यया (for चाप्ययः). Cd cites अप्ययः (as in text). — $^{c}$) T$_1$ तु कृते; G$_{2.6}$ प्रकृते (for हि कृते). Ś$_1$ lacuna; K Ñ$_1$ V$_1$ Dn D$_6$ विश्वम्; T$_1$ भूतिम् (for भूतम्). Cd cites कृते and भूतं (as in text). — $^{d}$) K$_1$ इह (for इदं). Ś$_1$ K$_{2.4}$ Ñ$_1$ V$_1$ Dn D$_6$ भूतं; K$_{1.3}$ जातं; Cd विश्वं (as in text). Ś$_1$ K B$_5$ Dn D$_{3-6}$ G$_1$ चराचरं (for सम°). Cn cites भूतं (in either 23$^{c}$ or 23$^{d}$).

23 K$_2$ transp. 22 and 23. — $^{a}$) K Ñ$_1$ D$_{1.2.6}$ एषा; G$_4$ एवं (for एष). K$_3$ प्रभृतिः; Cd प्रकृतिः (as in text). B$_1$ अव्यग्रा; D$_3$ S अव्यक्तः; Cd as in text. — $^{b}$) D$_1$ कृता (for कर्ता). Ś$_1$ चैष (for चैव). D$_1$ सनातनी. — After 23$^{ab}$, K$_3$ *repeats* 22$^{c}$–23$^{b}$ (with v.l. as above). — $^{c}$) K$_1$ एवं च; K$_{2.3}$ B$_1$ D$_6$ M$_1$ परं च; D$_{1.2}$ परस्य; T$_1$ G$_2$ वरश्च (for परश्च). — $^{d}$) K$_4$ अर्च्यतमो; V$_1$ B$_{2-6}$ D पूज्यतमो; G$_{1.6}$ वृद्धतरो (G$_1$ °तो). Ś$_1$ मतः (for ऽच्युतः). — After 23, B$_3$ T$_1$ ins. 358*.

24 $^{a}$) K$_4$ Ñ$_1$ V$_1$ B (except B$_{1.3}$) Dn D$_6$ महद्; D$_3$ महा-; Cd.n महान् (as in text). — $^{b}$) G$_4$ महीद्वयं; G$_6$ महीधराः (for मही च या). G$_1$ तेजोऽब्धिः कर्मही च यः. — $^{c}$) G$_5$ चतुर्विंशच्च; G$_6$ चतुर्वर्गं च. K$_1$ यद्रूपं (for यद्भूतं). $^{cd}$) = 25$^{d}$. K$_4$ सवकृष्णप्रति°. — After 24, Ś$_1$ K$_{1.3}$ D$_{3.6}$ ins. 358*.

25 Ś$_1$ K$_{1.3}$ D$_{3.6}$ om. (hapl.) 25. — $^{a}$) G$_4$ आदित्य-. K$_2$ वायुर् (for चैव). — $^{b}$) G$_3$ गृहाश्च. M$_1$ तथा (for च ये). — $^{c}$) K$_{2.4}$ B$_4$ Dn T$_1$ दिशश्च विदिशश्चैव; D$_1$ दिशश्च प्रदिशश्चैव; G$_1$ दिशश्चैवोपदिशश्च. — K$_{2.4}$ B$_1$ (marg.) Dn D$_{1.2.4.5}$ ins. after 25: Ś$_1$ K$_{1.3}$ D$_{3.6}$ (which all om. 25) ins. after 24: B$_3$ T$_1$ ins. after 23: B$_4$, after 21:

दिशश्चोपदिशश्चैव सर्वं कृष्णे प्रतिष्ठितम् ॥ २५
अयं तु पुरुषो बालः शिशुपालो न बुध्यते ।
सर्वत्र सर्वदा कृष्णं तस्मादेवं प्रभाषते ॥ २६
यो हि धर्मं विचिनुयादुत्कृष्टं मतिमान्नरः ।
स वै पश्येद्यथाधर्मं न तथा चेदिराडयम् ॥ २७
सवृद्धबालेष्वथ वा पार्थिवेषु महात्मसु ।
को नार्हं मन्यते कृष्णं को वाप्येनं न पूजयेत् ॥ २८
अथेमां दुष्कृतां पूजां शिशुपालो व्यवस्यति ।
दुष्कृतायां यथान्यायं तथायं कर्तुमर्हति ॥ २९

C. 2. 1400
K. 2. 38. 33
K. 2. 41. 34

इति श्रीमहाभारते सभापर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

358* अग्निहोत्रमुखा वेदा गायत्री छन्दसां मुखम् ।
राजा मुखं मनुष्याणां नदीनां सागरो मुखम् ।
नक्षत्राणां मुखं चन्द्र आदित्यस्तेजसां मुखम् ।
पर्वतानां मुखं मेरुर्गरुडः पततां मुखम् ।
ऊर्ध्वं तिर्यगधश्चैव यावती जगतो गतिः ।
सदेवकेषु लोकेषु भगवान्केशवो मुखम् ।

[ (L. 3) Ś1 K2.3 तपतां; K1 तपस्तां (for तेजसां). — (L. 4) K1 वरः; K4 सुखं; Cd सुखं (as above). — (L. 5) K4 D1–4 ऊर्ध्वं- (for ऊर्ध्वं). K3 अधश्चैषः; K4 अधस्यैष (for अधश्चैव). K2 जगतौ पतिः; G4 जगतां गतिः. — (L. 6) Ś1 K1 Dn2 D4 सदैवते(Dn2 D4 °के)षु; K4 स देवेषु च (for सदेवकेषु). ]

— On the other hand, T1 G1.3.4 (om. line 1).5.6 ins. after 25:

359* एष रुद्रश्च सर्वात्मा ब्रह्मा चैष सनातनः ।
अक्षरः क्षररूपेण मानुषत्वमुपागतः ।

[ (L. 1) G5 एष; G6 चैव (for चैष). G6 पितामहः (for सना°). — (L. 2) T1 °त्वमिहागतः.]

26 a) B1.2.6 हि; B4 च; D5 नु (for तु). — b) T1 °पालोनुबध्यते. — c) T1 सर्वथा. Ñ1 G (except G5) कृष्णस् (for कृष्णं). — d) D1.2 तदा देवं (for तस्मादेवं). K4 D1 (before corr.) G2 प्रभाषसे. D3–5 कोवाप्येनं न पूजयेत्.

27 a) D3–5 G3–5 धर्मान् (for धर्मं). K1 वितत्तीयान्; K2 विचिन्मुयाद् (corrupt); Ñ1 प्रचिनु°; V1 B2–6 Dn2 D3–5 विवृणु°; Cd (as in text) विचिनुयात् (=कुर्यात्). — b) V1 प्रकृष्टं; D3.5 G2.4.5 M2 उत्कृष्ट-; Cd उत्कृष्टं (as in text). — c) Dn2 (before corr.) सर्वैः; D4 सर्वे (for स वै). K4 पश्ये; D2.4 पश्यद् (for पश्येद्). Ś1 यथा तत्वं; Dn2 (before corr.) यथा धर्मे; G6 अधाधर्मं. — d) Ś1 K2 D6 यथा; Cd तथा (as in text).

28 Dn2 transp. 28 and 29. — a) K4 सवृद्धबालेष्यथ वा; D3.5 °बालेषु तथा. — c) K2 नार्च्यं; Dn1 M1 [ऽ]नर्हं; G2 नर्हं (sic); G3 नाभि- (for नार्हं). G6 मनुते (for मन्यते). — d) V1 D3–5 वा ह्येनं; T1 G1 वा(T1 ना)प्येवं.

29 Dn2 transp. 28 and 29. — a) Ś1 अथैमां; K4 B4 Dn(!) D6 अथैनां; B2 यथेमां; T1 G3.5 अथ वा; G1 अथैव; G4 अधिमां (for अथेमां). — b) K4 व्यवस्थिति. — c) D6 T1 दुष्कृतानां; G1.3 सुकृतं वा; G2 दुष्कृतां वा; G4.5 M1 सुकृतां वा; M2 दुष्कृते वा (for °तायां). K1 B (except B5) T1 यथान्याययं; Cd °न्यायं (as in text). — d) D1 (m as in text) तथाहं. K1 तथा त्वं कर्तुमर्हसि; V1 B3.5 D3–5 तथा कर्तुमिहार्हति. — After 29, S ins. a passage comprising several addl. adhy. given in App. I (No. 21). Cv cites many readings in this passage.

Colophon om. in S. — *Sub-parvan:* Ś1 K B5 Dn D3–6 अर्घाभि(Ś1 Dn2 अर्घ्याभि-; K2 °र्घादि)हरण; B1 D1.2 शिशुपालवध; B2.6 राजसूय, अर्घ्याभिहरण and शिशुपालवध (B6 om. the third one). B3.4 (both om. sub-parvan name) mention only वासुदेवार्घाभिहरण. — *Adhy. no.* (figures, words or both): K1 (marg.) 35 (as in text); K2 D3 36; K4 34; Dn1 38. — *S'loka no.*: K2.3 32; Dn D1.2 33; M1 30.

## 36

1 After the ref., G4 om. 1–4. — a) D1 एवमुक्तस्. K3 T1 भीष्मे. — b) Ś1 K3.4 Dn D6 महाबलः; Ñ1 °मनाः; D4 °यशः (for °यशाः). — c) D1.2 आजहार (for व्याजहार). Ś1 [उ]त्तमं; G1.2 [अं]तरे; G6 ततस् (for [उ]त्तरं). K1.2 पश्चात् (for तत्र). — d) Ñ1 सहदेवः प्रतापवान्; B3–6 D3–5 °देवो महामनाः; T1 G3.5.6 M °देवोर्थ(T1 °द्ध)तत्त्ववित्; G1.2 °देवस्तु तत्त्ववित्.

अद्रोहे समयं कृत्वा चिच्छेद नमुचेः शिरः ।
शक्रः सा हि मता तस्य रिपौ वृत्तिः सनातनी ॥२०
द्वावेतौ ग्रसते भूमिः सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ २१
नास्ति वै जातितः शत्रुः पुरुषस्य विशां पते ।
येन साधारणी वृत्तिः स शत्रुर्नेतरो जनः ॥ २२
शत्रुपक्षं समृध्यन्तं यो मोहात्समुपेक्षते ।
व्याधिराप्यायित इव तस्य मूलं छिनत्ति सः ॥ २३
अल्पोऽपि ह्यरिरत्यन्तं वर्धमानपराक्रमः ।
वल्मीको मूलज इव ग्रसते वृक्षमन्तिकात् ॥ २४
आजमीढ रिपोर्लक्ष्मीर्मा ते रोचिष्ट भारत ।
एष भारः सत्त्ववतां नयः शिरसि धिष्ठितः ॥ २५
जन्मवृद्धिमिवार्थानां यो वृद्धिमभिकाङ्क्षते ।
एधते ज्ञातिषु स वै सद्योवृद्धिर्हि विक्रमः ॥ २६ C. 2. 1963 B. 2. 55. 19 K. 2. 81. 19

D1 (marg. *sec. m.* as in text) मितं; D4 च तं; G2 हि तद्; M1 इमं (for हि तं).

20 B4 missing (cf. v.l. 18). — ᵃ) K1-3 Ñ1 B2.3.5.6 Dn1 D1 अद्रोह॰; D5 अद्रोहं; G1 M2 शक्रोपि (G1 ॰सि); G2 विद्रोहे; M1 इंद्रोपि (for अद्रोहे). — ᶜ) K1 शक्रस्य (for शक्रः सा). Ś1 मतां; B3 मतिस् (for मता). K4 शक्रः संभिहिता तस्य; V1 Dn(!) D8 शक्रः साभिमता तस्य; B1.2 D1.2 शक्रः (D1.2 ॰क्र-) समा म(B2 समय)तिस्तस्य; S शक्रेण विहिता (G5 ॰दितौ) तात (G2 तत्र). — ᵈ) K1.3 D5 G1.2 रिपोर् (for रिपौ). K4 वृत्ति॰; D4 वृतिः; G3 वृत्तः. B1.2 D1.2 रिपोर्वृद्धिनिवेशने (B1 ॰निषेवने).

21 = (var.) 5. 33. 49. — B4 missing (cf. v.l. 18). — ᵃ) Ś1 K4 B (B4 missing) D (except Dn D5) द्वाविमौ; V1 T1 G5 द्वावेव; G6 द्वावेता. K3 ग्रसतो. G4 भूमिं. — ᵇ) D8 T1 G (except G5) M1 सर्पौ; M2 सर्प॰. Cv cites text. K3 बिलशयानि च; B1.3 D3 S Cv बिल(G8 बलि)शयावि(B3 ॰मि)व. — ᶜ) D4 चावियोद्धारं; S चाप्य(G4 चव्य)योद्धारं. — ᵈ) G3 M2 च प्रवासिनं; G4 वाप्र॰. Cd cites अप्रवासिनं (as in text).

22 B4 missing (cf. v.l. 18). — ᵃ) G2 जातिजः; Cd ॰तः (as in text). T1 शत्रुं. — D1 om. 22ᶜ–23ᵇ. — ᶜ) Ś1 K1.2.4 B1 D2.4 G4 साधारणा; T1 ॰रिणी. — ᵈ) G3 स्व- (for स). K2.4 G1 शत्रुं (for शत्रुर्). K4 जना.

23 B4 missing (cf. v.l. 18). D1 om. 23ᵃᵇ (cf. v.l. 22). — ᵃ) Ś1 समिध्यंतं; K1 समुद्यंतं; K2 समृद्धांतं; B1 D6 G2 ॰द्धं तं; B2 ॰द्धार्थं; D2 ॰ध्यर्थं; D5 ॰ध्यंत (for ॰ध्यन्तं). T1 G1.3.5.6 M शत्रुपक्ष(G6 ॰क्षः)समृद्धिं तां; G4 ॰पक्षासमुद्धान्तां. — ᵇ) D5 महान् (for मोहात्). B6 समपेक्षते. — ᶜ) Ś1 व्याधिराप्यायितव्य इव (hypermetric); K3 व्याधिराप्यायत इव; D3 व्याधिरप्यायि॰; S आप्यायित (T1 आप्याधित; G2 प्रप्यायित) इव व्याधिस्. — ᵈ) K1 मूलान्; G2 मूर्तिं; Cv कुलं(?) (for मूलं).

24 B4 missing (cf. v.l. 18). — ᵃ) V1 स्वल्पो (for अल्पो). B5 D2.4 हि (for ऽपि). Ś1 V1 B5 D3-5 M2 रिपुर्; Ñ1 शत्रुर् (for ह्यरिर्). Ś1 K4 Ñ1 V1 B3.5 Dn1 D3-6 अत्यर्थं; D2 इत्यंतं (for अत्यन्तं). T1 G1.2 M1 अमित्रः सूक्ष्मवृत्तिर्हि; G4 (corrupt) अल्पेन स्विद्यरिरत्यंतं. — ᵇ) Ś1 K Ñ1 V1 B2.3.5 Dn D3 वर्ध(Dn1 ॰र्ते॰; K4 corrupt)मानः पराक्रमैः (B2.5 ॰मः); D1 वर्त्तमानः पराक्रमः; T1 G1.2 M1 राजानमपराक्रमः (G2 M1 ॰मं). — ᵈ) T1 गर्हते (for ग्रसते). Ś1 मूलम् (for वृक्षम्). G2 अंतिकं; G3 अंतिकान्; Cd as in text.

25 B4 missing (cf. v.l. 18). G6 om. 25–26. — ᵃ) Ś1 K2 D2.5 लक्ष्मी; K4 D3 ॰क्ष्मीं (for ॰क्ष्मीर्). — ᵇ) K2.4 D4 त-; K3 च; G2 वै; Cd ते (as in text). — K1 om. 25ᶜ–26ᵇ. — ᶜ) D3 एव (for एष). V1 भावः; Cd भारः (as in text). — ᵈ) T1 G3-5 M1 अरेः; M2 अयः (for नयः). Ś1 [अ]धिष्ठितः; K2 D2 Cd (one MS.) विष्ठितः; K3 धिष्ठिताः; K4 तिष्ठितः; S (G6 om.) तिष्ठतां (G2 ॰ति) (for धिष्ठितः).

26 B4 missing (cf. v.l. 18). G6 om. 26 (cf. v.l. 25); Ś1 K1 om. 26ᵃᵇ (for K1 cf. v.l. 25). — ᵃ) G1 M2 आत्मवृद्धिम्; Cd जन्म॰ (as in text). B3 आत्मानं; S (G6 om.) अरीणां; Cv आर्याणां; Cd अर्थानां (as in text). — ᵇ) B3 इव कांक्षति; B5.6 D1-5 अभिकांक्षति; G2 ॰रक्षते. — ᶜ) K1.3 B2.3 D1(*sup. lin.* as in text).4.5 एष ते; T1 नैधते; G3 एवं ते (for एधते). Ś1 जातिषु (for ज्ञा॰). — ᵈ) K2 D1 ॰वृद्धि॰; K4 ॰वृत्तिर्; G2 ॰वृद्धिं (for ॰वृद्धिर्). B3.6 T1 G2.4.5 M1 विक्रमात् (for ॰क्रमः). G3 सद्योवृद्धिरविक्रमात्. Cd as in text.

27 B4 missing (cf. v.l. 18). — ᵃ) D4 न प्राप्य; S सं(G1 M2 अ)प्राप्य (T1 ॰प्यं) (for नाप्राप्य). — ᵇ) Ś1 संगमो; K1 V1 प्रशमो; G1 संक्षमो (for संशयो). K1 नो (for मे). G1 न विद्यते (for भवि॰). — ❀ Cd:

C. 2. 1964 B. 2. 55. 20 K. 2. 81. 20 नाप्राप्य पाण्डवैश्वर्यं संशयो मे भविष्यति ।
अवाप्स्ये वा श्रियं तां हि शेष्ये वा निहतो युधि ॥ २७

अताद‍ृशस्य किं मेऽद्य जीवितेन विशां पते ।
वर्धन्ते पाण्डवा नित्यं वयं तु स्थिरवृद्धयः ॥ २८

इति श्रीमहाभारते सभापर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

## ५१

शकुनिरुवाच ।
यां त्वमेतां श्रियं दृष्ट्वा पाण्डुपुत्रे युधिष्ठिरे ।
तप्यसे तां हरिष्यामि द्यूतेनाहूयतां परः ॥ १
अगत्वा संशयमहमयुद्ध्वा च चमूमुखे ।
अक्षान्क्षिपन्नक्षतः सन्विद्वानविदुषो जये ॥ २
ग्लहान्धनूंषि मे विद्धि शरानक्षांश्च भारत ।
अक्षाणां हृदयं मे ज्यां रथं विद्धि ममास्तरम् ॥ ३
दुर्योधन उवाच ।
अयमुत्सहते राजञ्श्रियमाहर्तुमक्षवित् ।
द्यूतेन पाण्डुपुत्रेभ्यस्तत्तुभ्यं तात रोचताम् ॥ ४

अप्राप्य संशयो न भविष्यतीत्यन्वयः ।✽ — [c]) K1 आदास्ये तां; K2 आवाप्स्ये तां; K3 अवाप्येषां (for अवाप्स्ये वा). K1 श्रेय (for श्रियं). K1-3 चाहं (for तां हि). — [d]) K1.2.4 Ñ1 V1 B D1.3-6 शिष्ये; K3 शेषे; G5 शये (for शेष्ये). G2-4 M2 शयिष्ये वा हतो युधि.

28 B4 missing (cf. v.l. 18). — [a]) K B1.2.5 Dn D3-6 एताद‍ृशस्य; B3 ततोद‍ृशस्य; G2 अनाहुतस्य; G3-5 अनाद‍ृतस्य; G6 अनावृतस्य; Cv अनावृत्तस्य; Cd as in text. G6 कर्मे (for किं मे). — [b]) D3.5 जीवितस्य; T1 विजितेन (for जीवि°). — Cd cites 28[cd] (with v.l.). — [c]) K1 B6 वर्धंते. B6 पांडवो. B2 D1.2 तात (for नित्यं). — [d]) D5 नु; G1.4 M1 हि (for तु). Ś1 K3 D6 स्थिरबुद्धयः; K1 स्थिरमुद्धयः; K2 °बंधयः; Ñ1 T1 G1.5 M2 स्थितवृ°; V1 [अ]हृतबुद्धयः; B1.6m D1.2.5 Cd स्थिरवृत्तयः; B2 [अ]स्थिरवृत्तयः; B3 G4 क्षतवृद्धयः; B5 Cn [अ]स्थिरवृद्धयः; Dn(!) [अ]स्थिरबु°; G6 [अ]स्थितवृ°. ✽ Cd: स्थिरा वृद्धिविरहिणी वृत्तिर्येषां । Cn: अस्थिरा वृद्धिरहिता वृद्धिः संपत् येषां ।✽

Colophon. B4 missing. — *Sub-parvan:* Ś1 K1.2 B1-3.5 D1-6 G1 M1 द्यूत; K4 मंत्र. — *Adhy. name:* M2 दुर्योधनवाक्यं. — *Adhy. no.* (figures, words or both): K1 (marg.) 54; K2.3 D3 52; Dn1 55; S 91 (G4 66). — *S'loka no.:* K2 M1 19; K3 18; Dn D4 21; T1 20.

### 51

1 1[a]-10[e] missing in B4 (cf. v.l. 2. 50. 18). Cd cites 1[ab] (as in text). — [a]) D1 स (for यां). T1 G5 एनां; G3 एकां (for एतां). — [d]) K1 दूतेन (for द्यूतेन). K1 T1 G5 पुरः; G1 M वरः; G3 पुरं (for परः). Ś1 V1 B2.3.5.6 D3-5 द्यूतेनाहूय तान्परान्; K4 B1 Dn D6 द्यूतेन जयतां वर; D1.2 द्यूतेना(D1 चा)ह्वय ते परान्. — After 1, K4 Dn D3-6 ins.:

494* आहूयतां परं राजन्कुन्तीपुत्रो युधिष्ठिरः ।
[ D3-5 आहूयते (D5 °त). ]

2 B4 missing (cf. v.l. 1). — [a]) K3 अकृत्वा; G4 आगत्वा. — [b]) K1 अयुध्य च; K3 अयुद्धाय (for अयुद्ध्वा च). K2.3 चमूक्षये (for °मुखे). — [c]) K2 अक्षितः सन्; B1.3.5.6 D1.2 अक्षविदो; G4 अक्षिपतो (for अक्षतः सन्). Cv cites अक्षतः (as in text). — [d]) G4 अविदुषा (for °षो). K1 D5 जयं; K2 D6 जयत्; K4 मयन् (for जये). Ś1 अविद्वान्विदुषो जयं; V1 B6 विद्वांस्तान्विजये परान्; B3 विद्वान्वै विदुषो जये.

3 B4 missing (cf. v.l. 1). — [a]) K2.3 B1 T1 ग्रहान्; D1-3.5 G3.6 M2 ग्लाहान्; D4 ग्लहा; G2.4 ग्लहं; Cd.n as in text. Cv refers to ग्लहः. — [c]) Ś1 T1 G1.2 (by corr.) ज्या; K2 V1 G2 (before corr.) [ऽ]द्य; G3 [ऽ]न्त्या (sic) (for ज्यां). — [d]) Ś1 महाप्फरं; K महाफलं; Ñ1 B1.5.6 Dn D1.2 G6 Cd ममास्फुरं; V1 °स्पदं; B2 °परं; B3 °क्षरं; D4 °स्फुटं; D6m °फरं (for ममास्तरम्).

4 =(var.) 2. 45. 40. B4 missing (cf. v.l. 1). G3 om. the ref. — [b]) G6 जेतुम् (for श्रियम्). G4 इच्छति (for अक्षवित्). — [c]) K4 पांडुपुत्रेणः (sic); G4 °पुत्रेषु. — [d]) B1.3 रोच्यतां. Ś1 K B5 Dn D6 तदनुज्ञातुमर्हसि.

5 B4 missing (cf. v.l. 1). — [b]) Ñ1 G1 M1 महामते; V1 विशां पते; B1 G2.6 M2 महामतेः (for

धृतराष्ट्र उवाच ।

स्थितोऽस्मि शासने भ्रातुर्विदुरस्य महात्मनः ।
तेन संगम्य वेत्स्यामि कार्यस्यास्य विनिश्चयम् ॥ ५

दुर्योधन उवाच ।

विहनिष्यति ते बुद्धिं विदुरो मुक्तसंशयः ।
पाण्डवानां हिते युक्तो न तथा मम कौरव ॥ ६
नारभेत्परसामर्थ्यात्पुरुषः कार्यमात्मनः ।
मतिसाम्यं द्वयोर्नास्ति कार्येषु कुरुनन्दन ॥ ७
भयं परिहरन्मन्द आत्मानं परिपालयन् ।
वर्षासु क्लिन्नकटवत्तिष्ठन्नेवावसीदति ॥ ८
न व्याधयो नापि यमः श्रेयःप्राप्तिं प्रतीक्षते ।
यावदेव भवेत्कल्पस्तावच्छ्रेयः समाचरेत् ॥ ९

धृतराष्ट्र उवाच ।

सर्वथा पुत्र बलिभिर्विग्रहं ते न रोचये ।
वैरं विकारं सृजति तद्वै शस्त्रमनायसम् ॥ १०
अनर्थमर्थं मन्यसे राजपुत्र
संग्रन्थनं कलहस्यातिघोरम् ।
तद्वै प्रवृत्तं तु यथाकथंचि-
द्विमोक्षयेच्चाप्यसिसायकांश्च ॥ ११ C. 2. 1976 B. 2. 56. 12 K. 2. 82. 14

°त्मनः). — c) K3 V1 B1.2.5.6 D1–5 वक्ष्यामि; T1 चेत्स्यामि (for वेत्स्यामि). — d) Ñ1 T1 G2–6 M मंत्र° (for कार्य°). G3 विनिर्णयं (for °श्चयं). V1 B3 कार्याकार्यविनिश्चयं; G1 मंत्रव्याग्रस्य निश्चयं. $5^{cd} = 2.45.41^{cd}$.

6 B4 missing (cf. v.l. 1). — After the ref., T1 G (except G1; G4 om. line 4) ins. (Cv glosses):

495* कृष्णादभ्यधिकः सोऽपि बुद्ध्या क्षत्ता विशां पते ।
केवलं धर्ममेवाह न तद्विजयसाधनम् ।
नयश्च धर्मतोऽपेतस्तथैव भरतषभ ।
तस्माद्विनयतो जेतुस्तावुभौ च विरोधिनौ ।

[ (L. 1) G2 transp. बुद्ध्या and क्षत्ता. — (L. 3) G6 तन्मतो° (for धर्मतो°). Cv seems to have read धर्मतपनः (for धर्मतोपेतः). — (L. 4) T1 G3.5 विजयतो हे(G5 जे)तुस्; G2 विनयतोपेतस् (for °तो जेतुस्). T1 G3 अ- (for च). ]

— a) Ś1 K Dn D1(marg. *sec. m.*).6 व्यपनेष्यति; B1.2 D1.2 प्रतिहं(B1 °हिं)स्यति; B3.5 D3–5 G1.4 M1 निहनिष्यति; T1 G3 विहरि° (for विहनि°). D4.6 बुद्धिर् (for °द्धिं). — b) B (B4 missing) D1–5 नात्र संशयः; G1.3 M2 मुक्तसंशयं. — c) T1 हितो. — d) G3 वृथा (for तथा). Ñ1 तव (for मम). D1.2 T1 M1 कौरवः.

7 B4 missing (cf. v.l. 1). — a) V1 B3.5 D3–5 नारभेतान्यसामर्थ्यात्; G1 नाहरेत्परसा°. Cn cites नारभेत. — c) D3 मतिं साम्यं; T1 M2 मतिसाम्य-. B1 तयोर् (for द्वयोर्). G2 नासि. — d) G4 कार्ये च. K3.4 G3 °नंदनः; B5 D3–5 °सत्तम.

8 B4 missing (cf. v.l. 1). — a) B1–3.6 D2 भयात्; D1 °यान्; Cv as in text. Ñ1 हि परमं (for परिहरन्). K2 G1.3 मंदम्; G2.4 Cv मत्त (for मन्द). — b) K1 आसनं परिपालयेत्; B1–3 D1.2 G3 आत्मनः (B1 G3 °त्मानं) परिपालनं (G3 °पातयत्). — c) K3 खिन्नवत्तिष्ठन्; T1 G5 क्लिन्नपटवत्; G1.3.4.6 M °घटवत्; G2 °विटपात्; Cv °वटवत् (for °कटवत्). — d) K3 पुमान्नैवावसीदति.

9 B4 missing (cf. v.l. 1). — a) Dn2 श्रमः; D1 गमः; D2 मयः; G4 मम (for यमः). — b) Ś1 K4 Ñ1 V1 Dn D6 प्राप्तुं श्रेयः; B2 D4 G1 श्रे(G1 श्रि)यं प्राप्तिं; G3 श्रेयः प्राप्तुं. V1 B1 G2 परीक्षते; B6 प्रचक्ष्यते (for प्रती°). — Cd cites $9^{cd}$ (with v.l.). — c) B1 यावदेतद् (for °देव). Ñ1 G2 कार्यं; B1.3.5.6 T1 G3.5.6 M Cd कल्यस्; G1.4 काल्यस्. Cd gloss निर्व्याधिः; Cn as in text (gloss समर्थः). — d) V1 B3 विचिंतयेत् (for समा°).

10 B4 missing up to वैरं वि- in $10^{c}$ (cf. v.l. 1). — Cd cites $10^{ab}$ (with v.l.). — a) K4 सर्वदा (for °था). — b) S (except G2) Cd तैर् (for ते). Ñ1 V1 रोचय. K4 B (B4 missing) D (D2 marg. *sec. m.* as in text) विग्रहो मे (B2 ये) न रोचते; Cd as in text. — B4 resumes from कारं. — c) G6 यद्वा (for वैरं). K2 B2 Cd (?) विकारः; T1 G1.3–6 M1 °नाशं; G2 °रागं; Cv विकोशे; Cn as in text. M2 वैरं विना विसृजति. — d) Ś1 Ñ1 V1 B1 D1.2 G2 अनामयं; Cd as in text.

11 a) K2 अनर्घमर्घं; B6 अनघं (om. अर्थं). B2 ins. वै after °मर्थं. — b) K1.3.4 D6 संक्रंदनं; T1 संक्रंदितं; G1.3 सग्रंथिनं (G3 °तं); G2.4 M2 संग्रंथितं (M2 °नं); G5.6 संग्रंथितं; Cd as in text. Dn(!) D6 कलहस्यातियाति; T1 G2–6 कलहं चातिघोरं. K2 क्लेशकरं कल्पहस्यातिघोरं. — c) K2 D4 प्रवर्तं; Dn2 प्रमत्तं; D2 प्रवृद्धं; G2 प्रयुक्तं; G4 वृत्तं च (for प्रवृत्तं). Ñ1 तु यथाकदाचिद्; G6 जयतां कथंचिद्. Cd cites तद् and यथाकथंचित्

दुर्योधन उवाच ।

द्यूते पुराणैर्व्यवहारः प्रणीत-
स्तत्रात्ययो नास्ति न संप्रहारः ।
तद्रोचतां शकुनेर्वाक्यमद्य
सभां क्षिप्रं त्वमिहाज्ञापयस्व ॥ १२

स्वर्गद्वारं दीव्यतां नो विशिष्टं
तद्वर्तिनां चापि तथैव युक्तम् ।
भवेदेवं ह्यात्मना तुल्यमेव
दुरोदरं पाण्डवैस्त्वं कुरुष्व ॥ १३

धृतराष्ट्र उवाच ।

वाक्यं न मे रोचते यत्त्वयोक्तं
यत्ते प्रियं तत्क्रियतां नरेन्द्र ।
पश्चात्तप्स्यसे तदुपाक्रम्य वाक्यं
न हीदृशं भावि वचो हि धर्म्यम् ॥ १४

दृष्टं ह्येतद्विदुरेणैवमेव
सर्वं पूर्वं बुद्धिविद्यानुगेन ।
तदेवैतदवशस्याभ्युपैति
महद्भयं क्षत्रियबीजघाति ॥ १५

(as in text). — d) Ś1 इमे क्षिण्वंत्यसयः सायकाश्च; K1 न मोक्षसे त्वं सदसीन्साय°; K2 Cd त्वमे (Cd इमे) क्षिण्वंत्वसवः सायकां(Cd °का)श्च; K3 विमा क्षिण्वंत्वन्नयः साय°; K4 विद्धि मोक्षंते त्वसयः सायकाश्च; Ñ1 विमोक्षये रचयन्सायकाश्च; V1 B Dn D1–5 सृजेदसीन्निशितान्सायकांश्च; D6 विमोक्षंते ह्यसयः सायकाश्च; T1 विमोक्षयच्चाप्यसिसायकांश्च; G2 द्वौ मोक्षयेच्चाप्यसिसायकं च; G4 विमोक्षये चाप्यसि-सायकं च.

12 D4 om. the ref. — a) Ś1 K1.2 B1.2 D1.2.6 G2.4.6 Cd द्यूतं. K1 प्रहारैर्; K2 D1 Cd पुराणो; K4 D2 पुराणे; B4 प्रवीणैर्; B6 (corrupt) पणैर् (for पुराणैर्). K4 G1 व्यवहार-; B1 व्यवहारं; M2 व्यवहारैः; Cd as in text. G1 व्यवहारनीतस्. B1 प्रणीतं; Dn1 (marg. *sec. m.* as in text) प्रतीतस्; Cd.n as in text. — b) Ś1 तत्रात्यये; K1.2.4 B6 D1.2.6 तत्रानयो. G6 नास्ति स्म (for °स्ति न). — c) Ñ1 V1 B3 D1–5 T1 G1.3.4.6 M ins. ते after °चतां. [Perhaps read so; standard hypermetric type.] — d) G6 तद् (for त्वम्). G4 [आ]ज्ञापय त्वं.

13 a) V1 B3 श्रेयोद्वारं; B4 श्रेयः सं-; Cd स्वर्गद्वारं (as in text). K4 B2.6 D4 T1 दिव्यतां; G4 विदिवान् (for दीव्यतां). K1 नोवशिष्टं; G6 नापि शिष्टं. — b) B1.2.6 D1.2 चैव (for चापि). K4 D6 तथापि; Cd तथैव (as in text). V1 Dn(!) मुक्तं; D6 पुत्र; Cd युक्तं (as in text). — c) G2 भवेदेव; G3 °देष; G4 °दिदं. S (except G5.6) ह्यात्मनस्. K1 G1 M1 तुल्यमेतद्; B4 Dn G5 M2 °मेवं. B1 भवेदिदैरा(? read °हैवा)त्मना तुल्यमेवं; B2 भवेदेहात्मनस्तुल्यमेवं; B5 भवेच्चेहात्मनस्तु(m °देवं ह्यात्मना तु)ल्यमेवं; B6 भवेद्दैवं स्वात्मनस्तुल्यमेवं; D1.2 भवेत्तच्चेदात्मनस्तुल्यमेवं; D3–5 भवेच्चेहा(D4 °च्चैव ह्या)-[t](D5 °वं). Cd cites several words as in text. — d) K2 दुरो(द्यूतं)दरं; D5 (m as in text, glossing कपटाक्षं) उरोदरं; T1 G1.3.5 M दरोदरं; G2 दुराचारं; Cd.v as in text. K4 त-; V1 B1.2.6 D2 तत् (for त्वं).

14 G6 om. the ref. — a) K2 transp. न and मे. K3 मे (for न मे). Ś1 रोचये. K3 रोचते यस्त्वयोक्तं; G2 रोचयते त्वयोक्तं. — b) D2 तत्ते; G2 यं ते (for यत्ते). Ś1 K2 क्रियतां तन् (by transp.); K1 तत्कुरुतां. K3 om. तत्. — c) D6 पश्चात्तप्स्ये. Ś1 तदतिक्रम्य; V1 B3 Dn1 D1 तदुपक्रम्य; B1.2 ह्येतदुपाक्रम्य; B6 ह्येतदुत्क्रम्य; D2 ह्येत-दुत्तस्य; Cn as in text. K1–3 पश्चात्तप्यसे तदुत्क्रम्य (K1 तदुत्क-; K3 तदुत्तस्य) वाक्यं; Ñ1 पश्चातापांस्तप्यसे त्वं व्युदस्य; S पश्चात्त्वं (T1 G4 °श्चाद्धि त्वं; G2 °श्चात्त्वं वै; G3 °श्चाद्यत्त्वं; G5 °श्चाच्चेत्त्वं; G6 °श्चाच्चेत्) तप्यसे दुस्तरं च वाक्यं (G1 M2 om. वा°). — d) K1.3 B2 D2.6 हीदृशो; Cd as in text. B1 तात (for भावि). K1 हि तथ्यं; K2.3 हि पथ्यं; K4 D6 हि धर्मं; Ñ1 V1 B2 [ऽ]द्य धर्म्यं (B2 °र्मं); B1.3.5.6 D2–5 ह्यधर्म्यं. Cd cites धर्मं. T1 न भीवमभावि चाद्य प्रयुक्तं (sic); G1 M2 न हीदृशं भावि चोद्यं (M2 °द्य) प्रयुक्तं; G2–6 M1 न हीदं भावि चाद्य प्रयुक्तं.

15 a) K4 G4 दृष्ट्वा (for दृष्टं). G4 ह्येतं. Ś1 G3 विदुरेणेव सर्वं; K1 °रेण सर्वं; K2–4 B2 Dn D1.6 T1 G4.5 °णैव सर्वं; Ñ1 V1 B4–6 °णैवमेवं; B1 D2 °णैवमेतत्; G6 °णैवमेत. — b) Ś1 K B2 Dn D1.6 विपश्चिता; B3.6 सर्वं बुद्ध्या; D2 एतत्सर्वं; D4 सर्वं बुद्धिं; T1 प्राप्तस्येतद्; G3.5 प्राप्तं ह्येतद्; G6 वसं (sic) पूर्वं (for सर्वं पूर्वं). Ś1 V1 बुद्धि(V1 विद्धि)विद्यागमेन; K1 T1 G1.3.5.6 M बुद्धि(G3 ब्रह्म)विद्यां गतेन; B3.4.6 D1.2 विद्धि (D1 विधि-) विद्यानुगेन. G2.4 पूर्वं पूर्वं विधिविद्योनु(G4 °वद्यं स्म)मेने. — c) Ś1 तदेवैतदवगम्याभ्युपैति; K4 तदेव वैतद्दैववशादभ्यु°; B1.3.6 D2.4.5.6 (by corr.; orig. as in text) तदेवैतद्दैव-

वैशंपायन उवाच ।
एवमुक्त्वा धृतराष्ट्रो मनीषी
दैवं मत्वा परमं दुस्तरं च ।
शशासाचैः पुरुषान्पुत्रवाक्य
स्थितो राजा दैवसंमूढचेताः ॥ १६
सहस्रस्तम्भां हेमवैडूर्यचित्रां
शतद्वारां तोरणस्फाटिशृङ्गाम् ।
सभामग्र्यां क्रोशमात्रायतां मे
तद्विस्तारामाशु कुर्वन्तु युक्ताः ॥ १७
श्रुत्वा तस्य त्वरिता निर्विशङ्काः
प्राज्ञा दक्षास्तां तथा चक्रुराशु ।
सर्वद्रव्याण्युपजह्रुः सभायां
सहस्रशः शिल्पिनश्चापि युक्ताः ॥ १८
कालेनाल्पेनाथ निष्ठां गतां तां
सभां रम्यां बहुरत्नां विचित्राम् ।
चित्रैर्हैमैरासनैरभ्युपेता-
माचख्युस्ते तस्य राज्ञः प्रतीताः ॥ १९
ततो विद्वान्विदुरं मन्त्रिमुख्य-
मुवाचेदं धृतराष्ट्रो नरेन्द्रः ।
युधिष्ठिरं राजपुत्रं हि गत्वा
मद्वाक्येन क्षिप्रमिहानयस्व ॥ २०
सभेयं मे बहुरत्ना विचित्रा C. 2. 1986 B. 2. 56. 22 K. 2. 82. 24

वशादु°; V1 B2.5 तदेव तद्दै(V1 तद्दैवैतद्दे)ववशादु°; D1 तदेवैतदवशस्यादुपैति (m as in text); D3 तदेव वैद्दैवव-शादु°; T1 G5 तदेव तावदवश्यमभ्यु°; G2 तथैवेदमवश्यमभ्यु°; G3 तदैव तमवश्यमभ्यु°; G4 तथैवैदं ह्यपश्यमित्यु° (sic). Cd cites अवशस्य (as in text); Cv cites तद्दैवेतदयशस्य (gloss: दुर्योधनं प्रति संबुद्धिः). — d) G2 महाभयः. Ś1 V1 B D क्षत्रियजीवघाति; Ñ1 °राजघाति; T1 (by corr.) °बीजभूति; G2.4 M2 °बीजघाती; G3 °बीजहानिः.

16 a) Ś1 इत्येवमुक्त्वा. — b) Ñ1 दुष्करं च. — c) G2 शशंस सोचैः. Ś1 परवान् (for पुरुषान्). G4 पुत्रवाक्यात्; M2 °वाक्यैः. — d) Ś1 °संमूढचित्तः.

17 Before 17, B3.6 ins. धृतराष्ट्र उ°. — a) S सहस्रस्थूणां. K1.3 Ñ1 V1 B D5 हेमवैदूर्य°; K4 हेमवैडुर्य°; D3 हेमवैद्वूर्य°. D1.2 वैडूर्यहेमोपचितां (anuṣṭubh). — b) K2.3 शतद्वारं; G4 शक्रद्वारां; G6 तावद्द्वारां. Ś1 M2 स्फाटिकतोरणांकां; B1.2 तोरणस्फाटिकशृंगां (B2 °गीं); K4 तोरणस्फाटिकाग्र्यां; V1 B3-6 D3-5 तोरणोदग्रशृंगां (D3 °गाः); Dn (!) तोरणस्फाटिकाख्यां; D6 तोरणास्फाटिकाढ्यां; T1 स्फाटिकं तोरणाग्रां; G M1 स्फाटिक(G5 °को)तोरणाग्र्यां (G1 M1 °ढ्यां; G5.6 °ग्रां). Cd cites स्फाटिकं (v.l. स्फटिकी). See Addenda. D1.2 (anuṣṭubh) शतद्वारांशतोरणां (D1 cont.: स्फाटकशृंगमुख्या); see above. — c) Ś1 सभामन्यां; K4 समभ्याग्र्यां; T1 सभामेतां; G1 सभामग्र्य°; M2 सभामध्यां (for सभामग्र्यां). B3 क्रोषमात्रायतां; D3 क्रोशमात्रा°; G4 क्रोशमात्रा°. K3 वा; Ñ1 वै; D1m तां; M2 च (for मे). G2 द्विक्रोशमात्रं चायतामग्रमेतान्. — d) K1 Dn1 G1-3 Cn तद्विस्तराम्; G4 त्वद्विस्ताराम्; K3 [अ]प्येतद्विस्ताराम्; D1.2 तावद्विस्ताराम्. K1 युक्ता; B2 मुक्ताः; G2 युक्तः; M2 युक्तां (for युक्ताः).

18 D4 om. 18. — b) Ñ1 Dn1 D3.5 G1.2.6 प्रज्ञा. Ś1 दक्षास्ते; K2 वक्षास्तं; D5 G4 दक्षास्ता; G6 दक्षस्तां. K Ñ1 V1 B1.5 Dn D3.6 तदा (for तथा). G1 चक्रुराज्ञाः; G4 °राज्ञः. G2 प्रज्ञादशास्तां तथा चक्रुराज्ञां. Cd cites प्रज्ञादक्षाः (=प्रज्ञानिपुणाः). — c) B3 [उ]पाजह्रुः; G2 [अ]पजह्रुः; G3 [आ]पजह्रुः. Ś1 M2 सभायाः (M2 °या). — d) T1 G5 शिल्पिनां; M1 शिल्पिनं. K3.4 Dn D5 चैव; B1 चाभि-; B2.5.6 D1-3.5 चाशु (for चापि).

19 a) G6 काले कालेनाथ; M1 कालेनाल्पेनापि. G4 नष्टां (for निष्ठां). Cd cites निष्ठा. K4 गता तां; D6 T1 G3 गतानां. — b) G3 रत्नां (for रम्यां). K1-3 बहुरत्नाचितां तु (K1 नु); K4 बहुरत्नां विचित्रतां; D4 G3 बहुरम्यां विचित्रां. — c) G4 M2 हेमैर् (for हैमैर्). Cd.np आस्तैरर् (for आसनैर्). — d) K3.4 D2 आचक्षुस्ते; D1 आचक्रु°; G2 अचख्यु°. G5 तत्र (for तस्य). K1 राज्ञा; D3 राज्ञाः. G4 प्रतीतां; Cd as in text.

20 a) G6 नियमं (for विदुरं). K1.2.4 मंत्रमुख्यं; T1 corrupt. — b) G4 उवाचैथा धृ°. B6 नरेंद्रं; G2 नरेंद्राः. — c) Ś1 तु मत्वा; K4 Ñ1 B2.4 Dn D1.2.6 च गत्वा; V1 B3.6 समेत्य (for हि गत्वा). — d) G2 अत्र (for इह).

21 Before 21, D4 (marg. sec. m.) ins. धृतराष्ट्र उ°. — a) K4 बहुरत्नविचित्रां; D1.2 बहुरम्या विचित्रा. — b) D5 (marg. sec. m.) हेमासनैर्. K4 D3 उपपन्नां. G6 महार्गैः. K4 corrupt. — c) K2 स (for सा). — d) D1.2 वर्ततामेव; G2 °मेत्य; G3 वर्धतामत्र; G4.6 वर्ततामेति. T1 G3 चैत्य; G6 चेत्य; G3 चेद्य (for चेति).

C. 2. 1986
B. 2. 56. 22
K. 2. 82. 24

शय्यासनैरुपपन्ना महार्हैः ।
मा दृश्यतां भ्रातृभिः सार्धमेत्य
सुहृद्द्यूतं वर्ततामत्र चेति ॥ २१

मतमाज्ञाय पुत्रस्य धृतराष्ट्रो नराधिपः ।
मत्वा च दुस्तरं दैवमेतद्राजा चकार ह ॥ २२

अन्यायेन तथोक्तस्तु विदुरो विदुषां वरः ।
नाभ्यनन्दद्वचो भ्रातुर्वचनं चेदमब्रवीत् ॥ २३

नाभिनन्दामि नृपते प्रैषमेतं
मैवं कृथाः कुलनाशाद्बिभेमि ।
पुत्रैर्भिन्नैः कलहस्ते ध्रुवं स्या-
देतच्छङ्के द्यूतकृते नरेन्द्र ॥ २४

धृतराष्ट्र उवाच ।

नेह क्षत्तः कलहस्तप्स्यते मां
न चेद्दैवं प्रतिलोमं भविष्यत् ।
धात्रा तु दिष्टस्य वशे किलेदं
सर्वं जगच्चेष्टति न स्वतन्त्रम् ॥ २५

तदद्य विदुर प्राप्य राजानं मम शासनात् ।
क्षिप्रमानय दुर्धर्षं कुन्तीपुत्रं युधिष्ठिरम् ॥ २६

इति श्रीमहाभारते सभापर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥

— After 21, B1.2.5.6 Dn D1.2.6 ins. an addl. colophon (*adhy. no.*: Dn1 56).

22 Before 22, all MSS. ins. वैशं° उ° (*or* वैशं°). — a) D1.2 स तम् (for मतम्). G3 मूर्खस्य (for पुत्रस्य). — b) K1–3 जनाधिपः; B1.2.5.6 D1–5 महीपतिः; S प्रतापवान् (for नरा°). — c) K2 च विदुरो; G3 दुरोदरं (for च दुस्तरं). K3 Ñ1 B6 D6 T1 चैवम्; G2.5 देवम् (for दैवम्). — d) Ś1 एवं (for एतद्). Ś1 K राजन्; D6 राज्यं (for राजा).

23 a) Ś1 अन्यां येन; D1 अन्यापि न (for अन्यायेन). K4 तथोक्तेस्तु; B5 यथोक्तस्तु. — b) K1 D5 वर. — d) Ñ1 G1–4.6 M1 नरेंद्रं (for वचनं). K2 वेदम्; G4 चैवम् (for चेदम्).

24 Before 24, N G4.6 M2 ins. विदुर उ° (*or* विदुरः). — a) Ś1 K B4 Dn D5 G6 नाभिनंदे; T1 G5 नाहं नंदे (for नाभिनन्दामि). G1 नृपतेः. Ś1 B1 D1.2 प्रे(D2 प्रै)ष्यमेतं; K1 प्रेषमेतं; K2 प्रैपमंत्रं तं (sic); V1 प्रेषणं वै; B6 G1 M प्रे(M1 प्रै)षणं मे; T1 प्रैक्षमेतद्; G2 प्रेषितं मे; G4 द्वेषमेतं. Cd cites प्रैष्यं. G3 नाभिद्रते दि नृपते तथा प्रैषमेतन् (sic). — b) D1 नैवं; T1 मैव; G4 नवं (for मैवं). K1.2.4 Dn2 D5 कृथा; G6 कथाः. — c) B4 भिन्नः. V1 कलहस्तु; D2 कलहं ते; D6 °हंस्ते. T1 G1–4 ध्रुवः. G4 स्यां. — d) K4 एतद्युक्ते; G1 अतः शंके; G2 एतस्मिन्मे; G4 तच्छंके (for एतच्छङ्के). K1 B1.6 D1.2 द्यूतकृतं; D4 द्यूतं कृते; T1 G1.2.5 द्यूतकृत्ये.

25 G3 om. the ref. — a) G2 नैवं; T1 नेहः (sic). D3 कलहात्. Ś1 मा (for मां). K1 तप्ससे मां; K2 B (except B3) G1–4 M तप्यते मां (G2.3 मा); K4 तस्य सेवं (sic); T1 G5 तस्य वै मे. — b) K1 [ए]वं दैवं; K2 D4 चेदैवं; K3 D2 G2.3 चेदेवं; M2 चेद्देवं. B1–3.6 D1.2 G1 M2 प्रतिकू(D1 °कु)लं; D3 °लोभं; G2 °लोमो; G6 °कुलो. G1.4 M भविष्यति. — c) = 2. 52. 14c. K2 B2.6 Dn D2–6 नु (*or* [अ]नु-) (for तु). Dn1 शिष्टस्य; G5 दृष्टस्य; Cd.n as in text. D4 वचो; G2 वशं (for वशे). N1 किलैवं. — d) T1 om. सर्वं. M2 दिशश्च (for जगच्च). Ś1 K Dn D2.6 Cnp तिष्ठति; T1 G1.3–5 M1 चेष्टते; Cn as in text. G2 चेष्टितमस्वतंत्रं.

26 a) K1 वदस्व; T1 त्वदद्य (for तद°). D1.2 विदूर; D4 G1.2 विदुरः; G4 वीर सं-. — c) T1 क्षिप्रमानाय; G2 °मानीय. — d) K3 कुंतिपुत्रं. — Cd cites 26cd entire (as in text).

Colophon. — *Sub-parvan*: Ś1 K1–3 B1–5 D (except Dn1) G1.6 द्यूत; K4 धृतराष्ट्रमंत्र. — *Adhy. name*: B6 G1 M विदुरप्रेषणं (to which द्यूतोपक्रमे is prefixed in M1). — *Adhy. no.* (figures, words or both): K1 (marg.) 55; K2.3 D3 53; Dn1 57; S 92 (G4 67). — *S'loka no.*: K2 M1 26; Dn 5; D1.2 17; D4 25; T1 28.

# ५२

वैशंपायन उवाच ।

ततः प्रायाद्विदुरोऽश्वैरुदारै-
र्महाजवैर्बलिभिः साधुदान्तैः ।
बलान्नियुक्तो धृतराष्ट्रेण राज्ञा
मनीषिणां पाण्डवानां सकाशम् ॥ १

सोऽभिपत्य तदध्वानमासाद्य नृपतेः पुरम् ।
प्रविवेश महाबुद्धिः पूज्यमानो द्विजातिभिः ॥ २

स राजगृहमासाद्य रभवनोपमम् ।
अभ्यगच्छत धर्मात्मा धर्मपुत्रं युधिष्ठिरम् ॥ ३

तं वै राजा सत्यधृतिर्महात्मा
अजातशत्रुर्विदुरं यथावत् ।
पूजापूर्वं प्रतिगृह्याजमीढ-
स्ततोऽपृच्छद्धृतराष्ट्रं सपुत्रम् ॥ ४

युधिष्ठिर उवाच ।

विज्ञायते ते मनसो न प्रहर्षः
कच्चित्क्षत्तः कुशलेनागतोऽसि ।
कच्चित्पुत्राः स्थविरस्यानुलोमा
वशानुगाश्चापि विशोऽपि कच्चित् ॥ ५

विदुर उवाच ।

राजा महात्मा कुशली सपुत्र
आस्ते वृतो ज्ञातिभिरिन्द्रकल्पैः ।
प्रीतो राजन्पुत्रगणैर्विनीतै-
र्विशोक एवात्मरतिर्दृढात्मा ॥ ६

इदं तु त्वां कुरुराजोऽभ्युवाच C. 2. 1998 B. 2. 58. 7 K. 2. 83. 7

## 52

1 G6 om. the ref. — a) D1 G4 (before corr.) प्रयाद्. Ś1 °रोश्वैरुदग्रैर्; K1 °रोश्वैर्विनीतैर् (विनीतै added in marg.); G4 °रोचैरुदारैर्. Cd cites 1a (entire) as in text. — b) K3 B (except B4) D1–5 G1 मनो(D3 °न)जवैर्; Dn2 महारावैर्; G3 महाबलैर्. G6 बहुभिः (for बलिभिः). G2 सुप्रदांतैः; G4 साधुमंतैः. Ś1 महाबलैः साधुदांतैः सुवेगैः. — c) D1 T1 बलाभियुक्तो. — d) Ś1 G2 मनीषिणा; K2 °षेणा; K4 मनर्षिणां; G6 मनीषिणं. K4 शकासे (sic); B4 Dn (!) D8 सकाशे.

2 a) Ñ1 B3 Dn2 D3–5 G2 सोभिपद्य; T1 G1.3–6 M सोति(T1 °ती-; G3 °नि)पत्य. Ś1 K V1 Dn D1.4.6 G1 तम(K4 °मा)ध्वानम्; B1.2 G3 तदाध्वानम्; G4 तथा°; M2 मदध्वानम्. Cn cites तत् (contrary to Dn MSS.!) and connects it (erroneously) with पुरम्; see Addenda. — c) G6 स (for प्र-).

3 b) K1 कुबेरभवनप्रभं. — c) K1 अभ्यगच्छत्सु-; Ñ1 V1 B D G1.5 अभ्यागच्छत (V1 °च्च; B6 °रस). — d) Ś1 राजपुत्रं; V1 कुंतीपुत्रं; B1.6 D1.2 T1 G2.3.5.6 M2 धर्मराजं; D3 G4 धर्मात्मानं.

4 Ś1 om. 4. — a) T1 G2.4 स (for तं). M1 राजं. — Note hiatus between 4a and 4b! — b) D3 आजातशत्रुर्; Ñ1 S ह्यजात°. — B4 om. 4cd. — c) D3 G2.3 पूजां पूर्वं; T1 प्रजापूर्वं. K1 [आ]जमीढ; T1 G3 [आ]जिमीढस्. — d) K1 सूतोपृच्छद्; D1 G6 ततोगछद्; G2 ततो पुत्रं (sic). G4 धृतराष्ट्रस्य पुत्रं.

5 a) G2 विज्ञायमानो (for °यते ते). B1.2.5.6 T1 G1.3.4.6 M1 om. ते. V1 transp. ते and मनसः. G3.4 M1 मानसो; G6 मानसे. Ś1 K Ñ1 B4.5 Dn1 D1.6 G2.5 M2 मनसोप्रहर्षः (for °सो न प्रहर्षः). — b) K2 D4.6 क्वचित्. — c) K2 D4.6 क्वचित्; K4 G6 कश्चित्. G3 पुत्र[:]. Ñ1 B1–3.6 D1.2.6 m °स्यानुकूला. In K2 प्रसन्नः is added (as gloss?) after °स्या. Cd cites अनुलोमाः (as in text). — d) K1.3 Dn D4.6 विशोथ; K2 विशोद्य; K4 B2 विशोक; Ñ1 तथैव; B5 वि ... हि; G1 M विशोस्य. Cd cites विशः (as in text). K1 G3 कश्चित्; K2 क्वचित्. G2 पौत्राश्चापि वीतशोकास्तु कच्चित्; G4 वशानुगा वीतशोकाश्च कच्चित्.

6 Some MSS. om. the ref. — a) D4 सुपुत्र. — b) K1 धृतो; D1 वृत्तो (for वृतो). Ś1 राजभिर् (for ज्ञातिभिर्). K Dn D3.6 T1 इंद्रकल्पः. — c) D4 पीतो. Ñ1 B1.2.6 D1.2 राजा (for राजन्). Ś1 K2.4 Ñ1 B1–4 Dn D1.2.3 G5.6 M1 Cd पुत्रगुणैर्; K1 प्रीतिगुणैर्. K4 N1 V1 B4 Dn D3.5.6 Cd विनीतो; B1.2.6 D1.2 उदारैर् (for विनीतैर्). — d) Ñ1 [आ]त्मनतिर्; Cd as in text. K1 V1 B D1–5 Cd (v.l. as in text).n (p as in text) महात्मा (for दृढा°). G2 विशंकमावस्तु दृढं महात्मा.

7 a) Ś1 च त्वा; D5 नु त्वां; S तु त्वा (G3 om. तु; G5

पूर्वं पृष्ट्वा कुशलं चाव्ययं च ।
इयं सभा त्वत्सभातुल्यरूपा
भ्रातॄणां ते पश्य तामेत्य पुत्र ॥ ७
समागम्य भ्रातृभिः पार्थ तस्यां
सुहृद्द्यूतं क्रियतां रम्यतां च ।
प्रीयामहे भवतः संगमेन
समागताः कुरवश्चैव सर्वे ॥ ८
दुरोदरा विहिता ये तु तत्र
महात्मना धृतराष्ट्रेण राज्ञा ।
तान्द्रक्ष्यसे कितवान्संनिविष्टा-
नित्यागतोऽहं नृपते तज्जुषस्व ॥ ९

युधिष्ठिर उवाच ।

द्यूते क्षत्तः कलहो विद्यते नः
को वै द्यूतं रोचयेद्बुध्यमानः ।
किं वा भवान्मन्यते युक्तरूपं
भवद्वाक्ये सर्व एव स्थिताः स्म ॥ १०

विदुर उवाच ।

जानाम्यहं द्यूतमनर्थमूलं
कृतश्च यत्नोऽस्य मया निवारणे ।
राजा तु मां प्राहिणोत्त्वत्सकाशं
श्रुत्वा विद्वञ्श्रेय इहाचरस्व ॥ ११

युधिष्ठिर उवाच ।

के तत्रान्ये कितवा दीव्यमाना
विना राज्ञो धृतराष्ट्रस्य पुत्रैः ।
पृच्छामि त्वां विदुर ब्रूहि नस्ता-
न्यैर्दीव्यामः शतशः संनिपत्य ॥ १२

तु कृत्वा). G5 ह्युवाच. — b) D1 transp. पूर्वं and पृष्ट्वा. K1-3 Dn2 D4 M2 दृष्ट्वा (for पृष्ट्वा). K1 G1 चाप्ययं च; K2 वाचयं च; K4 वाच्यपं च. Cd cites अव्ययं (as in text). B1 पूर्वं पृष्ट्वा कुशलानामयं च. — d) K V1 B1.2 Dn D5.6 G5.6 दृश्य(K2 दश)तामेत्य (K4 °त); B3.5.6 D3 दृश्यतामद्य; B4 D4 दृश्यता (sic) मेद्य; D2 पश्य तां मेद्य.

8 a) K1 समागत्य. Ś1 पार्थिवस्यां; K4 तस्य पार्थो; G3 पार्थं तस्य. — b) G1 सुहृद्द्यूतः. Ś1 Ñ1 V1 B1.3.6 D2-4 कारय (D2 °यं); D1 क्रिय (sic); G1 कौरय (sic); G4 रम्यतां; M2 वर्तताम् (for क्रियतां). G2 आंतरं च; G4 क्रीडतां च; M2 अद्य चेति. — c) D1.3 T1 G3-6 प्रियामहे. K4 Ñ1 V1 Dn D6 भवतां. — d) K4 B3 सभां गताः; V1 D3-4.6 G1.4.6 M सभागताः; T1 G5 सहागताः. K Ñ1 B4 Dn D6 T1 G3-5 M2 चापि (for चैव).

9 a) Ś1 दुरोदरे; K2 °दरो; T1 G1-3.5 M दरोदरा(G2 °रे); Cd as in text. Ś1 ये च तेत्र; K3 तत्र ये तु (by transp.). — b) B3 D3-5 महात्मानो. — c) T1 तं (for तान्). B3.5 D3-5 द्रक्ष्यसि त्वं (for द्रक्ष्यसे). G2 जितवान्. B3 G2.3 संनिकृष्टान्. — d) B1 अभ्यागतान्; B2.3 D1.2 अभ्यागतोहं. B1 T1 G2-5 om. [ऽ]हं. B3 D1.2 om. तज्. T1 G5 तां; G3 तान्; G4 तं (for तज्).

10 G4 om. (hapl.) 10-11. — a) V1 B1.6 D1.2 दृश्य° (for विद्य°). K2 om. नः. K1 D2 वै; B1.6 च; B3 वः; G2 तु; M2 न (for नः). — b) Ś1 को वा; G2 क्रोधैर् (for को वै). K4 D4 रोचये; Ñ1 B1.4.5 Dn2 T1 G2.3.5 °द्वै; G6 °तां. D4 बुध्यमाश्च (corrupt). — c) G2 तत्किं (for किं वा). G6 भवो (for भवान्). Dn2 मन्यसे; G6 जन्यते. K1.2 प्राप्तकालं (for युक्तरूपं). — d) D1.2 तव (for भवद्-). K1 स्थिता स्मः; K2 D3 स्थिता स्म; Dn2 D2.4.5 T1 G5 M2 स्थिताः स्मः; G1 स्थितात्मा; G2 स्थितोस्मः; G6 स्थितां स्म. Ś1 भवद्वाक्ये सर्वथावस्थिताः स्म.

11 G4 om. 11 (cf. v.l. 10). D1 om. the ref. — a) G2 °रूपं (for °मूलं). — b) K2 G5 कृतस्य. B5 D3.5 [ऽ]त्र; D1.2 वि-; D4 [ऽ]र्थं- (for ऽस्य). Ś1 B D1-5 निवारणे मया (by transp.). — c) K Ñ1 V1 B5 Dn D6 च मां; T1 G2.5 हि मां; G1.3.6 M तु मा. D1 °काशात्. — d) V1 त्वं वै (for श्रुत्वा). Dn2 D1.2 T1 G2 विद्वाञ्श्रेय; G3 वच[:]श्रेय. D1-5 एव (for इह).

12 G4 om. the ref. — a) K1 तत्रास्ते; B6 D1.2 G1.3-6 M °सन्; T1 G2 तत्र वै. Ś1 द्यूतमाना; D3 T1 G4 दिव्य°; G3.6 M1 दीप्य°. — b) D3 राज्ञः सभायां; T1 राज्ञस्तु वै; G1 M वृता राज्ञो; G2 नरास्तु वै; G6 विना राज्ञा. — c) Ś1 K2 D3 T1 G1-3 M2 त्वा. Ś1 V1 B1.2 D1.2 तत्वं; N1 B3 D3.4 नस्तद्; B6 नस्त्वं (for नस्तान्). B5 पृच्छामि त्वां ब्रूहि विदुरस्तद्. — d) B2 D1 कैर् (for यैर्). Ś1 यैर्दीव्यसे; K1 ये दीव्यमानाः; B1 कैर्दीव्येमः; Dn1 (before corr.).n2 यैर्दिव्यामः; D2 कैर्दीव्यमानः; T1 अन्यैर्दिव्ये; G1 यैर्दिव्येमः; G2 यैर्दीवितः; G4 देविष्ये च वयः; G5.6 अन्यैर्दिव्यैः; M2 यैर्दीव्येम. K4 Dn D1.2.6 सततं (but Cn शतशः as in text!); G2 शकुनिः. B1 G2 M1 संनिपात्य.

13 a) D5 गंधारराजः. — b) K1 राजानुदेवी; K4 V1 B3.5.6 Dn D3-5 राजा(Dn1 राज्ञा)क्षदेवी; Ñ1 °तिदेवः; G2

विदुर उवाच ।

गान्धारराजः शकुनिर्विशां पते
राजातिदेवी कृतहस्तो मताक्षः ।
विविंशतिश्चित्रसेनश्च राजा
सत्यव्रतः पुरुमित्रो जयश्च ॥ १३

युधिष्ठिर उवाच ।

महाभयाः कितवाः संनिविष्टा
मायोपधा देवितारोऽत्र सन्ति ।
धात्रा तु दिष्टस्य वशे किलेदं
नादेवनं कितवैरद्य तैर्मे ॥ १४
नाहं राज्ञो धृतराष्ट्रस्य शासना-
न्न गन्तुमिच्छामि कवे दुरोदरम् ।
इष्टो हि पुत्रस्य पिता सदैव
तदस्मि कर्ता विदुरात्थ मां यथा ॥ १५
न चाकामः शकुनिना देविताहं
न चेन्मां धृष्णुराह्वयिता सभायाम् ।
आहूतोऽहं न निवर्ते कदाचि-
त्तदाहितं शाश्वतं वै व्रतं मे ॥ १६

वैशंपायन उवाच ।

एवमुक्त्वा विदुरं धर्मराजः
प्रायात्रिकं सर्वमाज्ञाप्य तूर्णम् ।
प्रायाच्छ्वोभूते सगणः सानुयात्रः
सह स्त्रीभिर्द्रौपदीमादिकृत्वा ॥ १७
दैवं प्रज्ञां तु मुष्णाति तेजश्चक्षुरिवापतत् । C. 2. 2009 B. 2. 58. 18 K. 2. 83. 18

राजाह देवी; M2 राजाधिदेवी; Cd. n as in text (!). Cv confused; राजा तु देवी cited, but apparently read °क्षदेवी. B3 D2 कृतपातो; G2 °हस्ते. Cd cites अकृतहस्तः (= यथेच्छमक्षपातकः)! B1 महाक्षः; Cd as in text. — $^{c}$) K1 चित्रसेनोथ; K2 °नस्य; G6 °नः स. K1.2 M2 राजन् (for राजा). — $^{d}$) K4 D8 सत्यवृतः; G6 सत्रव्रतः. K1 कुरुमित्रो. K2 गयश्च.

14 $^{a}$) K1 महानु(नु marg.)भावाः; V1 B5 D3–5 महा(D3 मया)भागाः; S °मायाः (M1 before corr. °मयाः); Cd as in text. — $^{b}$) K4 Dn (!) D1.6 मायाविनो; V1 मायापरा; G2.4 मायोपाया; Cd. n मायोपधा (as in text). — $^{c}$) = 2. 51. 25$^{c}$. K1 धात्रा सु-; K2.4 B1.6 D (except Dn1) T1 G5 धात्रानु-; G2 °त्रात्र. K2 -शिष्टस्य; Cd as in text. K4 वितोदं; G1 किलेद्यं; G4 कवेदं. — $^{d}$) B3 नादेविनं; D1.2 T1 G5 न देवनं; G6 नादेवितं (for नादेवनं). T1 ते (for तैर्). Ś1 K Ñ1 Dn D6 सर्वं जगत्तिष्ठ(Ñ1 °च्चेष्ट)ति न स्वतंत्रं (cf. 2. 51. 25$^{d}$). See Addenda.

15 $^{a}$) K4 राज्ञा. D8 धृतराष्ट्रशास — $^{b}$) Ś1 G4 आगंतुम्; D2 T1 G3.5 नागंतुम् (for न गन्तुम्). K2 V1 B2.3.6 D2–5 S (except M2) अर्हामि; D1 अर्होस्मि (for इच्छामि). D2 कुर्वे (for कवे). T1 G1–4.6 M2 दरोदरं (G1 °रः); Cd as in text. — $^{c}$) G4 इष्टोसि. K4 सदैत; G4 न दैवतम्; G6 सुदैव. — $^{d}$) K2 तचास्मि; G2.3.6 तस्मिन्; G4 अस्मिन् (for तदस्मि). G2.4 add त्वं after कर्ता. K4 विदुरोत्थ; T1 °रार्थ. K2 D8 G1.2 M °त्थ मा यथा; G6 °र्थमनाथ. D5 m राजा सुतेष्टः स यथाह मां वै.

16 $^{a}$) Ś1 B3 D5 G2 च कामः; K1 V1 चाकामं; B1 D1.2 वाकामं (D1 °मः); M कामतः. B1.6 D1.2.4 शकुनिर्; G6 शक्तिना (for शकुनिना). K3 G2 देव(K3 *sup. lin.* क्रीड)ताहं; V1 B1.3 D1.2 देविता मां; G3 देवनं (for देविताहं). — $^{b}$) G1–5 M न ह्यात्मना (for न चेन्मां). Ñ1 V1 B2.4 Dn D6 जिष्णुर्; B5.6 D4.5 धृष्ट; D1 M2 धृष्टम्; D2 दृष्टम्; D3 धृष्टा (for धृष्णुर्). K3 त्वा आह्वयता; K4 त्वष्टत्साह्वयते (sic); G2.3 धृष्णुना(G2 °रा)ह्वयता; G4 नृष्णुराह्वयता (for धृष्णुराह्वयिता). B5 अह्वयते; Dn1 (by corr. *sec. m.*) D3.5 आह्वयते; Dn1 (orig.) आह्वयित्वा; D4 आहूयते. K1 न चेन्मां धृतराष्ट्रोह्वयिता सभायां; B1.3 न चेन्मां धृतराष्ट्र आह्वयते (B3 °यिता) सभायां; T1 न चाह्वयिता धृतराष्ट्रः सभायां; G6 न ह्यात्मानमधिवातासभायां (corrupt). — $^{c}$) D2 त्वं; T1 G2.6 वै; G3 यन् (for [अ]हं). K1 तन्निवृत्तेः; T1 न विवर्तें; G1 न निवृत्ते; G2 नातिवर्तें (for न निवर्तें). T1 G6 कदापि. — $^{d}$) Ś1 तथाहितं; K1 तदा विघ्नं; S तथा (G4–6 °दा) हीदं (for तदाहितं). G6 प्रतस्थे (for व्रतं मे). — After 16, G5 ins. a passage given in App. I (No. 36); then 21$^{ab}$; then App. I, No. 37: which are found in other S MSS. after 20.

17 M2 om. the ref. — $^{a}$) B6 G5 एवमुक्त्वा तु; G2 एवं तूक्त्वा. — $^{b}$) K2 प्रयात्रिकं; D1 प्रायांतिकं; G2 सांयातिकं; G3 प्रायाणिकं; Cd as in text. G5 दूर्णं. — $^{c}$) K1 प्रायात्ससूते (m सुते श्वोभूते); K3 प्रयाच्छ्वो°. Ś1 सयात्रः (for सानुयात्रः). — $^{d}$) Ś1 द्रौपदीप्रमुखीभिः; V1 B3 याज्ञसेनीं गृहीत्वा.

18 $^{a}$) K2 प्राज्ञं; K3 प्रज्ञा; G5 प्राज्ञां. Ñ1 V1 B4 Dn हि प्रज्ञां; B1 G3 प्रज्ञानं; B3.5.6 D3.5 तु प्रज्ञां (by transp.); D4 प्रज्ञा हि; T1 प्रज्ञां हि; G4 च प्रज्ञां. Ś1 K D6 वि- (for तु). V1 पुष्णाति. — $^{b}$) K4 Ñ1 V1 B4 Dn

C. 2. 2009 B. 2. 58. 18 K. 2. 83. 18 धातुश्च वशमन्वेति पाशैरिव नरः सितः ॥ १८
इत्युक्त्वा प्रययौ राजा सह क्षत्रा युधिष्ठिरः ।
अमृष्यमाणस्तत्पार्थः समाह्वानमरिंदमः ॥ १९
वाह्लिकेन रथं दत्तमास्थाय परवीरहा ।
परिच्छन्नो ययौ पार्थो भ्रातृभिः सह पाण्डवः ॥ २०
राजश्रिया दीप्यमानो ययौ ब्रह्मपुरःसरः ।
धृतराष्ट्रेण चाहूतः कालस्य समयेन च ॥ २१
स हास्तिनपुरं गत्वा धृतराष्ट्रगृहं ययौ ।
समियाय च धर्मात्मा धृतराष्ट्रेण पाण्डवः ॥ २२
तथा द्रोणेन भीष्मेण कर्णेन च कृपेण च ।
समियाय यथान्यायं द्रौणिना च विभुः सह ॥ २३
समेत्य च महाबाहुः सोमदत्तेन चैव ह
दुर्योधनेन शल्येन सौबलेन च वीर्यवान् ॥ २४
ये चान्ये तत्र राजानः पूर्वमेव समागताः ।

$D_6$ transp. तेजः and चक्षुः. $G_2$ °रिवापदि; $G_3$ °रिवापतन्. — $^{c}$) $K_3$ दैवस्य (for धातुश्च). $K_1$ वशमभ्येति; $G_3$ वशमत्येति. — $^{d}$) $K_2$ नरं; $D_3$ चरैः; $G_3$ करी; $G_3$ (before corr.)$_{.4.5}$ करे (for नरः). $T_1$ $G_2$ करस्थितः ($G_2$ °तैः); $G_6$ विकर्षतः (for नरः सितः). $K_{3.4}$ स्थितः; $B_{1.3}$ शितः; $D_5$ क्षितौ; Cd सितः (as in text).

19 Before 19, $G_{1.2}$ $M_1$ ins. वैशं°. — $^{a}$) $G_4$ (hypermetric) इत्यादिश्य (for इत्युक्त्वा). — $^{b}$) $Ś_1$ कृत्वा; $K_{1.2}$ $D_{2.3.5.6}$ (before corr.) $M_2$ क्षत्ता (for क्षत्रा). — $^{c}$) $K_4$ $B_4$ Dn $D_6$ तस्याथ; $G_5$ तं पार्थः. — $^{d}$) $G_4$ सहाह्वानम्. $Ś_1$ अतंद्रितः; $K_4$ $D_3$ $G_5$ अरिंदम; $V_1$ $B_{1.2.6}$ $D_{1.2}$ अरेस्तदा ($B_1$ °था).

20 $^{a}$) $K_2$ $B_{3.6}$ Dn $D_{2.4.5}$ बाह्लीकेन; $G_6$ बाहकेन. $Ñ_1$ $V_1$ $B_4$ Dn $D_{1.4.5}$ (before corr.) यत्तम्; $B_6$ तूर्णम् (for दत्तम्). $G_2$ बाह्लीकश्च रथैर्युक्तम्. — $^{c}$) $K_2$ $B_3$ $G_{3.4}$ $M_1$ Cd.np परिच्छिन्नो; $V_1$ $B_5$ °च्छिद्य; Cn as in text. $B_5$ $D_{3-5}$ राजा; $G_2$ (by corr.) पार्थैः. — $^{d}$) $G_2$ सर्वैश्च (for भ्रातृभिः). $K_2$ पार्थिवैः; $K_3$ $G_2$ पांडवैः; $D_{1.3}$ पांडव. — After 20, $G_5$ reads 496*. — A passage given in App. I (No. 36) is ins. in S (Cv glosses one line) after 20 (in $G_5$ transposed, with $21^{ab}$ and App. I, No. 37 to after 16).

21 $G_6$ om. 21. $G_5$ transp. $21^{ab}$ with App. I, Nos. 36 and 37; cf. just above. — $^{a}$) $Ś_1$ सेव्यमानो. — $^{b}$) $V_1$ $B_{3.5}$ $D_{3-5}$ ततो (for ययौ). $B_{1.2.6}$ $D_{1.2}$ ब्रह्मपुरष्कृ($D_{1.2}$ °स्कृ)तः. — After $21^{ab}$, S (except $G_6$ $M_2$) ins. a passage given in App. I (No. 37). — $G_{3-5}$ om. $21^{cd}$. — $^{c}$) $D_{3-5}$ धृतराष्ट्रस्य. — $^{d}$) $K_{1-3}$ Dn $D_6$ $M_1$ (*inf. lin.* as in text) कालेन; all comm. as in text! — $T_1$ $G_4$ $M_1$ ins. after 21: $G_5$ (which transp. $21^{ab}$ and om. $21^{cd}$), ins. after 20:

496* प्रविवेश ततो राजा पुरं नागाह्वयं ततः ।
[ $T_1$ नगरं नागसाह्वयं (for the post. half). ]

22 $^{a}$) $G_{1.3.6}$ $M_2$ हस्तिनपुरं. $M_1$ स गत्वा हास्ति° (by transp.). — $^{b}$) $Ś_1$ $Ñ_1$ $G_{1.6}$ धृतराष्ट्रपुरं; $D_1$ °गृहान्. $K_2$ धृतराष्ट्र(स्य)गृहं ययौ. — $^{cd}$) $K_3$ $D_{1.3}$ $G_2$ समीयाय; $T_1$ $G_{3-5}$ M समेयाय; $G_1$ सन्मेयाय (sic); Cv as in text. $M_2$ यथान्यायं (for च धर्मात्मा). $G_6$ धृतराष्ट्रेण भीष्मेण समीयायाथ पांडवः.

23 $^{ab}$) $K_3$ $T_1$ $G_2$ ततो (for तथा). $K_4$ $Ñ_1$ $V_1$ $B_4$ Dn $D_6$ transp. द्रोणेन and भीष्मेण; $B_{3.5}$ $D_{3-5}$ transp. भीष्मेण and कर्णेन. $G_6$ कर्णेन भारद्वाजेन द्रौणिना च कृपेण च. — $G_6$ om. $23^{c}$–$24^{b}$. — $^{c}$) $D_{1.3}$ समीयाय; $T_1$ $G_{1-5}$ M समे($G_1$ °न्मे)याय; cf. v.l. 22. $D_3$ यथान्यायौ. — $Ñ_1$ $G_2$ om. (hapl.) $23^{d}$–$24^{a}$ ($24^{a}$ being read as in S). — $^{d}$) $Ś_1$ चाभितः; $K_{1-3}$ चा($K_1$ च)भिभुः; $D_6$ वा विभुः; $T_1$ च विभाः; $M_1$ [अ]थ विभुः (for च विभुः).

24 $G_6$ om. $24^{ab}$; $Ñ_1$ $G_2$ om. $24^{a}$ (cf. v.l. 23). — $^{a}$) $V_1$ $B_{1.2.6}$ $D_{1.2}$ बाह्ली($V_1$ $D_1$ °ह्लि)केन तदा ($V_1$ °था) राजा; $B_{3-5}$ $D_{3-5}$ बाह्लीकेन च राजेंद्र; $T_1$ $G_{1.3-5}$ M समेयाय ($T_1$ समेत्य च; $G_1$ बाह्लिकेन) यथान्यायं. — $^{b}$) $Ś_1$ $K_{1.3}$ चैव हि; $Ñ_1$ वा विभुः; $V_1$ B (except $B_3$) $D_{1-5}$ भूरिणा; S ($G_6$ om.) चाभिभूः ($G_1$ चापि ह). — $^{c}$) $Ś_1$ $K_{2.3}$ $G_6$ वीरेण; $K_1$ कर्णेन; $T_1$ $G_{1.2.4.5}$ M सभ्रात्रा (for शल्येन). $G_3$ दुर्योधने सह भ्रात्रा. — $K_{2.3}$ om. (hapl.) $24^{d}$–$25^{b}$ and the prior half of 497*. — $^{d}$) $G_6$ सोमदत्तेन पांडवः; $M_2$ कुरुभिः सौबलेन च.

25 $K_{2.3}$ om. $25^{ab}$ (cf. v.l. 24). — $^{ab}$) $G_3$ राजानं. $G_6$ सिंधुराजेन वै सार्धं तथा शकुनिना नृप. — After $25^{ab}$, N ($K_{2.3}$ om. the prior half; cf. v.l. 24) $G_{3.5}$ ins.:

497* दुःशासनेन वीरेण सर्वैर्भ्रातृभिरेव च ।
[ $K_1$ च तथा; $V_1$ $B_{1.3.5.6}$ $D_{2.3.5}$ $G_3$ कौंतेयः; $D_{1.4}$ $G_5$ कौंतेय (for वीरेण). $Ś_1$ om. the post. half, and $25^{c}$–$26^{a}$. $K_2$ $G_5$ सर्वे; $K_4$ $Dn_2$ $D_1$ सर्वै. ]

— On the other hand, $G_6$ ins. after $25^{ab}$:

498* अन्यैश्च धार्तराष्ट्रैश्च नृपैरन्यैः समेयिवान् ।

— $G_6$ om. $25^{cd}$. — $^{c}$) $K_{2.3}$ राज्ञा च; $T_1$ $G_2$ हि तदा;

जयद्रथेन च तथा कुरुभिश्चापि सर्वशः ॥ २५
ततः सर्वैर्महाबाहुर्भ्रातृभिः परिवारितः ।
प्रविवेश गृहं राज्ञो धृतराष्ट्रस्य धीमतः ॥ २६
ददर्श तत्र गान्धारीं देवीं पतिमनुव्रताम् ।
स्नुषाभिः संवृतां शश्वत्ताराभिरिव रोहिणीम् ॥ २७
अभिवाद्य स गान्धारीं तया च प्रतिनन्दितः ।
ददर्श पितरं वृद्धं प्रज्ञाचक्षुषमीश्वरम् ॥ २८
राज्ञा मूर्धन्युपाघ्रातास्ते च कौरवनन्दनाः ।
चत्वारः पाण्डवा राजन्भीमसेनपुरोगमाः ॥ २९
ततो हर्षः समभवत्कौरवाणां विशां पते ।
तान्दृष्ट्वा पुरुषव्याघ्रान्पाण्डवान्प्रियदर्शनान् ॥ ३०
विविशुस्तेऽभ्यनुज्ञाता रत्नवन्ति गृहाण्यथ ।
ददृशुश्चोपयातास्तान्द्रौपदीप्रमुखाः स्त्रियः ॥ ३१
याज्ञसेन्याः परामृद्धिं दृष्ट्वा प्रज्वलितामिव ।
स्नुषास्ता धृतराष्ट्रस्य नातिप्रमनसोऽभवन् ॥ ३२
ततस्ते पुरुषव्याघ्रा गत्वा स्त्रीभिस्तु संविदम् ।
कृत्वा व्यायामपूर्वाणि कृत्यानि प्रतिकर्म च ॥ ३३
ततः कृताह्निकाः सर्वे दिव्यचन्दनरूषिताः ।
कल्याणमनसश्चैव ब्राह्मणान्स्वस्ति वाच्य च ॥ ३४
मनोज्ञमशनं भुक्त्वा विविशुः शरणान्यथ ।
उपगीयमाना नारीभिरस्वपन्कुरुनन्दनाः ॥ ३५
जगाम तेषां सा रात्रिः पुण्या रतिविहारिणाम् । C. 2. 2028 B. 2. 58. 37 K. 2. 83. 62

G3.5 हि तथा. — $^{d}$) T1 G2.4 राजभिश्चापि (G2 °त्र). — After 25, G3–5 ins.:

499* समेत्य कुरुभिः सर्वैर्यथान्यायमरिंदमः ।

[ G3 सर्वैश्च; G4 तथा च (for समेत्य). G5 सर्वे (for सर्वैर्). ]

26 Ś1 om. $26^{a}$ (cf. v.l. 25); G3 om. $26^{ab}$. — $^{b}$) G6 भ्रातृभिश्च ततोत्तरैः. — G6 om. $26^{cd}$. — $^{c}$) K1 पुरं (for गृहं). — $^{d}$) S (G6 om.) संमतं (T1 °तेः; G2 °तः) (for धीमतः).

27 $^{a}$) K4 T1 गांधारिं. — K2 om. (hapl.) $27^{b}$–$28^{a}$. — $^{b}$) G6 भ्रातृभिः परिवारितः (=$26^{b}$). — G6 om. $27^{cd}$. — $^{c}$) Ś1 K1.3 सहितां; M2 सर्वे° (for संवृ°). B1 तत्र (for शश्वत्). — $^{d}$) B5 °रेव. B4 रोहिणी; G1 संवृतां.

28 K2 om. $28^{a}$ (cf. v.l. 27). — $^{a}$) Ś1 अभिवंद्य स; G1 रोहिणीमिव. K3 T1 G2–4.6 च (for स). — $^{b}$) Ś1 D1.2 G4 स; G3 सं- (for च). D5 प्रतिनंदितं. K3 यया च प्रतिसंदितः; G2 तया चाप्यभिनंदितः; G5 तथा संप्रतिनंदितः; G6 स्नुषाभिः संवृतां सतीं. — $^{c}$) B3 ज्येष्ठं (for वृद्धं). — $^{d}$) Ś1 ईदृशं (for ईश्वरम्).

29 $^{a}$) K2 D6 G1 [उ]पाघ्रातस्; Dn2 [उ]पघ्रातास्. Ś1 T1 G3.4 M1 राज्ञा (G3 °जा) च मूर्ध्न्युपाघ्रातास् (G3 °तस्); D1 राज्ञा मूर्द्धन्मुखाघ्रातास्; G5.6 (hypermetric) राज्ञा च मूर्धन्युपाघ्रातास् (G6 °तस्); M2 स राज्ञा मूर्ध्न्युपाघ्रातस्. — $^{b}$) G6 तेन तत्रा[भि]नंद्य च. — G6 om. $29^{c}$–$30^{d}$.

30 G6 om. 30 (cf. v.l. 29). — $^{a}$) D3 समाभवत्. — $^{c}$) G5 transp. तान् and दृष्ट्वा. D1.2 पुरुषव्याघ्र; D6 °व्याघ्रः. — $^{d}$) B1 पांडवान्पुरुषर्षभान्.

31 $^{a}$) B3 °स्तेप्यनुज्ञाता. — $^{b}$) Ś1 भानुमंति (for रत्न°). Ś1 lacuna; K3.4 Dn D3.6 गृहाणि च; V1 B5 D4.5 गृहाण्युत. — $^{c}$) S (except G2 M2) विविशुश् (for ददृशुश्). K1 Ñ1 V1 B Dn D3.4 M2 चोपया(B5 °जा)तांस्; K2 °यानास्; K3 °याया; K4 चोपजातास्. Ś1 ते; K2.4 D1.2.6 G3.4.6 M1 ता; T1 G2 वै (for तान्). G5 ता उपायाता (for चोपयातास्तान्). — $^{d}$) K1 गांधारी°; V1 B3.5.6 D3.4 दुःशला°; Dn(!) दुःशीला°; D5(m as in text) दुःशली° (for द्रौपदी°). M2 °कौरव- (for °प्रमुखाः).

32 $^{ab}$) K1 G4 यज्ञसेन्याः. Ś1 G3.5 परां वृद्धिं. G1 याज्ञसेन्याः परामिव (for $32^{ab}$). — $^{c}$) Ñ1 च; V1 स्व; G2 तु; G3 तान् (for ता). — $^{d}$) T1 नातिक्रमनसाभवन्; G2.3 M2 नातीव(G3 नाप्रीत-; M2 न प्रीत)मनसोभवत् (M2 °न्). Cd cites प्रमनसः (as in text).

33 G6 om. 33; K1 om. $33^{ab}$. — $^{b}$) K3 सु-; B1.2 D1.2 S (G6 om.) च (for तु). — $^{c}$) K3 दत्वा (for कृत्वा). — $^{d}$) V1 कृत्यादि; D6 कृतानि. T1 G2 प्रीतिकर्माणि भारत.

34 B1 om. (hapl.) 34. — $^{a}$) D1 कृतास्तिकाः (marg. *sec. m.* as in text); G4 कृताग्निकाः. — $^{b}$) Ś1 K2–4 Ñ1 V1 B4–6 Dn D5.6 G5 °भूषिताः; K1 °रूक्षिताः; B2 D1.2 °लेपिताः; D4 °रूपिताः. — G6 om. $34^{cd}$. — $^{c}$) Ś1 S (G6 om.) सर्वे (for चैव). B2 D1.2 कल्पा(B2 °ल्या)स्तेजस्विनश्चैव. — $^{d}$) D1 ब्राह्मणाः.

35 $^{a}$) K2 मनोन्यस्; K3 अन्योन्यम् (for मनोज्ञम्). G2 M2 कृत्वा (for भुक्त्वा). K4 मनोत्तमाशनं भुक्त्वा (corrupt). — $^{b}$) K3 स्मरणान्यथ; V1 B1–3.6 भवनान्यथ; B5 D3–5 भवनान्युत (D5 m शयनान्युत); D1.2 भवनान्यथा; T1 M2 शयनान्यथ; G1.5 शयनान्यथा; G2–4 शरणान्यथा. G6 कल्याणमनसस्तदा. — $^{c}$) Hypermetric! K4 D6 गंधर्वैर् (for नारीभिर्). — $^{d}$) K1 अवसन्; K4 D6

स्तूयमानाश्च विश्रान्ताः काले निद्रामथात्यजन् ॥ ३६
सुखोषितास्तां रजनीं प्रातः सर्वे कृताह्निकाः ।
सभां रम्यां प्रविविशुः कितवैरभिसंवृताम् ॥ ३७

इति श्रीमहाभारते सभापर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

# ५३

## शकुनिरुवाच ।

उपस्तीर्णा सभा राजन्रन्तुं चैते कृतक्षणाः ।
अक्षानुप्त्वा देवनस्य समयोऽस्तु युधिष्ठिर ॥ १

## युधिष्ठिर उवाच ।

निकृतिर्देवनं पापं न क्षात्रोऽत्र पराक्रमः ।
न च नीतिर्ध्रुवा राजन्किं त्वं द्यूतं प्रशंससि ॥ २

नारीभिः; T1 सुष्टुपुः; G2 सुप्वापुः (*for* अस्वपन्). K4 Dn (!) D6 कुरुपुंगवाः. — After 35, K4 Dn (!) D6 ins.:

500* अनन्तरं च सुषुपुः प्रीताः परपुरंजयाः ।
[ Dn (!) तत्प्राप्य (for सुषुपुः). ]

36 [b]) K1 पुण्य॰. Ś1 पतिविहारिणाम्; B1.3 D1.2 G4 Cd रतिविहारिणी. — [c]) G3–5 संस्तू(G3 ॰सू)यमाना. G2 विक्रांताः. — [d]) G6 काल्ये. K1 अवात्यजन्; B1 अथाभजन्.

37 [a]) G5 सुखोषितास्. Ś1 K4 V1 B4.6 Dn D6 G4.6 ते (for तां). — [c]) V1 दिव्यां (for रम्यां). D1 प्रविष्टास्ते (for ॰विशुः). — [d]) Ś1 अभिनंदितां; K1.3.4 Ñ1 Dn (!) D6 ॰नंदिताः; K2 ॰नंदितं; B2.4 D1 ॰संवृताः; D4 ॰संभृतां; G6 इह संवृतां.

Colophon. — *Sub-parvan:* Ś1 K B1–5 D (except D5) G1.3.6 M द्यूत. — *Adhy. name:* D5 (marg. *sec. m.*) द्यूतारंभः; G1.3.6 M सभाप्रवेशः; G5 युधिष्ठिरहस्तिनापुरप्रवेशः. — *Adhy. no.* (figures, words or both): K1 (marg.) 56; K2.3 54; D3 53; S 93 (G4 68). — *S'loka no.:* K2 36; K3 37; Dn 38; D1.2 39; T1 65; M1 69.

## 53

Before 1, K4 V1 B D (except D6) T1 (om. line 5) ins.:

501* वैशंपायन उवाच ।
प्रविश्य तां सभां पार्था युधिष्ठिरपुरोगमाः ।
समेत्य पार्थिवान्सर्वान्पूजार्हानभिपूज्य च ।
यथावयः समेयाना उपविष्टा यथार्हतः ।
आसनेषु विचित्रेषु स्पर्ध्यास्तरणवत्सु च ।
अथ तेषूपविष्टेषु सर्वेष्वथ नृपेषु च ।
शकुनिः सौबलस्तत्र युधिष्ठिरमभाषत ।

[ (L. 1) V1 रम्यां (for पार्था). — (L. 2) T1 समेदं (for ॰मेत्य). — (L. 3) K4 समभ्येत्य; B2 D2 T1 समायाता; B3 समेत्याथ; B6 ॰याता. D1 यथावयसमायत्तो (for the prior half), and उपविष्टो. — (L. 4) V1 श्रद्धास्त॰ (for स्पर्ध्यास्त॰). K4 परार्ध्यास्तरणेषु च; D3 स्पर्धास्तरणवत्सु च (for the post. half). — (L. 5) Prior half = 1. 1. 5[a]; 200, 9[a]. Dn1 तेषु तत्र (for अथ तेषु). K4 D3–5 सर्वेषु च; B1.3.6 D1.2 ॰ष्वेव (for ॰ष्वथ). — (L. 6) K4 ॰स्त्वेवं (for ॰स्तत्र). ]

1 [a]) K4 D6 G3 उपास्तीर्णा; G4 उपासीनान्; Cd as in text. G4 सभां. — [b]) Ś1 D6 नक्तं; K4 V1 B2.4.5 Dn D2 m.3–5 सर्वे; Ñ1 उक्ताश्; B6 सभ्याश्; S वयं (for रन्तुं). K2 वेते; K4 B2.4.5 Dn D2 m.3–5 त्वयि; T1 G1.2.4 चैव; G3.5 त्वेते (for चैते). B1.3 अक्षा (B3 सर्वे) वै कृतलक्षणाः; D1.2 सर्वार्थकृतलक्षणा[:]. Cd cites कृतक्षणाः (as in text). — [c]) V1 मुक्त्वा; Cd उप्त्वा (as in text). — [d]) Ś1 D1 समयोस्ति; G4 सहायोस्तु. Cd cites समयः (as in text).

2 T1 G5 om. the ref. — [a]) K3 निःकृतिर्; G5 निकृत्या; Cd as in text. — [b]) K2 अक्षात्रो; K4 T1 G1–3 न क्षत्रो; B2 D1.2 न क्षात्रं. K4 वा; B2 D1.2 न (for ऽत्र). K3 अक्षे नात्र पराक्रमं. — [c]) K4 Dn2 T1 नीतिध्रुवा (T1 ॰ध्रुवं); G6 नीतिर्ध्रुवं. Cn cites नीतिः. B1.2.6 D2 नैतन्नी(D2 ॰न्नि)तिविदामि(B6 ॰दां शि)ष्टं; D1 नैतनीतिविदोभीष्टं; G1 M1 (*inf. lin.*) अपनीतं ध्रुवा राजन्; M2 अपनीतिर्ध्रुवं राजन्. — [d]) Ś1 transp. किं and त्वं. T1 G2.4 नु; G1 तु; G3 तद् (for त्वं). K3 द्यूते; D4 दूतं.

3 [a]) V1 B3.5.6 D1–6 महिमानं; G M न च मायां (G1 मायाः; G3 corr. to मावां) (for न हि मानं). — [b]) G2 कतिनः; G3 कृतिनः; G4 निकृतो. K2 कृतवस्य;

न हि मानं प्रशंसन्ति निकृतौ कितवस्य ह ।
शकुने मैव नो जैषीरमार्गेण नृशंसवत् ॥ ३

शकुनिरुवाच ।

योऽन्वेति संख्यां निकृतौ विधिज्ञ-
श्चेष्टास्वखिन्नः कितवोऽक्षजासु ।
महामतिर्यश्च जानाति द्यूतं
स वै सर्वं सहते प्रक्रियासु ॥ ४
अक्षग्लहः सोऽभिभवेत्परं न-
स्तेनैव कालो भवतीदमात्थ ।
दीव्यामहे पार्थिव मा विशङ्कां
कुरुष्व पाणं च चिरं च मा कृथाः ॥ ५

युधिष्ठिर उवाच ।

एवमाहायमसितो देवलो मुनिसत्तमः ।
इमानि लोकद्वाराणि यो वै संचरते सदा ॥ ६
इदं वै देवनं पापं मायया कितवैः सह ।
धर्मेण तु जयो युद्धे तत्परं साधु देवनम् ॥ ७
नार्या म्लेच्छन्ति भाषाभिर्मायया न चरन्त्युत ।
अजिह्ममशठं युद्धमेतत्सत्पुरुषव्रतम् ॥ ८ C. 2. 2040 B. 2. 59. 11 K. 2. 84. 11

B1 देवनस्य; D1.2 किल तस्य. K1 वै; K4 V1 B (except B5) Dn D1.2.6 T1 G1–3.6 M1 हि (for ह). K3 निकृतौ कितवैस्त्वह; G5 निकृतिनः कृतिस्य हि (sic). — $^c$) Ś1 Dn D3 मैवं; K1 मानि-; K2.4 मा च; K3 D6 मां च; B1 G2.4.5 नैव (for मैव). K3 G1.2 नो जेषीर्; B4 नः श्रियान्; T1 निर्जैषिर् (for नो जैषीर्). — $^d$) B3 न मार्गेण; Cd as in text. D4 [अ]नृशंसवत्; G1 नृशंसवित्.

4 $^a$) Ś1 K D6 योभ्येति; Ñ1 B Dn D1–5 यो वेत्ति; T1 G4 M1(*inf. lin.*).2 न मेत्ति (G4 योन्वेति also as in text). Ś1 G3.5 सख्यं; K3 D3.6 संख्या; T1 शंखं; G4 सुखान्; G6 सख्यां; M1 सख्यान्; M2 संख्यान्; Cd as in text. Ś1 गुणज्ञः; K3 विधिज्ञै; Cd as in text. — $^b$) K1 चेष्टाधखिन्नः; K3 °सुखं नः; D5 G2.6 M2 °सु खिन्नः; G1 °स्ववीणः; G4 °सुखं न; G5 °स्वखिन्नं. G6 कितवोष्णजासु. Cd cites अखिन्नः and अक्षजासु (as in text). — $^c$) K3 यो जानाति; B3 यश्च जनोति-; D1 यस्य जानाति; T1 G2 योनुजानाति; G3–5 M2 यो विदधाति; G6 यो न जानाति; M1 (*inf. lin.*) योपि दधाति. K1 सम्यक् (for द्यूतं). — $^d$) K1 द्यूतं स; K2 (wrongly om. स) वै; D1.2 सर्वैः (for स वै). K4 D6 transp. सर्वं and सहते. G1 सर्व-; G3 सर्वो. G3.5 लभते; M2 सह तैः (for सहते). K1 D2 G4 क्रियासु; V1 यातनासु (for प्रक्रि°).

5 $^a$) K1 अक्षग्राह्यं; K2 °ग्राहः; K3 °ग्रहाः; B1 G3 M1 (*inf. lin.* as in text) Cd.v °ग्रहः; D4 °ग्लह-. M1 [अ]भिभवत्; Cd as in text. K1.2 परो नस्; D6 परं न; G1 परं त्वां; G3.5.6 परं तु; M1 परांस्त्वं; M2 परांस्तु (for परं नस्). T1 G2.4 अक्षग्लहज्ञोभिभवेत्पुरा त्वं (T1 °त्परांस्तु). — $^b$) V1 B Dn D1.2.4.5 दोषो; D3 दोषेण; T1 कल्यो; G1.2 काले (for कालो). G2 लभति (for भवति). K1 इदमर्थः; K2.3 इदमाह; K4 इह सौम्य; Ñ1 इतिमार्त्थ (sic); V1 B2–6 Dn D1.2.4.5 इह पार्थ; B1 इह मत्वा; D3 इह पार्थाः; T1 इदमत्थ; G1 इदमर्थं (for इदमात्थ). Cv cites 5$^b$ exactly as in text. — $^c$) Ś1 K2 G1.5 M2 दीव्यावहे; G4 देव्यावहे. Here and below MSS. frequently spell the stem दीव्य- with a short vowel as दिव्य-; these varieties have been mostly ignored. Ś1 B6 विशंकं; K2 विशंक; B1 D2 विशंकीः; B2.3 °शंकाः; G2 च शंकां; Cd as in text. — $^d$) B1 पणं कुरुष्वेह; B2 कुरु प्रमाणं (m °पातं) च; Dn1 D1.2 कुरु प्रपा(D2 °मा)णं च; Cn as in text. Cd cites कुरुष्व (as in text). Ś1 K3 पणं; K1 G6 पाणिं; D4 पाणां; D6 (before corr.) पानं (for पाणं).

6 G6 om. the ref. — $^a$) K4 एवमाहर्षि च सितः; T1 G3.4.6 M2 एवमाहा(G6 °ह)सितो राजन्; G1 M1 एवमाह (M1 °हा) महाप्राज्ञो; G5 एवमाभौ सितो राजन्. — $^c$) B4 लोको द्वाराणि; M1 Cv शोकद्वाराणि; Cd as in text. — $^d$) B3–5 D3–5 यो वै (D3 om. वै) आम्यत्यलं (B4.5 °नं) वशी.

7 $^a$) G2 इमं. K1 D1m.4 च; B6 हि (for वै). — $^b$) K1.2.4 B4 Dn D6 Cd निकृत्या; K3 निःकृत्या; Cv मायया (as in text). — $^c$) Ś1 तु जयेन्; D2 भुजयोर् (for तु जयो). Ś1 मध्ये; G2 युद्धो (for युद्धे). — $^d$) B1 तं परं; B6 परं तं; G4 तद्धर्मं (for तत्परं). Ñ1 सारि-; B4.5 Dn D1.3–5 T1 G1.3–6 M न तु (for साधु).

8 G6 om. 8$^{ab}$. — $^a$) K3 मृच्छंति; K4 नेछंति; B1 कृष्यंति; G3 दीव्यंति; Cv नेच्छंति; Cd as in text. K1 नार्यो म्लेछविभाषाभिः; D6 नार्यो तु म्लेंछभाषाभिः; T1 G2.4 मार्यांमृच्छं(G2 °च्छ)ति भाषाभिः; G1 M मार्यांमृ(G1 -मि)च्छंति वासोभिः. Cd cites भाषाभिः (as in text). — $^b$) B3 प्र-; B6 G1 M1 वि-; M2 [अ]नु- (for न). D6 च चरंत्युते (sic); G2 विचरत्युत.

धीमतः सहदेवस्य धर्माणामनुशासनात् ।
अविग्रहा वीतभयाः स्वकर्मनिरताः सदा ।
निकामवर्षाः स्फीताश्च आसञ्जनपदास्तथा ।
वार्धुषी यज्ञसत्त्वानि गोरक्षं कर्षणं वणिक् ।
विशेषात्सर्वमेवैतत्संजज्ञे राजकर्मणा ।
अनुकर्षं च निष्कर्षं व्याधिपावकमूर्छनम् ।
सर्वमेव न तत्रासीद्धर्मनित्ये युधिष्ठिरे ।
दस्युभ्यो वञ्चकेभ्यश्च राज्ञः प्रति परस्परम् ।
राजवल्लभतश्चैव नाश्रूयत मृषाकृतम् ।
प्रियं कर्तुमुपस्थातुं बलिकर्म स्वकर्मजम् ।
अभिहर्तुं नृपाः षट्सु पृथक्जात्यैश्च नैगमैः ।
ववृधे विषयस्तत्र धर्मनित्ये युधिष्ठिरे ।
कामतोऽप्युपयुञ्जानै राजसैर्लोभजैर्जनैः ।
सर्वव्यापी सर्वगुणी सर्वसाहः स सर्वराट् ।
यस्मिन्नधिकृतः सम्राड् भ्राजमानो महायशाः ।
यत्र राजन्दश दिशः पितृतो मातृतस्तथा ।
अनुरक्ताः प्रजा आसन्नागोपाला द्विजातयः ।

— After line 3, Dn D1 ins.:

वैतन्त्यात्सर्वतश्चैव नकुलस्य स्वभावतः ।

— (L. 4) V1 B3.6 D1.2 S (M2 om.) स्वधर्म° (for स्वकर्म°). S प्रजाः (for सदा). — (L. 5) D2.3 तदा (for तथा). S कालवर्षी च (T1 निकामवर्षैः; G2 निकामवर्षी) पर्जन्य आसीज्जनपदे तदा. — (L. 6) D3-6 यज्ञमन्त्राणि; S °संतानो (M2 °नं) (for °सत्त्वानि). B1.2.5.6 G3.4 M गोरक्ष्यं; D1.2 गौरक्ष्यं. G2.4 कर्मणा (for कर्षणं). — (L. 7) V1 B6 D2 विशेषः; D1 विशेषं (for विशेषात्). V1 B4.6 D1.2 S सर्ववर्णानां. (for °मेवैतत्). S °कर्मणि. — (L. 8) D1 (m as above) च राजानं; D2 निकर्षं च (for च निष्कर्षं). V1 B3 S अवर्षं चातिवर्षं च (G1 अवर्षणं चातिवर्षं). T1 G1.2.6 M1 व्याधिः (for व्याधि-). G3 M2 व्याधिः पावकमुच्छिन्नं; G4 व्याधिपावकमूर्जितं. — (L. 9) S सर्वमेतत्तदा नासीद् (G1 हीनं). — (L. 10) G3 दस्युतो. V1 B1.2.6 D1.2 राजभृत्येभ्यः; S राजतो वापि (for वञ्चकेभ्यश्च). D4 राज्यं (for राज्ञः). V1 B1.2.6 D1.2 S परचक्रा(M1 प्रतिरोधा)त्परस्परं. — (L. 11) T1 G3 M वृथाकृतं; G1.6 धृता°; G2 वधः कृतः; G4 तदा भयं; G5 भयाकृतिं (for मृषाकृतम्). — (L. 12) D4 उपस्थानं (for °स्थातुं). B3.6 D4 T1 G2-4 M1 सुकर्मजं; D3 स्वकामजं. — (L. 13) B4 D2 अभिहंतुं; G4 °भर्तुं (for °हर्तुं). B1.6 नृपा जग्मुः; B2.4 नयात्षट्सु; B3 नृपान्षट्सु; D1.2 (m as above) नृपात्षड्गुः; S नृपं जग्मुः (for नृपाः षट्सु). B1.6 D1.2.4 जातैश्च; B3 जातिषु. S नान्यैः कार्यैः पृथग्जनाः (G4.5 °नः). — (L. 14) D3 धर्मयुक्ते (for °नित्ये). S धर्मैर्धनागमैस्तस्य ववृधे निच(G3.4 °श्च)यो महान्. — (L. 15) G5 हि (for [S]नि D2 °युंजानो; T1 G6 °युंजंते; G1.2.5 M1 °युंजन्; G3 °युंजीत; G4 °युक्तानां; M2 °युंजंति (for °युञ्जानैः). D1 कामभोग्युपभुंजानो (for the prior half). V1 B3 D2 राक्षसैर्; B2 ब्राह्मणैर्; D3 स राजं (for राजसैर्). B1.6 ब्राह्मणैर्लोभवर्जितैः; S अक्षयैर्लोकजैर्जनाः (G4 अक्षतैर्लेपनैर्द्विजाः). — S reads lines 16–19 after 2. 12. 10. — (L. 16) S (except G4 M2) सर्वगुणः. G5 सर्वराजश्च (for °साहः स). T1 G1-3 M1 च (for स). B3 धर्मराट् (for सर्व°). — (L. 17) G1.6 तस्मिन् (for यस्मिन्). V1 अधिगतः; D3.4 अविकृतः; T1 अधिकृतैः. G2 सम्रा (for सम्राड्). S यजमानो (for भ्राज°). — (L. 18) V1 B5 D3-6 यत्र जानन्; B2.6 D2 यं राजानं (for यत्र राजन्). S अनूचाना (G2.3 °नो) दश दश (for the prior half). D वृत्तनन् (for मातृतस्). D3.4 G1.6 तदा (for तथा). — (L. 19) T1 G1-3 अनुरक्ता यं (G1 °क्ता यं; G2 °क्ता यां) प्रतीक्षंते; G4-6 M अनुरक्ता (G5.6 °क्ता; M2 °क्ता) यं प्रतिष्ठंते (for the prior half). S सोत्सह(T1 °पा)स्ता द्विजातयः.

After 2. 20. 24, S ins.:

वैशंपायनः ।
एतच्छ्रुत्वा जरासंधः क्रुद्धो वचनमब्रवीत् ।
जरासंधः ।
नाहं कंसः प्रलम्बो वा न बाणो न च मुष्टिकः ।
नरको नेन्द्रतपनो न केशी न च पूतना ।
न कालयवनो वापि ये त्वया निहता युधि ।
त्वं तु गोपकुलोत्पन्नो जानिं वै पूर्विकां स्मर ।
योऽस्मद्भयादपक्रम्य सागरानूपमाश्रितः ।
जन्मभूमिं परित्यज्य मधुरां प्राकृतो यथा ।
सोऽधुना कत्थसे शौरे शरदीव यथा घनः ।
अद्यानृण्यं करिष्यामि भोजराजस्य धीमतः ।
जामातुरौग्रसेनस्य त्वां निहत्याद्य माधव ।
चिरकाङ्क्षितो मे संग्रामस्त्वां हन्तुं ससुहृद्गणम् ।
दिष्ट्या मे सफलो यत्नः कृतो देवैः सवासवैः ।
क्लीबाविमौ च गोविन्द भीमसेनार्जुनावुभौ ।

(L. 1) G6 om. the ref. M2 एवमुक्त्वा (for एतच्छ्रुत्वा). — (L. 2) M2 om. the ref. G2 हंसः (for कंसः). — (L. 3) G3 नरेंद्रतपनो (hypermetric); G4 नैद्रतपनौ; G6 नात्र तपनो. G2.6 M1 वानरः; G3 धेनुकः (for पूतना). — (L. 5) G4 लोककुलोत्पन्नो; M2 गोपकुलोद्भूतो. — (L. 8) G2 वीर (for शौरे). — (L. 10) G5 °सेनेश्च (for °सेनस्य); — (L. 13) M2 क्षीबा° (for क्लीबा°). — (L. 14) G4-6

हिंस्यामि युधि विक्रम्य सिंहः क्षुद्रमृगानिव ।
वैशंपायनः ।
तस्य रोषाभिभूतस्य जरासंधस्य गर्जतः ।
सर्वभूतानि वित्रेसुर्ये तत्रासन्समागताः ।
श्रीभगवान् ।
किं गर्जसि जरासंध कर्मणा तान्समाचर ।
मम निर्देशकर्तृभ्यां पाण्डवाभ्यां नृपाधम ।
सामात्यं ससुतं चाद्य घातयिष्याम्यहं रणे ।
न कथंचन जीवन्वै प्रवेक्ष्यसि पुरोत्तमम् ।

After 2. 20. 34, S ins.:

जनमेजयः ।
किमर्थं वैरिणावास्तामुभौ तौ कृष्णमागधौ ।
कथं च निर्जितः संख्ये जरासंधेन माधवः ।
कश्च कंसो मागधस्य यस्य हेतोः स वैरवान् ।
एतदाचक्ष्व मे सर्वं वैशंपायन तत्त्वतः ।
वैशंपायनः ।
यादवानामन्ववाये वसुदेवो महामतिः ।
उदपद्यत वार्ष्णेयो ह्युग्रसेनस्य मन्त्रभृत् ।
उग्रसेनस्य कंसस्तु बभूव बलवान्सुतः ।
ज्येष्ठो बहूनां कौरव्य सर्वशस्त्रविशारदः ।
जरासंधस्य दुहिता तस्य भार्यातिविश्रुता ।
राज्यशुल्केन दत्ता सा जरासंधेन धीमता ।
तदर्थमुग्रसेनस्य मथुरायां सुतस्तदा ।
अभिषिक्तस्तदामात्यैः स वै तीव्रपराक्रमः ।
ऐश्वर्यबलमत्तस्तु स तदा बलमोहितः ।
निगृह्य पितरं भुङ्क्ते तद्राज्यं मन्त्रिभिः सह ।
वसुदेवस्य तत्कृत्यं न शृणोति स मन्दधीः ।
स तेन सह तद्राज्यं धर्मतः पर्यपालयत् ।
प्रीतिमान्स तु दैत्येन्द्रो वसुदेवस्य देवकीम् ।
उवाह भार्यां स तदा दुहिता देवकस्य या ।
तस्यामुद्वाह्यमानायां रथेन जनमेजय ।
उपारुरोह वार्ष्णेयं कंसो भूमिपतिस्तदा ।
ततोऽन्तरिक्षे वागासीद्देवदूतस्य कस्यचित् ।
वसुदेवश्च शुश्राव तां वाचं पार्थिवश्च सः ।
यामेतां वहमानोऽद्य कंसोद्वहसि देवकीम् ।
अस्या यश्चाष्टमो गर्भः स ते मृत्युर्भविष्यति ।
सोऽवतीर्य ततो राजा खड्गमुद्धृत्य निर्मलम् ।
इयेष तस्या मूर्धानं छेत्तुं परमदुर्मतिः ।
स सान्त्वयंस्तदा कंसं हसन्क्रोधवशानुगम् ।
राजन्ननुनयामास वसुदेवो महामतिः ।
अहिंस्यां प्रमदामाहुः सर्वधर्मेषु पार्थिव ।
अकस्मादबलां नारीं हन्तासीमामनागसीम् ।
यच्च तेऽत्र भयं राजञ्शक्यते बाधितुं त्वया ।
इयं च शक्या पालयितुं समयश्चैव रक्षितुम् ।
अस्यास्त्वमष्टमं गर्भं जातमात्रं महीपते ।
विध्वंसय तदा प्राप्तमेवं परिहृतं भवेत् ।
एवं स राजा कथितो वसुदेवेन भारत ।
तस्य तद्वचनं चक्रे शूरसेनाधिपस्तदा ।

Colophon.

वैशंपायनः ।
ततस्तस्यां संबभूवुः कुमाराः सूर्यवर्चसः ।
जाताञ्जातांस्तु तान्सर्वाञ्जघान मथुरेश्वरः ।
अथ तस्यां समभवद्बलदेवस्तु सप्तमः ।
याम्यया मायया तं तु यमो राजा विशां पते ।
देवक्या गर्भमतुलं रोहिण्या जठरेऽक्षिपत् ।
आकृष्य कर्षणात्सम्यक्संकर्षण इति स्मृतः ।
बलश्रेष्ठतया तस्य बलदेव इति स्मृतः ।
पुनस्तस्यां समभवदष्टमो मधुसूदनः ।

°मृगाविव (for °मृगानिव). — (L. 17) $G_{2.6}$ $M_2$ श्रीवासुदेवः; $G_4$ श्रीकृष्णः (for श्रीभगवान्). — (L. 19) $G_{2.3.6}$ त्वाद्य; $M_2$ त्वद्य (for चाद्य).

(L. 1) $G_5$ इमौ (for उभौ). — (L. 3) $G_6$ कश्चासौ मागधेशस्य. — (L. 4) $M_1$ ब्रह्मन् (for एतद्). — (L. 5) $G_6$ यादवानामन्वये वै. $G_2$ generally reads वासु° (for वसु°). — (L. 6) $G_6$ कृष्णं यो (for वार्ष्णेयो). $G_2$ उग्र° (for ह्युग्र°). — (L. 8) $G_{2.6}$ सर्वशस्त्रभृतां वरः; $G_{3.4}$ °शास्त्रविशारदः. — (L. 9) $T_1$ $G_{2.4-6}$ भार्येति विश्रुता; $G_3$ भार्येति संश्रुता; $M_1$ भार्येति नः श्रुतं. — (L. 10) $G_2$ राज्यशुल्केति दत्तास्य. — (L. 12) $T_1$ $G_{3.6}$ $M_1$ सहामात्यः; $G_2$ सहामात्यैः; $G_5$ सदामात्यः. $G_2$ शूर° (for तीव्र°). — (L. 13) $T_1$ $M_1$ °मद° (for °बल°). — (L. 14) $M_1$ भ्रातृभिः (for मन्त्रिभिः). — (L. 15) $G_3$ तद्वाक्यं (for तत्कृत्यं). $T_1$ नाश्रृणोत्स च मंदधीः. — (L. 16) $G_{5.6}$ न (for स). $G_6$ स हि (for सह). $T_1$ $G_{3.5}$ पर्यपालयन्. — $G_4$ om. lines 18–23. — (L. 18) $G_2$ $M_1$ दैवकस्य. $G_2$ च; $G_6$ ह (for या). — (L. 19) $G_2$ उद्वाह्यमानायां; $G_6$ उद्वह°. — (L. 22) $G_{5.6}$ यः (for सः). — (L. 24) $G_6$ अस्यां (for अस्या). — (L. 32) Hypermetric! $G_4$ om. the first च. $G_{2.3.6}$ अयशस्यं च ($G_6$ हि) (for समयश्चैव). — (L. 33) $G_2$ °स्त्वमष्टगर्भं च. — (L. 36) $T_1$ $G_4$ शूरसेनपति°. — Colophon. Adhy. no.: $T_1$ $G_{2-6}$ $M_1$ 24. — (L. 38) $T_1$ जातं जातं स तान्सर्वान्. — (L. 39) $M_1$ संबभूव (for समभवद्). — (L. 42) $G_5$ करणात्सम्यक्; $G_6$ सम्यक्कर्षणात् (by transp.). — (L. 43) $G_6$ बलश्रेष्ठस्य तस्यासीद् (for the prior half). — (L. 44)

तस्य गर्भस्य रक्षां तु चक्रे सोऽभ्यधिकं नृपः ।
ततः काले रक्षणार्थं वसुदेवस्य सात्वतः ।
उग्रः प्रयुक्तः कंसेन सचिवः क्रूरकर्मकृत् ।
विमूढेषु प्रभावेन बालस्योत्तीर्य तत्र वै ।
उपागम्य स घोषे तु जगाम समहाद्युतिः ।
जातमात्रं वासुदेवमथाकृष्य पिता ततः ।
उपजह्रे परिक्रीतां सुतां गोपस्य कस्यचित् ।
मुमुक्षमाणस्तं शब्दं देवदूतस्य पार्थिव ।
जघान कंसस्तां कन्यां प्रहसन्ती जगाम सा ।
आर्येति वाशती शब्दं तस्मादार्येति कीर्तिता ।
एवं तं वञ्चयित्वा च राजानं स महामतिः ।
वासुदेवं महात्मानं वर्धयामास गोकुले ।
वासुदेवोऽपि गोपेषु ववृधेऽब्जमिवाम्भसि ।
अज्ञायमानः कंसेन गूढोऽग्निरिव दारुषु ।
विप्रचक्रेऽथ तान्सर्वान्बल्लवान्मधुरेश्वरः ।
वर्धमानो महाबाहुस्तेजोबलसमन्वितः ।
ततस्ते क्लिश्यमानास्तु पुण्डरीकाक्षमच्युतम् ।
भयेन कामादपरे गणशः पर्यवारयन् ।
स तु लब्ध्वा बलं राजन्नुग्रसेनस्य संमतः ।
वसुदेवात्मजः सवभ्रातृभिः सहितं पुनः ।
निर्जित्य युधि भोजेन्द्रं हत्वा कंसं महाबलः ।
अभ्यषिञ्चत्ततो राज्य उग्रसेनं विशां पते ।
ततः श्रुत्वा जरासंधो माधवेन हतं युधि ।
शूरसेनाधिपं चक्रे कंसपुत्रं तदा नृप ।
स सैन्यं महदुत्थाप्य वासुदेवं प्रसह्य च ।
अभ्यषिञ्चत्सुतं तत्र सुताया जनमेजय ।
उग्रसेनं च वृष्णींश्च महाबलसमन्वितः ।
स तत्र विप्रकुरुते जरासंधः प्रतापवान् ।
एतद्वैरं कौरवेय जरासंधस्य माधवे ।
आशामितार्थो राजेन्द्र संरुरोध विनिर्जितान् ।
पार्थिवैस्तैर्नृपतिभिर्यक्ष्यमाणः समृद्धिमान् ।
देवश्रेष्ठं महादेवं कृत्तिवासं त्रियम्बकम् ।
एतत्सर्वं यथावृत्तं कथितं भरतर्षभ ।
यथा तु स हतो राजा भीमसेनेन तच्छृणु ।

Colophon.

K1 V1 B D ins. after 2. 21. 10: G3, after 2. 21. 11:

करग्रहणपूर्वं तु कृत्वा पादाभिवन्दनम् ।
कक्षैः कक्षां विधुन्वानावास्फोटं तत्र चक्रतुः ।
स्कन्धे दोर्भ्यां समाहत्य निहत्य च मुहुर्मुहुः ।
अङ्गमङ्गैः समाश्लिष्य पुनरास्फालनं विभो ।
चित्रहस्तादिकं कृत्वा कक्षाबन्धं च चक्रतुः ।
गलगण्डाभिघातेन सस्फुलिङ्गेन चाशनिम् ।
बाहुपाशादिकं कृत्वा पादाहतशिरावुभौ ।
उरोहस्तं ततश्चक्रे पूर्णकुम्भौ प्रयुज्य तौ ।

G4 पुरस्तस्यां; G5.6 पुनस्तस्याः. — (L. 45) M1 °भ्यधिकां. G5.6 नृप. — (L. 46) G2 रक्षणार्थी. T1 तत्वतः (for सात्वतः). — G2 M1 om. lines 48–49. — (L. 50) G2 अपकृष्य. — (L. 52) G6 दिदृक्ष° (for मुमुक्ष°). T1 G6 M1 पार्थिवः. — (L. 54) G2 आर्येत्युक्त्वा सती शब्दं. M1 विश्रुता (for कीर्तिता). — (L. 55) G6 महाद्युतिः. — (L. 56) T1 G4 अर्पया° (for वर्धया°). — (L. 57) G2 गोष्ठेषु. — (L. 58) G5.6 गाढोग्निरिव. — (L. 59) G2.4 तथा (for ऽथ तान्). G6 वल्लभान् (for बल्लवान्). G2.6 M1 मधुसूदनः (for °रेश्वरः). — (L. 60) G6 वस° (for वर्ध°). — G6 om. lines 61–63. — (L. 64) G5 वसुदेवात्मजैः. G3 सार्धं (for सर्वैर्). T1 M1 सहितः (for °तं). G2.6 सहितो (G6 °तं) भ्रातृभिः सह; G3 भ्रातृभिः सह नित्यशः. — (L. 65) G2 M1 महाबलं. — (L. 66) G2 अभिषिंचत्; G6 अभिषिच्य. — (L. 67) G2 तच्छ्रुत्वा स जरासंधो. — (L. 68) T1 M1 नृपः; G6 नृपं. — (L. 69) G6 प्रयुज्य (for प्रसह्य). — (L. 71) G3.4.6 वृष्णिं च (for वृष्णींश्च). — (L. 74) G6 °सितार्थे (for °सितार्थो). — (L. 75) G2 M1 स पार्थिवैस्तैर्नृपतिर् (for the prior half). — (L. 76) G6 °भागं (for °देवं). — After line 76, G3 ins.:

साम्राट्पदमनीम्नंश्च कौरवानप्यपीडयत् ।

— Colophon. Adhy. no.: T1 G2–6 M1 25.

(L. 1) D3–5 कृतं (for कृत्वा). B2.5 °धावनं; B6 °वादनं (for °वन्दनम्). — (L. 2) B2–6 भुजैः; D1.2 रजैः (D2 °जः) (for कक्षैः). B2.4.6 Dn2 कक्षान्; B3 भुजौ (for कक्षां). K1 स्फोटनं (for आस्फोटं). D4 बाहुस्फोटं प्रचक्रतुः (for the post. half). — (L. 3) Dn2 D4 समाहृत्य; D1 °हार-. K1 D3–5 बलिनौ; V1 B3.4.6 D1.2 चलिनं; B1 चालितं; G3 वलितं (for निहत्य). — (L. 4) K1 B1.2.5.6 D1–5.6m अंगैरंगं; B3 अंगेनांगं; G3 अंगैरथ (for अङ्गमङ्गैः). K1 (before corr.) समाश्रित्य. K1 आस्फालितं; V1 D3–5 °स्फोटनं. B2 प्रभो (for विभो). — (L. 5) Dn1 कक्षाबद्धं. B2 D1.2 तु; D4 प्र- (for च). V1 पादहस्तस्थिरावुभौ (for the post. half). — V1 om. lines 6–7. — (L. 6) K1 गलदंडविघातेन; B3 गलदंनामि°; B4 D2 गलदंडाभि°; D1 राजदंडाभि°; D3 गलगंडाभि°. K1 B2–6 D1.2 सस्फुलिंगेन चाशनिः; B1 सस्फुलिंगामिवाशनिः. — D6 om. (hapl.) from the post. half of line 7 to the prior half of line 9. — (L. 7)

करसंपीडनं कृत्वा गर्जन्तौ वारणाविव ।
नर्दन्तौ मेघसंकाशौ बाहुप्रहरणावुभौ ।
तलेनाहन्यमानौ तु अन्योन्यं कृतवीक्षणौ ।
सिंहाविव सुसंक्रुद्धावाकृष्याकृष्य युध्यताम् ।
अङ्गेनाङ्गं समापीड्य बाहुभ्यामुभयोरपि ।
आवृत्य बाहुभिश्चापि उदरं च प्रचक्रतुः ।
उभौ कट्यां सुपार्श्वे तु तक्षवन्तौ च शिक्षितौ ।
अधोहस्तं स्वकण्ठे तूदरस्योरसि चाक्षिपत् ।
सर्वातिक्रान्तमर्यादं पृष्ठभङ्गं च चक्रतुः ।
संपूर्णमूर्छां बाहुभ्यां पूर्णकुम्भं प्रचक्रतुः ।
तृणपीडं यथाकामं पूर्णयोगं समुष्टिकम् ।
एवमादीनि युद्धानि प्रकुर्वन्तौ परस्परम् ।
तयोर्युद्धं ततो द्रष्टुं समेताः पुरवासिनः ।
ब्राह्मणा वणिजश्चैव क्षत्रियाश्च सहस्रशः ।
शूद्राश्च नरशार्दूल स्त्रियो वृद्धाश्च सर्वशः ।
निरन्तरमभूत्तत्र जनौघैरभिसंवृतम् ।

8

After 2. 22. 9, G3 ins.:

वीक्ष्य भीमं ततः कृष्णो नलं जग्राह पाणिना ।
द्विधा व्यतिलिखत्तं तु जरासंधवधं प्रति ।
ततस्त्वाज्ञाय तस्यै * * * * * * * * * * ।
* * * * * * * त्रं प्राक्षिपद्विननाद च ।
पुनः संधाय तु तदा जरासंधः प्रतापवान् ।
भीमेन सह संगम्य बाहुयुद्धं चकार ह ।
तयोः समभवद्युद्धं तुमुलं रोमहर्षणम् ।
सर्वलोकक्षयकरं सर्वं * * * * * * ।
* * * * * * * * * * * * * द्य माधवः ।
व्यत्यस्य प्राक्षिपत्तत्तु जरासंधवधेप्सया ।
भीमसेनस्तदाज्ञात्वा निर्बिभेद च मागधम् ।
द्विधा व्यत्यस्य पादेन प्राक्षिपच्च ननाद ह ।
शुष्कमांसास्थिमेदोसृग्भिन्नमस्तकपिण्डकः ।
शवभूतस्तदा राजन्पिण्डीकृत इवाबभौ ।

After 2. 22. 40, S ins.:

सहदेवः ।
यत्कृतं पुरुषव्याघ्र मम पित्रा जनार्दन ।
तत्ते हृदि महाबाहो न कार्यं पुरुषोत्तम ।
त्वां प्रपन्नोऽस्मि गोविन्द प्रसादं कुरु मे प्रभो ।
पितुरिच्छामि संस्कारं कर्तुं देवकिनन्दन ।
त्वत्तोऽभ्यनुज्ञां संप्राप्य भीमसेनात्तथार्जुनात् ।
निर्भयो विचरिष्यामि यथाकामं यथासुखम् ।
वैशंपायनः ।
एवं विज्ञाप्यमानस्य सहदेवस्य मारिष ।
प्रहृष्टो देवकीपुत्रः पाण्डवौ च महारथौ ।

K1 पादाहतिवरावुभौ. — (L. 8) K1 जत्तुहस्तं च चक्राते (for the prior half). B1.3.6 D1.2 पूर्णकुंभं; D4 °कुंभैः. K1 पूर्णजंमप्रजंमनौ (for the post. half). — (L. 9) K1 करपीडनं ततः कृत्वा (hypermetric!). — (L. 10) B3.4 नर्दंतौ; G3 नर्दनां. V1 भीम° (for मेघ°). — (L. 11) K1 Dn1 G3 तौ (for तु). K1 स्तब्धलोचनौ; V1 B (except B3) D1-6 स्तब्धवीक्षणौ; G3 प्रहितेक्षणौ (for कृतवीक्षणौ). — (L. 14) K1 V1 B1.3.4 D1.2 आवर्त्य; B5.6 आरभ्य; G3 आवर्ज्य (for आवृत्य). D1.2 बहुभि° (for बाहुभि°). K1 उत्तरं तु; V1 उदराभ्यां; B2.5 जठरं तौ; B3 उदराढ्यं; B6 नदा वाद्यं; D4 उदरे च; G3 उदराद्यं (for उदरं च). B2.5 विजघ्नतुः; D3 प्रजघ्नतुः (for प्रचक्रतुः). — K1 om. (hapl.) lines 15–18; V1 om. lines 15–16. — (L. 15) B (except B1) D2 G3 कट्यंश(G3 °स)पार्श्वे; Dn1 कट्यां सपार्श्वे; D3 कट्यां सुपार्श्वे. D1 कबंधश्च सपार्श्वे तु. B2.3.6 D1.2 G3 कृतवंतौ; D6 तं भवंतौ (for तक्षवन्तौ). B2-4.6 D1-3 G3 सुशिक्षितौ. — (L. 16) Dn2 च कंठे; D1.2 सकंठे; D4 सुकंठं (for स्वकण्ठे). — B3.6 G3 om. the post. half of line 16 and the prior half of line 17. Dn2 परस्योरसि; D1-3 उरस्तु(D3 °स्यो)रसि (for [उ]दरस्योरसि). — B4 om. line 17. — (L. 18) B1 D1 °शुचि-; B2-6 D2 °सूची- (for °मूर्छां). V1 पूर्णचंद्रं; B Dn1 D1.2.6 पूर्णपुंजं. D5 च (for प्र-). — (L. 19) K1 हनुपिडं; B3.4 तृणपीडां; B5 D5 °पीठं; D3 तृणापीडं; G3 कृशापीडं. K1 तथाकर्म; B1 तथा कूर्मं; B2-5 D1.2 तथा कामं; G3 तथा कर्णं (for यथाकामं). — After line 20, B2.5 ins.:

वीरौ परमसंहृष्टौ परस्परवधैषिणौ ।
महावीरौ महाकक्षौ नियुद्धकुशलावुभौ ।
अन्योन्यमभिसंरब्धौ ततप्रतलघातिनौ ।
क्रोधरक्तेक्षणौ वीरौ युयुत्सू तलघातिनौ ।
ततश्चटच्चटाशब्दः सुघोरोऽभूद्भयंकरः ।
अभवत्तत्र राजेन्द्र वीरयोर्बाहुशालिनोः ।

— After the above, B2.5 read 2. 21. 11–12. — D1.2 read lines 21–24 after 2. 21. 12; G3 reads the same lines after 2. 21. 15. — (L. 22) G3 तथैव च (for सहस्रशः). — (L. 24) B5 G3 °रपि संवृतं.

(L. 1) G6 पुंडरीकाक्ष. — (L. 2) T1 G5 बलसत्तम (for पुरुषोत्तम). — (L. 4) G2.6 M1 पितुश्चेच्छामि. — (L. 6) M1 °कालं (for °कामं). — (L. 7) T1 G2.4-6 M1 om. the ref. G2 भाषितं; G3 भारत (for मारिष). G6 मानुषः पुरुषोत्तमः

क्रियतां संस्क्रिया राजन्पितुस्त इति चाब्रुवन् ।
तच्छ्रुत्वा वासुदेवस्य पार्थयोश्च स मागधः ।
प्रविश्य नगरं तूर्णं सह मन्त्रिभिरच्युत ।
चितां चन्दनकाष्ठैश्च कालेयसरलैस्तथा ।
कालागरुसुगन्धैश्च तैलैश्च विविधैरपि ।
घृतधाराक्षतैश्चैव सुमनोभिश्च मागधम् ।
समन्तादवकीर्यन्त दह्यन्तं मगधाधिपम् ।
उदकं तस्य चक्रेऽथ सहदेवः सहानुजः ।
कृत्वा पितुः स्वर्गगतिं निर्ययौ यत्र केशवः ।
पाण्डवौ च महाभागौ भीमसेनार्जुनावुभौ ।
स प्रह्वः प्राञ्जलिर्भूत्वा विज्ञापयत माधवम् ।
इमे रत्नानि भूरीणि गोजाविमहिषादयः ।
हस्तिनोऽश्वाश्च गोविन्द वासांसि विविधानि च ।
दीयतां धर्मराजाय यथा वा मन्यते भवान् ।

10

After 2. 22. 48, S (except $M_2$) ins.:

हृष्टश्च धर्मराड्वाक्यं जनार्दनमभाषत ।
त्वां प्राप्य पुरुषव्याघ्र भीमसेनेन पातितः ।
मागधोऽसौ बलोन्मत्तो जरासंधः प्रतापवान् ।
राजसूयं क्रतुश्रेष्ठं प्राप्स्यामि विगतज्वरः ।
त्वद्बुद्धिबलमाश्रित्य यागार्होऽस्मि जनार्दन ।
पीतं पृथिव्यां क्रुद्धेन यशस्ते पुरुषोत्तम ।
जरासंधवधेनैव प्राप्तास्ते विपुलाः श्रियः ।
एवं संभाष्य कौन्तेयः प्रादाद्रथवरं प्रभोः ।
प्रतिगृह्य तु गोविन्दो जरासंधस्य तं रथम् ।
प्रहृष्टस्तस्य मुमुदे फल्गुनेन जनार्दनः ।
प्रीतिमानभवद्राजन्धर्मराजपुरस्कृतः ।

11

After 2. 23. 3, S ins.:

एतच्छ्रुत्वा कुरुश्रेष्ठो धर्मराजः सहानुजः ।
प्रहृष्टो मन्त्रिभिश्चैव व्यासधौम्यादिभिः सह ।
ततो व्यासो महाबुद्धिरुवाचेदं वचोऽर्जुनम् ।
साधु साध्विति कौन्तेय दिष्ट्या ते बुद्धिरीदृशी ।
पृथिवीमखिलां जेतुमेको व्यवसितो भवान् ।
धन्यः पाण्डुर्महीपालो यस्य पुत्रस्त्वमीदृशः ।
सर्वं प्राप्स्यति राजेन्द्रो धर्मपुत्रो युधिष्ठिरः ।
त्वद्वीर्येण स धर्मात्मा सार्वभौमत्वमेष्यति ।
त्वद्बाहुबलमाश्रित्य राजसूयमवाप्स्यति ।
सुनयाद्वासुदेवस्य भीमार्जुनबलेन च ।
यमयोश्चैव वीर्येण सर्वं प्राप्स्यति धर्मराट् ।
तस्माद्दिशं देवगुप्तामुदीचीं गच्छ फल्गुन ।
शक्तो भवान्सुराञ्जित्वा रत्नान्याहर्तुमोजसा ।
प्राचीं भीमो बलश्लाघी प्रयातु भरतर्षभ ।
याम्यां तत्र दिशं यातु सहदेवो महारथः ।
प्रतीचीं नकुलो गत्वा वरुणेनाभिपालिताम् ।
एषा मे नैष्ठिकी बुद्धिः क्रियतां भरतर्षभाः ।
श्रुत्वा व्यासवचो हृष्टास्तमूचुः पाण्डुनन्दनाः ।
एवमस्तु मुनिश्रेष्ठ यथाज्ञापयसि प्रभो ।
तेऽप्यनुज्ञाप्य राजानं सैन्येन महता वृताः ।

12

$T_1$ $G_{2.4.5}$ M ins. after 2. 25. 6: $G_{1.6}$ ins. after 2. 25. 5[1]: $G_3$ ins. after 2. 24. 21:

हेमकूटमथासाद्य न्यविशत्फल्गुनस्तदा ।
तं हेमकूटं राजेन्द्र समतिक्रम्य पाण्डवः ।

(for the post. half). — (L. 9) $T_1$ संज्ञया; $G_2$ संस्कृतं; $G_6$ सत्क्रिया (for संस्क्रिया). — (L. 10) $G_2$ महारथः (for स मागधः). — (L. 11) $T_1$ अच्युतं; $G_{2.3}$ अच्युत; $M_1$ अच्युतः (for अच्युत). — (L. 12) $M_1$ चकार (for चन्दन-). — (L. 14) $G_3$ $M_1$ मागधाः. — (L. 15) om. in $G_6$. $G_2$ ददहुर् (for दह्यन्तं). — (L. 18) $T_1$ $G_{3-5}$ महाबाहू (for °भागौ). — (L. 19) $G_6$ प्रभुः (for प्रह्वः). $T_1$ $G_{4-6}$ $M_1$ व्यज्ञापयत. $G_6$ मागधः (for माधवम्). — (L. 20) $G_6$ मनोज्ञानि च भूरीणि (for the prior half). — (L. 22) $G_2$ नीयंतां; $M_1$ दीयंतां (for दीयतां).

10

(L. 5) $G_4$ आसाद्य (for आश्रित्य). $G_{3.6}$ $M_1$ भागार्हो (for यागार्हो). — (L. 6) $T_1$ $G_4$ पृथिव्याः. $G_{1.5}$ युद्धेन; $M_1$ कुंडेन (for क्रुद्धेन). — (L. 8) $G_2$ विभोः; $G_{4-6}$ प्रभो (for प्रभोः). — (L. 9) $G_2$ प्रत्यगृह्णत (for प्रतिगृह्य तु). — $G_2$ om. line 11.

11

(L. 5) $T_1$ $G_5$ [ऽ]ध्यवसितो (for व्यवसितो). $G_3$ महान् (for भवान्). — (L. 8) $G_3$ त्वद्वीर्येण (for त्वद्वीर्येण). $G_2$ तु; $G_4$ च (for स). $G_{4.5}$ स(($G_5$ सा)र्वभूमित्वमेष्यति. — (L. 12) $G_1$ तस्माद्दिवं. — (L. 13) $G_3$ सुरान्सुरान् (for भवान्सुरान्). — (L. 14) $M_2$ प्राच्या (for प्राचीं). $G_{1.6}$ भरतर्षभः. — (L. 15) $G_6$ यत्र; $M_1$ त्वत्र (for तत्र). $G_3$ $M_2$ transp. तत्र and दिशं. — (L. 16) $G_{1.6}$ प्रतीच्यां. — (L. 17) $T_1$ $G_{3-5}$ M भरतर्षभाः. — (L. 18) $G_1$ प्रत्यूचुः (for तमूचुः). — (L. 19) $G_{1.4}$ यदा° (for यथा°). — (L. 20) $G_6$ ते ह्यनुज्ञाप्य; $M_1$ तेऽभ्यनु° (for तेऽप्यनु°). $G_4$ राजानः.

12

$G_3$ om. lines 1–9. — (L. 1) $G_{1.6}$ om. the prior half. $M_1$ न्यवसत् (for न्यविशत्). $G_{4.5}$ तथा (for तदा). — (L. 2) $T_1$ $G_{1.5}$ आसाद्य. — $G_4$ om. from the post. half of line 3 to the prior half of line 7.

हरिवर्षं विवेशाथ सैन्येन महता वृतः ।
तत्र पार्थो ददर्शाथ बहूंश्चैव मनोरमान् ।
नगरांश्च वनांश्चैव नदीश्च विमलोदकाः ।
पुरुषान्देवकल्पांश्च नारीश्च प्रियदर्शनाः ।
तान्सर्वांस्तत्र दृष्ट्वाथ मुदा युक्तो धनंजयः ।
वशे चक्रे च रत्नानि लेभे च सुबहूनि च ।
ततो निषधमासाद्य गिरिस्थानजयत्प्रभुः ।
अथ राजन्नतिक्रम्य निषधं शैलमायतम् ।
विवेश मध्यमं वर्षं पार्थो दिव्यमिलावृतम् ।
तत्र देवोपमान्दिव्यान्पुरुषान्देवदर्शनान् ।
अदृष्टपूर्वान्सुभगान्स ददर्श धनंजयः ।
सदनानि च शुभ्राणि नारीश्चाप्सरसंनिभाः ।
दृष्ट्वा तानजयद्रम्यान्स तैश्च ददृशे तदा ।
जित्वा च तान्महाभागान्करे च विनिवेश्य सः ।
रत्नान्यादाय दिव्यानि भूषणैर्वसनैः सह ।
उदीचीमथ राजेन्द्र ययौ पार्थो मुदान्वितः ।
स ददर्श ततो मेरुं शिखराणां प्रभुं महत् ।
तं काञ्चनमयं दिव्यं चतुर्वर्णं दुरासदम् ।
आयतं शतसाहस्रं योजनानां तु सुस्थितम् ।
ज्वलन्तमचलं मेरुं तेजोराशिमनुत्तमम् ।
आक्षिपन्तं प्रभां भानोः स्वशृङ्गैः काञ्चनोज्ज्वलैः ।
काञ्चनाभरणं दिव्यं देवगन्धर्वसेवितम् ।
नित्यपुष्पफलोपेतं सिद्धचारणसेवितम् ।
अप्रमेयमनाधृष्यमधर्मबहुलैर्जनैः ।
व्यालैराचरितं घोरैर्दिव्यौषधिविदीपितम् ।
स्वर्गमावृत्य तिष्ठन्तमुच्छ्रयेण महागिरिम् ।
अगम्यं मनसाप्यन्यैर्नदीवृक्षसमन्वितम् ।
नानाविहगसंघैश्च नादितं सुमनोहरैः ।
तं दृष्ट्वा फल्गुनो मेरुं प्रीतिमानभवत्तदा ।
मेरोरिलावृतं वर्षं सर्वतः परिमण्डलम् ।
मेरोस्तु दक्षिणे पार्श्वे जम्बूर्नाम वनस्पतिः ।
नित्यपुष्पफलोपेतः सिद्धचारणसेवितः ।
आस्वर्गमुच्छ्रिता राजंस्तस्य शाखा वनस्पतेः ।
यस्य नाम्ना त्विदं द्वीपं जम्बूद्वीपमिति श्रुतम् ।
तां च जम्बूं ददर्शाथ सव्यसाची परंतपः ।
तौ दृष्ट्वाप्रतिमौ लोके जम्बूं मेरुं च संस्थितौ ।
प्रीतिमानभवद्राजन्सर्वतः स विलोकयन् ।
तत्र लेभे ततो जिष्णुः सिद्धैर्दिव्यैश्च चारणैः ।
रत्नानि बहुसाहस्रं वस्त्राण्याभरणानि च ।
अन्यानि च महार्हाणि तत्र लब्ध्वार्जुनस्तदा ।
आमन्त्रयित्वा तान्सर्वान्यज्ञमुद्दिश्य वै गुरोः ।
अथादाय बहून्रत्नान्गमनायोपचक्रमे ।
मेरुं प्रदक्षिणं कृत्वा पर्वतप्रवरं प्रभुः ।
ययौ जम्बूनदीतीरे नदीं श्रेष्ठां विलोकयन् ।
स तां मनोरमां दिव्यां जम्बूस्वादुरसावहाम् ।
हैमपक्षिगणैर्जुष्टां सौवर्णजलजाकुलाम् ।
हैमपङ्कां हैमजलां शुभां सौवर्णवालुकाम् ।
क्वचित्सौवर्णपद्मैश्च संकुलां हैमपुष्पकैः ।
क्वचित्सुपुष्पितैः कीर्णां सुवर्णकुमुदोत्पलैः ।
क्वचित्तीररुहैः कीर्णां हैमवृक्षैः सुपुष्पितैः ।
तीर्थैश्च रुक्मसोपानैः सर्वतः संकुलां शुभाम् ।
विमलैर्मणिजालैश्च नृत्तगीतरवैर्युताम् ।

— (L. 4) $G_6$ ततः (for तत्र). $T_1$ $G_5$ बहूनीह; $G_6$ बहूनि च; $M_1$ बहूनथ (for बहूंश्चैव). — (L. 5) $G_2$ नागरांश्च. $T_1$ वरांश्चैव; $G_2$ नरांश्चैव (for वनां°). $M_1$ नगराणि द्रुमांश्चैव. $G_2$ विपुलोदकाः. — (L. 10) $G_3$ ततः समुपसंगम्य (for the prior half). $G_6$ शैवम् (for शैलम्). — (L. 11) $T_1$ $G_{2.4}$ $M_1$ °मिळावृतं. — (L. 14) $G_{4.5}$ नारीश्चाप्सरसः शुभाः. — (L. 16) $G_4$ दृष्ट्वा (for जित्वा). — (L. 17) $T_1$ $G_{4-6}$ भूषणान्यासनैः सह. — (L. 18) $G_3$ मुदा युतः. — (L. 19) $G_4$ महा- (for ततो). $G_5$ प्रभुर्. $T_1$ $G_{3.4}$ महान्; $M_1$ भुवि. — (L. 20) $G_2$ चातुर्वर्णं; $M_1$ चातुर्वर्ण्यैर्. — (L. 21) $G_6$ विगतं (for आयतं). $G_4$ योजनायुतसंस्थितं. — Lines 22–30 =(var.) 1. 15. 5–8. — (L. 23) $G_6$ भास्वत्- (for भानोः). $G_4$ कांचनोत्तमैः. — (L. 24) $G_5$ सुदर्शनसमं दिव्यं (for the prior half). — $G_6$ $M_1$ om. line 25. — (L. 29) $T_1$ $G_2$ मनसाप्येनं. — (L. 32) $T_1$ $G_{2-4}$ $M_1$ °रिळावृतं. $T_1$ $G_2$ परिमंडितं (for °मण्डलम्). — (L. 33) $T_1$ $G_5$ जंबुर्नाम्ना सुदर्शनः. — (L. 35) $T_1$ $G_{3-5}$ राजा ($G_5$ °जन्) भुवि वनस्पतेः ($G_3$ °तिः); $G_2$ स तु राजा वन°. — (L. 36) $T_1$ $G_{3-6}$ $M_1$ इदं (for त्विदं). $G_2$ श्रुतः; $G_6$ स्मृतं (for श्रुतम्). — (L. 38) $G_4$ च संस्थितं; $G_5$ सुसंस्थितौ; $G_6$ $M_1$ च सुस्थितौ. — (L. 40) $T_1$ $G_{3.4}$ $M_1$ transp. सिद्धैः and दिव्यैः. — (L. 41) $T_1$ $G_{3-5}$ रम्याणि; $G_6$ $M_1$ दत्तानि (for रत्नानि). $T_1$ $G_{3-5}$ $M_1$ रत्नानि; $G_6$ दिव्यानि (for वस्त्राणि). — (L. 42) $T_1$ $G_{3-6}$ $M_1$ वासांसि (for अन्यानि). $G_{2.3}$ तथा (for तदा). — $G_2$ om. lines 43–52. — (L. 44) $G_6$ नागान् (for रत्नान्). — (L. 46) $G_4$ जांबू° (for जम्बू°). — (L. 47) $G_4$ ततो (for स तां). $G_6$ रम्यां; $M_1$ हैमां (for दिव्यां). $G_6$ सुस्वादुसरसावहां; $M_1$ दिव्यां जंबूरसावहां. — (L. 49) $G_6$ हेमपंकां हेमजलां. $G_3$ शुभां संपूर्णवालुकां; $G_6$ सौवर्णोज्वल°. — (L. 50) $T_1$ °पर्णैश्च; $G_3$ °पुष्पैश्च; $G_5$ °पत्रैश्च (for °पद्मैश्च). $G_{5.6}$ हे($G_6$ है)मपुष्पिकैः; M है($M_1$ हे)मपंकजैः. — (L. 52) $T_1$ $G_5$ $M_1$ हेमवृक्षैः; $G_6$ हैमपुष्पैः. — $G_4$ om. lines 54–56. — (L. 54) $G_2$ °गीतवरैर्. $G_{5.6}$ युतैः (for युताम्). — $G_2$ om. from line

दीप्तैर्हेमवितानश्च समन्ताच्छोभितां शुभाम् ।
तथाविधां नदीं दृष्ट्वा पार्थस्तां प्रशशंस ह ।
अदृष्टपूर्वां राजेन्द्र दृष्ट्वा हर्षमवाप च ।
दर्शनीयान्नदीतीरे पुरुषान्सुमनोहरान् ।
तान्नदीसलिलाहारान्सदारानमरोपमान् ।
नित्यं सुखमुदा युक्तान्सर्वालंकारशोभितान् ।
तेभ्यो बहूनि रत्नानि तदा लेभे धनंजयः ।
दिव्यजाम्बूनदं हैमं भूषणानि च पेशलम् ।
लब्ध्वा तान्दुर्लभान्पार्थः प्रतीचीं प्रययौ दिशम् ।
नागानां रक्षितं देशमजयच्चार्जुनस्ततः ।
ततो गत्वा महाराज वारुणीं पाकशासनिः ।
गन्धमादनमासाद्य तत्रस्थानजयत्प्रभुः ।
तं गन्धमादनं राजन्नतिक्रम्य ततोऽर्जुनः ।
केतुमालं विवेशाथ वर्षं रत्नसमन्वितम् ।
सेवितं देवकल्पैश्च नारीभिः प्रियदर्शनैः ।
तं जित्वा चार्जुनो राजन्करे च विनिवेश्य च ।
आहृत्य तत्र रत्नानि दुर्लभानि तथार्जुनः ।
पुनश्च परिवृत्याथ मध्यं देशमिलावृतम् ।
गत्वा प्राचीं दिशं राजन्सव्यसाची परंतपः ।
मेरुमन्दरयोर्मध्ये शैलोदामभितो नदीम् ।
ये ते कीचकवेणूनां छायां रम्यामुपासते ।
खषाञ्झषांश्च नद्योतान्प्रघसान्दीर्घवेणिकान् ।
पशुपांश्च कुणिन्दांश्च टङ्कणान्परटङ्कणान् ।
एतान्समस्ताञ्जित्वा च करे च विनिवेश्य च ।
रत्नान्यादाय सर्वेभ्यो माल्यवन्तं ततो ययौ ।
तं माल्यवन्तं शैलेन्द्रं समतिक्रम्य पाण्डवः ।
भद्राश्वं प्रविवेशाथ वर्षं स्वर्गोपमं शुभम् ।
तत्रामरोपमान्रम्यान्पुरुषान्सुखसंयुतान् ।
जित्वा तान्स्ववशे कृत्वा करे च विनिवेश्य च ।
आहृत्य सर्वरत्नानि असंख्यानि ततस्ततः ।
नीलं नाम गिरिं गत्वा तत्रस्थानजयत्प्रभुः ।
ततो जिष्णुरतिक्रम्य पर्वतं नीलमायतम् ।
विवेश रम्यकं वर्षं संकीर्णं मिथुनैः शुभैः ।
तं देशमथ जित्वा स करे च विनिवेश्य च ।
अजयच्चापि बीभत्सुर्देशं गुह्यकरक्षितम् ।
तत्र लेभे च राजेन्द्र सौवर्णान्मृगपक्षिणः ।
अगृह्णद्यज्ञभूत्यर्थं रमणीयान्मनोरमान् ।
अन्यानि लब्ध्वा रत्नानि पाण्डवोऽथ महाबलः ।
गन्धर्वरक्षितं देशमजयत्सगणं तदा ।
तत्र रत्नानि दिव्यानि लब्ध्वा राजन्नथार्जुनः ।
श्वेतपर्वतमासाद्य जित्वा पर्वतवासिनः ।
स श्वेतं पर्वतं राजन्समतिक्रम्य पाण्डवः ।
वर्षं हिरण्यकं नाम विवेशाथ महीपते ।
स तु देशेषु रम्येषु गन्तुं तत्रोपचक्रमे ।
मध्ये प्रासादवृन्देषु नक्षत्राणां शशी यथा ।
महापथेषु राजेन्द्र सर्वतो यान्तमर्जुनम् ।
प्रासादवरशृङ्गस्थाः परया वीर्यशोभया ।
ददृशुस्ताः स्त्रियः सर्वाः पार्थमात्मयशस्करम् ।
तं कलापधरं शूरं सरथं सानुगं प्रभुम् ।
सवर्मं सकिरीटं वै संनद्धं सपरिच्छदम् ।
सुकुमारं महासत्त्वं तेजोराशिमनुत्तमम् ।
शक्रोपममभित्रघ्नं परवारणवारणम् ।
पश्यन्तः स्त्रीगणास्तत्र शक्तिपाणिं स्म मेनिरे ।
अयं स पुरुषव्याघ्रो रणेऽद्भुतपराक्रमः ।
अस्य बाहुबलं प्राप्य न भवन्त्यसुहृद्गणाः ।
इति वाचो ब्रुवन्त्यस्ताः स्त्रियः प्रेम्णा धनंजयम् ।
तुष्टुवुः पुष्पवृष्टिं च ससृजुस्तस्य मूर्धनि ।
दृष्ट्वा ते तु मुदा युक्ताः कौतूहलसमन्विताः ।
रत्नैर्विभूषणैश्चैव अभ्यवर्षन्त पाण्डवम् ।
अथ जित्वा समस्तांस्तान्करे च विनिवेश्य च ।
मणिहेमप्रवालानि वस्त्राण्याभरणानि च ।
एतानि लब्ध्वा पार्थोऽपि शृङ्गवन्तं गिरिं ययौ ।

Colophon.

वैशंपायनः ।

शृङ्गवन्तं च कौन्तेयः समतिक्रम्य फल्गुनः ।

55 to the prior half of line 95. — (L. 55) $T_1$ शिवां (for शुभाम्). — (L. 57) $G_3$ अदृष्टपूर्वान्. — (L. 58) $G_4$ सुमनोरमान्. — (L. 62) $G_6$ $M_1$ दिव्यं (for दिव्य-). $G_5$ °जंबूनदं. $T_1$ $G_{3.5}$ हेमं; $G_4$ $M_1$ हेम-. — (L. 64) $G_4$ °श्चार्जुनस्तदा; $G_6$ °च्च पुनस्तदा. — (L. 66) $G_{5.6}$ ततस्तान् (for तत्रस्थान्). — (L. 69) राजकालै° (for देवकल्पै°). $M_1$ नारीणां. — (L. 70) $G_{4.5}$ तान् (for तं). $T_1$ $G_{3-5}$ $M_1$ [अ]थ (for च). $T_1$ $G_{4.5}$ करेथ; $G_3$ करेण (for करे च). — (L. 71) $T_1$ आभृत्य. — (L. 72) $T_1$ $M_1$ इलावृतं. — Lines 74–77 =(var.) 2. 48. 2–3. — (L. 75) $G_6$ पतानि चैव वेणूनां. — (L. 76) $G_4$ खशेषांश्च सनद्योतान्; $G_6$ कषांश्च कषनद्योतान्. $T_1$ $G_{3-5}$ $M_1$ प्रवासान् (for प्रघसान्). — (L. 77) $T_1$ $G_6$ $M_1$ तंकणान्परतंकणान्. — (L. 82) $G_3$ पुण्यान्; $G_6$ दिव्यान् (for रम्यान्). — (L. 88) $G_6$ तं देशमधिकं जित्वा करे च संनिवेश्य च. — (L. 93) $G_{5.6}$ $M_1$ सगणस्. — (L. 94) $G_4$ transp. रत्नानि and दिव्यानि. $G_6$ तथार्जुनः. — (L. 96) $G_{2.4}$ M श्वेत- (for श्वेतं). — (L. 97) $T_1$ $G_{4.5}$ हिरण्वतं; $G_{5.6}$ हि रैवतं; $M_1$ हिरण्मयं (for हिरण्यकं). $G_{3-5}$ महीतले (for °पते). — $G_2$ om. lines 101–105. — (L. 102) $T_1$ $M_1$ तं (for ताः). $T_1$ $G_{3.6}$ $M_1$ तत्र (for सर्वाः). — (L. 104) $G_{3-5}$ $M_1$ सवर्मं; $G_6$ सचर्मं (for सवर्मं). — (L. 109) $G_2$

13

V1 B (B1 marg.) Dn D1-3.5.6 T1 G1.3-5 M ins. after 2. 28. 10: D4 (which om. hapl. stanza 10 and line 1 of the foll. passage), ins. after 9: G2.5 (which both om. hapl. from 9ᵇ up to the prior half of line 1 of the foll. passage) ins. after 9ᵃ:

ततो रत्नान्युपादाय पुरं भोजकटं ययौ ।
तत्र युद्धमभूद्राजन्दिवसद्वयमच्युत ।
स विजित्य दुराधर्षं भीष्मकं माद्रिनन्दनः ।
कोशलाधिपतिं चैव तथा वेणातटाधिपम् ।
कान्तारकांश्च समरे तथा प्राकोटकान्नृपान् ।
नाटकेयांश्च समरे तथा हेरम्बकान्युधि ।
मारुधं च विनिर्जित्य रम्यग्राममथो बलात् ।
नाचीनानर्बुकांश्चैव राजानश्च सहस्रशः ।
तांस्तानाटविकान्सर्वानजयत्पाण्डुनन्दनः ।
वाताधिपं च नृपतिं वशे चक्रे महाबलः ।
पुलिन्दांश्च रणे जित्वा ययौ दक्षिणतः पुनः ।
युयुधे पाण्ड्यराजेन दिवसं नकुलानुजः ।
तं जित्वा स महाबाहुः प्रययौ दक्षिणापथम् ।
गुहामासादयामास किष्किन्धां लोकविश्रुताम् ।
तत्र वानरराजाभ्यां मैन्देन द्विविदेन च ।
युयुधे दिवसान्सप्त न च तौ विकृतिं गतौ ।
ततस्तुष्टौ महात्मानौ सहदेवाय वानरौ ।
ऊचतुश्चैव संहृष्टौ प्रीतिपूर्वमिदं वचः ।
गच्छ पाण्डवशार्दूल रत्नान्यादाय सर्वशः ।
अविघ्नमस्तु कार्याय धर्मराजाय धीमते ।

यस्य (for अस्य). — (L. 111) T1 G2 M1 °वृष्टीश्च (for °वृष्टिं च). — (L. 113) G2.6 M1 °वर्षंश्च (for °वर्षन्त). — (L. 115) G2 रत्नानि (for वस्त्राणि). — (L. 116) G6 (by transp.) ययौ गिरिं. — Colophon. Adhy. no.: All S MSS. 30. — (L. 117) G6 कौरव्यः (for कौन्तेयः).

13

(L. 1) Prior half of line 1=2. 28. 11ᵃ. G1 पुरं भोजकमाययौ. — (L. 2) T1 G1.3-5 तस्य (for तत्र). S (except G3 M2) तात (for राजन्). D1.5 G4 अच्युतं; D2 उच्यते; D3 अद्भुतं; D6 G2 अप्युन. G1 तयोश्च दिवसद्वयं. — (L. 3) S विनिर्जित्य (G1 तं विजित्य). — (L. 4) V1 Dn2 G2.6 M कोसला°; B1 कोषला°; T1 G3-5 कौसला°. G1 नल्कोलाधिपतिं चैव. T1 ततो (for तथा). V1 वेण्डातटा°; B3 वेण्वाकटा°; D1 चैलतटा°; D2 वेलातटा°; T1 G2.4.5 वण्णाकटा°; G3 पेण्णाकटा°; G6 M वेण्णात(M2 °क)टा°. D6 तथा वेणाधिपं तथा; G1 तथा कर्णाटकाधिपः. — (L. 5) D1 कुनारकांश्च. V1 कांताररत्नान्यादाय; S क्रांत(G1 कांता-; G2.4.6 M1 कांत-; M2 क्रथ)कांश्च रणे (G6 तथा) जित्वा. G2 तदा; G6 रणे (for तथा). B1 प्राकोटलान्; B2 T1 G2.5 M1 प्राक्कोटकान्; B4.6 प्राक्कोशलान्; D2 प्राकटकान्; D3-5 धा(D4 घो)को°; G4 प्रारो°. — (L. 6) S बाल(G1 बाध-; G2.6 M ताट)केयान्वशे कृत्वा. B3 हैडिंबकान्; B5 हेड्डंब°; T1 G1-5 हैरंब°; M1 हैरंड°; M2 हैरण्य°. B3 G5 अपि (for युधि). — (L. 7) V1 B2-6 मारुकं च; B1 मारुपं च; B6m माधवं च; D1.2.6 मारुतं च; T1 G M2 स्व(G1.2.6 स-; G4 न-; M2 सु)रूपं च; M1 मरून्पंच. B3 तनो (for अथो). B2.6 (m as above) D1.2 धर्म-(B6 चम्य)ग्रामं तनो बलात् (D2 वनात्); S धर्मग्रामान्सकौस(T1 °कौश-; M °कोस)लान् (G1 तातीयान्छंबरांश्च सः). — (L. 8) Om. in G1. B3 प्राचीनान्; B4 नाचीरान्. D6 अर्भुकान्. V1 पामरानंधकांश्चैव; B2.6 D1.2 तथा नरवकां(B6 °लवकां-; D2 °रवरां)श्चैव; B5 नाचीरानर्तकां°; T1 G3.5 तैत्तिरानर्ध(G3 °ध्व)पां°; G2.4.6 ता(G4 तै)त्तिरानन्वशाश्चैव; M तैत्तिरानंधवां(M2 °पां)श्चैव. B3 राज्ञश्चाथ; T1 G2.5 शंवरांश्च; G3 शांवरांश्च; G4.6 M शवरां(G4 °रा)श्च (for राजानश्च). B1 D (except D1.2) महाबलः (for सहस्रशः). — (L. 9) D2 तांस्तथा नाटकान्; T1 G4 तांस्तांश्चाटविकान्; G1 तांश्चाटविकान् (submetrical); G2 तांश्चाटविकटान्; G5.6 M तांश्चै(G5 तांश्च; M1 तत्र)वाटविकान्. — (L. 10) V1 ताराधिपं; B2 वाटाधिपं; G1 करंडमेयं (hypermetric!); G2 करंधकं. T1 G4-6 M कारंध(G5.6 °ड)मेयं च नृपं; G3 *****च नृपं. S तथा चक्र(G1-3 °क्रे)पुरेजयत्. — G1 om. lines 11-13. — After line 11, T1 G3-5 M2 ins.:

ततस्तु पत्तनं प्राप्य सहदेवः प्रतापवान् ।

— (L. 12) B4.6 D2 पांडिना राजन्; T1 G3-5 M2 पत्तनेंद्रेण; G2.6 च द्रुमें(G3 °मं)द्रेण; M1 वट्टदेवेन (for पाण्ड्यराजेन). — (L. 13) S (G1 om.; G3 damaged) तं च (G6 तांश्च) जित्वा (for तं जित्वा स). M1 महाबाहुं. V1 दक्षिणां दिशं; D3 दक्षिणामुखं; G2.6 M2 दक्षिणां दिशं. — (L. 14) T1 G3-5 M गुहामासादयद्राजन्; G1 ततो गुहां च संप्राप्तः; G2.6 गुहामासाद्य तान्राजन्. — After line 14, T1 G2-6 M ins.:

पुरा वानरराजेन सुग्रीवेणाभिपालिताम् ।;

while G1 ins.:

पुरा वानरराजेन वालिना चाभिरक्षिताम् ।
ततः कोसलराजस्य राममेवानगेन (sic) च ।
सुग्रीवेणाभिगुप्तां तां प्रविस्तममथाह्वयत् ।

— (L. 15) B5 मैंद्रेन; D3.4.6 मैदेन. D3 विविदेन. G1 सुषेणांगदेन च (submetrical); G2-4.6 M सुषेणवसुषेणयोः. — (L. 16) D3 न चैतौ; G1 न तथा. T1 G4.5 M1 विमुखी-(M1 °खौ)कृतौ; G1 वितथीकृतः; G2.6 M2 वितथौ कृतौ (for विकृतिं गतौ). — For line 17, G1 subst.:

ततस्तुतोष सुग्रीवः कोसलाधिपतेः सखा ।

— (L. 18) D6 तौ च (for चैव). — (L. 19) G1 गच्छन्पांडवशार्दूलः कृष्णस्यानुमते स्थितः. — After line 19, G1 ins.:

14

After 2. 28. 29[ab], $V_1$ B D ins.:

चित्रभानुः सुरेशश्च अनलस्त्वं विभावसो ।
स्वर्गद्वारस्पृशश्चासि हुताशो ज्वलनः शिखी ।
वैश्वानरस्त्वं पिङ्गेशः प्लवंगो भूरितेजसः ।
कुमारसूस्त्वं भगवान्रुद्रधर्मो हिरण्यकृत् ।
अग्निर्ददातु मे तेजो वायुः प्राणं ददातु मे ।
पृथिवी बलमादध्याच्छिवं चापो दिशन्तु मे ।
अपां गर्भ महासत्त्व जातवेदः सुरेश्वर ।
देवानां मुखमग्ने त्वं सत्येन विपुनीहि माम् ।
ऋषिभिर्ब्राह्मणैश्चैव दैवतैरसुरैरपि ।
नित्यं सुहुत यज्ञेषु सत्येन विपुनीहि माम् ।
धूमकेतुः शिखी च त्वं पापहानिलसंभवः ।
सर्वप्राणिषु नित्यस्थः सत्येन विपुनीहि माम् ।
एवं स्तुतोऽसि भगवन्प्रीतेन शुचिना मया ।
तुष्टिं पुष्टिं स्मृतिं चैव प्रीतिं चाग्ने प्रयच्छ मे ।
वैशंपायन उवाच ।
इत्येवं मन्त्रमाग्नेयं पठन्यो जुहुयाद्विभुम् ।
ऋद्धिमान्सततं दान्तः सर्वपापैः प्रमुच्यते ।

15

S ins. after 2. 28. 53[ab] ($G_3$ ins. after an addl. colophon following 2. 28. 53):

धर्मराजप्रियो ह्येष विष्णोरमिततेजसः ।
सर्वमेतच्छ्रुतं राजन्पारंपर्येण पाण्डवः ।

— (L. 20) $D_6$ निर्विघ्नमस्तु. $V_1$ $B_{3.6}$ $T_1$ $G_{1.2.4.5}$ M यज्ञाय; $B_2$ $D_{1.2}$ $G_{3.6}$ विज्ञाय (for कार्याय). $D_3$ $T_1$ $G_{3-5}$ $M_1$ धर्मराजस्य. $B_4$ $D_3$ $T_1$ $G_{3-5}$ M धीमतः. — After line 20, $T_1$ $G_{2-6}$ M ins.:

इत्युक्त्वा वानरौ तौ तु पाण्डवाय धनं ददुः ।

[ $G_{2.6}$ ददौ (for ददुः). $G_3$ damaged. M ददतुर्धनमक्षयं (for the post. half). ]

On the other hand, $G_1$ ins. after line 20:

वसुरत्नान्युपादत्स्व यथेष्टं गच्छ भारत ।

14

(L. 1) $B_8$ सुवेशश्च; $D_{3.5}$ सुरेशस्त्वं. $D_1$ अनभस्त्वं. — $D_6$ repeats inadvertently 28[d] and 29[ab] of adhy. 28 as well as line 1 of the present passage. — (L. 2) $B_1$ चापि (for चासि). — (L. 3) $B_6$ प्रभंगो; $D_{1.2}$ प्रवर्ग्यो (for प्लवंगो). — (L. 4) $B_3$ $D_{n2}$ $D_{1.4.5}$ भगवन्. $D_1$ कद्रुगर्भो (for रुद्रधर्मो). $D_2$ हिरण्यवत्. — (L. 6) B (except $B_5$) $D_{1.2}$ पृथिवी च बलं दद्यात्. $B_6$ चापि; $D_3$ चोप- (for चापो). — (L. 7) $D_{3.4}$ सुरेश्वरः.

जनमेजयः ।
इच्छाम्यागमनं श्रोतुं हैडिम्बस्य द्विजोत्तम ।
लङ्कायां च गतिं ब्रह्मन्पौलस्त्यस्य च दर्शनम् ।
कावेरीदर्शनं चैव राजानः सर्व एव तान् ।
आनुपूर्व्याच्च मे शंस सर्वं ब्राह्मणपुंगव ।
वैशंपायनः ।
शृणु राजन्युग वृत्तं सहदेवस्य साहसम् ।
काननद्वीपकांश्चैव तरसा जित्य चाहवे ।
दक्षिणां च दिशं जित्वा चोलस्य विषयं ययौ ।
ददर्श पुण्यतोयां वै कावेरीं सरितां वराम् ।
नानापक्षिगणैर्जुष्टां तापसैरुपशोभिताम् ।
साललोध्रार्जुनैर्बिल्वैर्जम्बूशल्मलिकिंशुकैः ।
कदम्बैः सप्तपर्णैश्च काश्मर्यामलकैर्वृताम् ।
न्यग्रोधैश्च महाशाखैः प्लक्षैरौदुम्बरैरपि ।
शमीपलाशवृक्षैश्च अश्वत्थैः खदिरैर्वृताम् ।
बदरीभिश्च संपन्नामश्वकर्णैश्च शोभिताम् ।
करञ्जतिन्त्रिणीकैश्च तालव्रातैरलंकृताम् ।
शिरीषैः कुटजैर्निम्बैर्मधूकैः क्षीरकैर्वृताम् ।
पुंनागैर्बकुलैः कुन्दैश्चम्पकैः सर्वतो वृताम् ।
प्रियङ्ग्वशोकतिलकैरतिमुक्तैश्च शोभिताम् ।
असनैः कर्णिकारैश्च नागवृक्षैरलंकृताम् ।
केतकीभिः कुरबकैर्जातियूथिककुन्दलैः ।
अङ्कोलैः करवीरैश्च पुंनागैः पाटलैर्वृताम् ।

— (L. 10) $B_2$ $D_{1.2}$ च (for सु-). $D_{1.2}$ विकुर्नीहि (for विपुनीहि). — (L. 11) $D_{2.3.5}$ शिखीव; $D_6$ शिखी स. $B_4$ नीरसंभवः; $B_6$ नीललोहितः; $D_{n1}$ $D_1$ (by corr.).$_2$ नीलसंभवः (for [अ]निल°). — (L. 13) $D_{1.2.4.5}$ स्तुतो हि. — (L. 14) $D_n$ श्रुतं; $D_6$ श्रुतिं (for स्मृतिं). $B_3$ $D_{1.2}$ चापि; $B_3$ चाग्ने (for चैव). $B_{1-3.6}$ $D_{1.2}$ चैव; $B_{4.5}$ चाग्ने (for चाग्ने). — (L. 15) $D_{2.6}$ इत्येव. $B_{2.4.6}$ $D_{1.2}$ मंत्रमार्षेयं. — (L. 16) $D_6$ नीतिमान् (for ऋद्धि°).

15

(L. 3) $G_3$ तत्र ये च (for सर्व एव). $M_2$ राज्ञां दर्शनमेव च. — (L. 5) $G_{2.4.6}$ यथा (for युग). $G_{2.6}$ शासनं (for साहसम्). — (L. 7) $G_2$ स दक्षिणां (for दक्षिणां च). $G_4$ निलयं (for विषयं). — (L. 11) $G_2$ कश्मर्या°; $G_{3.4}$ काष्मर्या°; $G_6$ काश्मल्या°. — $G_6$ om. lines 12–21; $G_3$ om. lines 12–14. — (L. 13) $G_4$ तथा (for वृताम्). — (L. 14) $G_1$ $M_2$ संछिन्नाम्; $G_{2.4}$ संछन्नाम्. — (L. 15) $G_3$ reads line 15 after line 18. $G_4$ °बीजैश्च सालवृक्षैर्. — (L. 17) $M_2$ चंपकैरुपशोभितां. — (L. 18) $G_4$ प्रियाकाशोक°. — $G_2$ om. lines 19–25. — (L. 19) $G_3$ om. line 19. $M_2$ नागवृक्षैश्च शोभितां. — (L. 20) $T_1$ $G_3$ जातियूथिककुंदकैः; $G_4$ °यूथिरकुंडलैः; $G_5$ $M_2$ °यूथिककुं-

क्रमुकैर्नालिकेरैश्च पनसाम्रैश्च शोभिताम् ।
चूतैः पुण्ड्रकपत्रैश्च कदल्याढकसंवृताम् ।
नीपैश्च वेतसैः कीर्णां नालकुन्दकुशैर्वृताम् ।
एवं बहुविधैर्वृक्षैर्दिव्यैरन्यैश्च शोभिताम् ।
हंसकारण्डवैः कीर्णां कुररैः सारसैः शुकैः ।
चक्रवाकगणैर्जुष्टां प्लवैश्च जलवायसैः ।
समुद्रकाकैः क्रौञ्चैश्च नादितां जलकुक्कुटैः ।
एवं खगैश्च बहुभिः संघुष्टां जलचारिभिः ।
आश्रमैर्बहुभिर्युक्तां चैत्यवृक्षैश्च शोभिताम् ।
सेवितां ब्राह्मणैः शुभ्रैर्वेदवेदाङ्गपारगैः ।
क्वचित्तीररुहैर्वृक्षैर्मालाभिरिव शोभिताम् ।
पुष्पगुल्मलतोपेतामङ्गनामिव भूषणैः ।
क्वचित्पत्रचितैः पद्मैः क्वचित्सौगन्धिकोत्पलैः ।
कह्लारकुमुदैः फुल्लैः कमलैरुपशोभिताम् ।
नानापुष्परजोध्वस्तां प्रमदामिव भूषिताम् ।
रमणीयां तथा हृद्यां विहृतामप्सरोगणैः ।
मृष्टतीर्थामकलुषां प्राणिनां जीवनीं शुभाम् ।
अपारां स्वादुतोयां वै पुलिनद्वीपशोभिताम् ।
कावेरीं तादृशीं दृष्ट्वा प्रीतिमान्पाण्डवोऽब्रवीत् ।
अस्मद्राष्ट्रे यथा गङ्गा कावेरी च तथा इह ।
सहदेवस्तु तां तीर्त्वा नदीमनुचरैः सह ।
दक्षिणं तीरमासाद्य गमनायोपचक्रमे ।
आगतं पाण्डवं तत्र श्रुत्वा विषयवासिनः ।
दर्शनार्थं ययुस्ते तु कौतूहलसमन्विताः ।
द्रमिळाः पुरुषा राजन्स्त्रियश्च प्रियदर्शनाः ।
गत्वा पाण्डुसुतं तत्र ददृशुस्ते मुदान्विताः ।
सुकुमारं विशालाक्षं व्रजन्तं त्रिदशोपमम् ।
दर्शनीयतमं लोके नेत्रैरनिमिषैरिव ।
आश्चर्यभूतं ददृशुर्द्रमिळास्ते समाहिताः ।
महासेनोपमं दृष्ट्वा पूजां चक्रुश्च तस्य वै ।
रत्नैश्च विविधैरिष्टैर्भोगैरन्यैश्च संमतैः ।
गीतमङ्गलयुक्ताभिः स्तुवन्तो नकुलानुजम् ।
सहदेवस्तु तान्दृष्ट्वा द्रमिलानागतांस्तदा ।
विसृज्य तान्महाराज प्रस्थितो दक्षिणां दिशम् ।
दूतेन तरसा चोलं विजित्य द्रमिलेश्वरम् ।
ततो रत्नान्युपादाय पाण्ड्यस्य विषयं ययौ ।
दर्शने सहदेवस्य न च तृप्ता नराः परे ।
गच्छन्तमनुगच्छन्तः प्रीत्या कौतूहलान्विताः ।
ततो माद्रीसुतो राजन्मृगव्रातान्व्यलोकयत् ।
गजान्वनचरानन्यान्व्याघ्रान्कृष्णमृगान्बहून् ।
शुकान्मयूरान्दृष्ट्वा तु गृध्रानारण्यकुक्कुटान् ।
ततो देशं समासाद्य श्वशुरस्य महीपतेः ।
प्रेषयामास माद्रेयो दूतान्पाण्ड्याय वै तदा ।
प्रतिजग्राह तस्याज्ञां संप्रीत्या मलयध्वजः ।

($M_2$ °कं)दलैः. — (L. 21) $G_4$ $M_2$ अंकोलकर°. $G_3$ पटलैर्; $M_2$ पादपैर्. — (L. 22) $T_1$ $G_{3.4}$ $M_1$ नाळिकेरैश्च; $G_6$ नारिकेळैश्च. — (L. 23) $G_{3.4}$ पुंड्रैश्च पत्रैश्च; $G_5$ पुंडकवेत्रैश्च. $G_4$ कदल्याढकशोभितां; $G_5$ °थकसंवृतां; $G_6$ कदलीवन°. — (L. 24) $T_1$ $G_{3.5}$ नीलैश्च; $G_4$ दिशैश्च (for नीपैश्च). $T_1$ नाळकुंद°; $G_3$ नळशाक°; $G_4$ नवैः कुंद°; $G_6$ नळकुंत°; $M_1$ नळकुंदशतैर्वृतां; $M_2$ नलकाशकुशैर्वृतां. — (L. 26) $G_{2.3}$ $M_1$ हंसकारंडवा-; $G_6$ हंसैः कारंडवैः. $G_2$ वृतां; $G_{4.5}$ M बकैः; $G_6$ अपि (for शुकैः). — (L. 27) $G_{2.4.6}$ कीर्णां (for जुष्टां). $G_6$ अम्लजैरपि वायसैः (for the post. half). — (L. 28) $G_4$ समुद्रकारैः; $M_1$ °कांतैः. — (L. 29) $T_1$ खगैश्च; $G_6$ बटैश्च (for खगैश्च). $G_{5.6}$ संघृष्टां. — (L. 30) $G_{2.6}$ M सक्तां (for युक्तां). — (L. 31) $G_2$ शोभितां (for सेवितां). $G_6$ शुद्धैर् (for शुभ्रैर्). — (L. 32) $T_1$ $G_{3-5}$ उप- (for इव). — (L. 33) $G_{2.5.6}$ अंगानामिव. $M_2$ भूषितां. — (L. 34) $G_{2.3.6}$ M सुपुष्पितैः (for पत्रचितैः). $G_{2.6}$ $M_2$ वृक्षैः (for पद्मैः). $G_4$ क्वचित्पद्मैश्च कल्हारैः (for the prior half). — (L. 35) $G_3$ कल्हारैः (for कल्हार-). $T_1$ $G_{4.5}$ पुष्पैः (for फुल्लैः). $M_2$ कल्हारकुमुदोत्फुल्लैः. — $G_5$ om. lines 36–38. — (L. 36) $G_2$ °रजोध्वस्तां. $G_6$ शोभितां (for भूषिताम्). — (L. 37) $G_{4.6}$ $M_2$ तदा (for तथा). $M_2$ आहृताम् (for विहृताम्). $G_6$ विहृताप्सरसो गुणैः. — (L. 38) $T_1$ $G_3$ $M_1$ मृष्ट(G₃ ऋषि)तीर्थां नदीं श्रेष्ठां (for the prior half). $T_1$ $G_3$ प्राणिभिः सेवितां शुभां. — (L. 39) $G_{2.5.6}$ अपरां. Some MSS. पुळिन°. — (L. 40) $G_{2-4}$ M तथा (for [अ]ब्रवीत्). — (L. 41) $G_{2.4.6}$ $M_2$ शुभा (for इह). — (L. 42) $G_4$ तदा (for तु तां). — (L. 43) $M_2$ reads line 56 for line 43, repeating the former in its proper place. — (L. 46) $G_2$ $M_2$ द्रमिडाः; $G_3$ द्रामिळाः; $G_4$ द्रविडाः (for द्रमिळाः). — (L. 48) $T_1$ $G_{3.5}$ $M_1$ श्रीमंतं (for व्रजन्तं). $G_2$ त्रिदिवोपमाः. — (L. 50) $G_4$ आश्चर्यभूता. $G_{1.2.4.6}$ $M_2$ द्रमिडास्ते. $T_1$ $G_{2.6}$ $M_2$ समागताः; $G_4$ मुदान्विताः (for समाहिताः). — (L. 52) $G_4$ च संमितैः; $M_1$ सुसंमतैः. — (L. 53) $G_4$ गीतिमंगळयुक्तैश्च; $M_1$ गीर्भिर्मंगळयुक्ताभिः. — (L. 54) $G_2$ द्रमिडान्; $G_6$ द्रविडान्. $G_{2.4}$ M मुदा (for तदा). — (L. 55) $G_{2.4.6}$ $M_2$ महाबाहुः; $G_3$ °राजः. — (L. 56) Some MSS. चोळं. $G_5$ विसृज्य (for विजित्य). $G_{1.2}$ $M_2$ द्रमिडेश्वरं; $G_4$ द्रविडे°. — (L. 58) $T_1$ $G_{4.6}$ दर्शनं; $G_2$ दर्शनात्. $T_1$ नरान्; $G_6$ नरैः (for नराः). $G_{4.6}$ परैः; $M_1$ पुरे (for परे). — (L. 59) $G_4$ गच्छताम्. — (L. 60) $T_1$ $G_{2.4}$ $M_2$ मृगसंघान्विलोकयन्. — (L. 61) $G_4$ वनगजान्; $M_1$ वनेचरान्. $G_{2.4}$ transp. अन्यान् and व्याघ्रान्. — (L. 62) $G_4$ गृध्रकारंडकुक्कुटान्; $G_6$ गृध्रराजस्य कु°. — (L. 63) $G_6$ महीपतिः. — (L. 64) $G_4$ प्रीतान् (for

[ ]

भार्या रूपवती जिष्णोः पाण्ड्यस्य तनया शुभा ।
चित्राङ्गदेति विख्याता द्रमिला योषितां वरा ।
आगतं सहदेवं तु सा श्रुत्वान्तःपुरे पितुः ।
प्रेषयामास संप्रीत्या पूजां रत्नानि वै बहु ।
पाण्ड्योऽपि बहुरत्नानि दूतैः सह मुमोच ह ।
मणिमुक्ताप्रवालांश्च शङ्खशुक्तियुतान्बहून् ।
तां दृष्ट्वा प्रीतिमान्पूजां पाण्डवोऽथ मुदा नृप ।
भ्रातुः पुत्रे बहूत्रत्नानददाद्बभ्रुवाहने ।
पाण्ड्यं द्रमिळराजानं श्वशुरं मलयध्वजम् ।
स दूतैस्तं वशे कृत्वा मणलूरेश्वरं तदा ।
ततो रत्नान्युपादाय द्रमिळैरावृतो ययौ ।
अगस्त्यस्यालयं दिव्यं देवलोकसमं गिरिम् ।
स तं प्रदक्षिणं कृत्वा मलयं भरतर्षभ ।
लङ्घयित्वा तु माद्रेयस्ताम्रपर्णीं नदीं शुभाम् ।
प्रसन्नसलिलां दिव्यां सुशीतां चन्दनोद्वहाम् ।
समुद्रतीरमासाद्य न्यविशत्पाण्डुनन्दनः ।

Colophon.

वैशंपायनः ।

सहदेवस्ततो राजन्मन्त्रिभिः सह भारत ।
संप्रधार्य महाबाहुः सचिवैर्बुद्धिमत्तरैः ।
अनुमान्य स तां राजन्सहदेवस्त्वरान्वितः ।
चिन्तयामास राजेन्द्र भ्रातुः पुत्रं घटोत्कचम् ।
ततश्चिन्तितमात्रे तु राक्षसः प्रत्यदृश्यत ।
अतिदीर्घो महाकायः सर्वाभरणभूषितः ।
नीलजीमूतसंकाशस्तप्तकाञ्चनकुण्डलः ।
विचित्रहारकेयूरः किङ्किणीमणिभूषितः ।
हेममाली महादंष्ट्रः किरीटी कुक्षिबन्धनः ।
ताम्रकेशो हरिश्मश्रुर्भीमाक्षः कनकाङ्गदः ।
रक्तचन्दनदिग्धाङ्गः सूक्ष्माम्बरधरो बली ।
जवेन स ययौ तत्र चालयन्निव मेदिनीम् ।
ततो दृष्ट्वा जना राजन्नायान्तं पर्वतोपमम् ।
भयाद्धि दुद्रुवुः सर्वे सिंहात्क्षुद्रमृगा यथा ।
आससाद च माद्रेयं पुलस्त्यं रावणो यथा ।
अभिवाद्य ततो राजन्सहदेवं घटोत्कचः ।
प्रह्वः कृताञ्जलिस्तस्थौ किं कार्यमिति चाब्रवीत् ।
तं मेरुशिखराकारमागतं पाण्डुनन्दनः ।
तं परिष्वज्य बाहुभ्यां मूर्ध्न्युपाघ्राय चासकृत् ।
पूजयित्वा सहामात्यः प्रीतो वाक्यमुवाच ह ।

सहदेवः ।

गच्छ लङ्कां पुरीं वत्स करार्थं मम शासनात् ।
तत्र दृष्ट्वा महात्मानं राक्षसेन्द्रं विभीषणम् ।
रत्नानि राजसूयार्थं विविधानि बहूनि च ।
उपादाय च सर्वाणि प्रत्यागच्छ महाबल ।

वैशंपायनः ।

पाण्डवेनैवमुक्तस्तु मुदा युक्तो घटोत्कचः ।
तथेत्युक्त्वा महाराज प्रतस्थे दक्षिणां दिशम् ।
ययौ प्रदक्षिणं कृत्वा सहदेवं घटोत्कचः ।
लङ्कामभिमुखो राजन्समुद्रमवलोकयन् ।

दूतान्). — (L. 65) $G_{2}$ transp. तस्याशां and संप्रीत्या. $G_{4}$ दिव्याशां (for तस्याशां). — (L. 66) $G_{4}$ ज्येष्ठा (for जिष्णोः). — (L. 67) $G_{2}$ द्रामिडी; $G_{4}$ द्रविडा; $G_{6}$ $M_{2}$ द्रमिडी; $M_{1}$ द्रमिळी. — (L. 68) $G_{4}$ शुश्राव (for सा श्रुत्वा). — (L. 69) $T_{1}$ $G_{4}$ पूजां रत्ना($G_{4}$ °त्नै)श्च; $G_{2.6}$ $M_{2}$ पूजारत्नं च; $G_{3.5}$ $M_{1}$ पूजां ($G_{3}$ °जा-) रत्नांश्च. $G_{3.4}$ $M_{1}$ बहून्. — (L. 71) $T_{1}$ $G_{2-6}$ मणिमुक्ता($T_{1}$ °मुक्ताः; $G_{2}$ °रत्न)प्रवालानां; $M_{2}$ °प्रवालानि. $M_{2}$ सहदेवाय कीर्तिमान् (for the post. half). — (L. 72) $G_{2.3.5.6}$ $M_{1}$ तान् (for तां). $G_{2}$ प्रीतिमां; $G_{4}$ प्रतिमां; $G_{6}$ प्रतिमा- (for प्रीतिमान्). $G_{2}$ मुदान्वितः; $G_{4}$ मुदा युतः; $G_{5}$ मुदा नृपः. — (L. 73) $T_{1}$ $G_{3.5}$ भ्रातृपुत्रे. $G_{4}$ दत्वा (for रत्नान्). $G_{2.6}$ M दत्वा वै; $G_{4}$ अनर्घ्यान् (for अददाद्). — (L. 74) $G_{1-3}$ $M_{2}$ द्रमिड°; $G_{4}$ द्रविड° (for द्रमिळ°). — (L. 76) $G_{1.2}$ $M_{2}$ द्रमिडैर्; $G_{4}$ द्रविडैर्; $G_{6}$ द्रामिळैर् (for द्रमिळैर्). — (L. 77) $G_{6}$ रम्यं (for दिव्यं). — (L. 79) $T_{1}$ $G_{3.5}$ स लंघयित्वा माद्रेयस्. — (L. 80) $G_{2.4.6}$ $M_{2}$ सुशीतां च मनोरमां ($M_{2}$ °हरां). — Colophon. Adhy. no.: $T_{1}$ $G_{2.4-6}$ 34; $G_{3}$ 35; $M_{2}$ 33. — (L. 82) $G_{6}$ om. the ref. $G_{2}$ राजा (for राजन्). — (L. 83) $G_{2}$ बुद्धिसत्तमैः. — (L. 84) $G_{2}$ अनुनाप्य; $M_{1}$ °नीय (for °मान्य). $T_{1}$ $G_{2}$ $M_{1}$ तान् (for तां). $G_{4}$ अनुमान्याथ नाम्राजन्; $G_{6}$ $M_{2}$ स विचार्य तदा राजन्. — (L. 86) $T_{1}$ $G_{3.6}$ तस्मिन् (for ततः). — (L. 87) $G_{3.4.6}$ महाबाहुः (for °कायः). — $G_{4.6}$ om. lines 88–89. — (L. 89) $T_{1}$ $G_{3.5}$ किंकिणीहेमभू°. — (L. 90) $T_{1}$ कुक्षिवर्धनः; $G_{4}$ मृष्टकुंडलः (for कुक्षिबन्धनः). — (L. 91) $G_{4}$ भीमास्यः; $G_{6}$ $M_{2}$ भीमांगः. $G_{3.6}$ $M_{2}$ कटकांगदः. — (L. 93) $G_{2.4.6}$ $M_{2}$ बलेन (for जवेन). — (L. 94) $T_{1}$ मनो राजन्; $G_{4}$ महाराज (for जना राजन्). — (L. 95) $T_{1}$ $G_{3.5}$ $M_{1}$ चे-; $G_{6}$ ते (for हि). $M_{1}$ वने मृगगणैः सह (for the post. half). — $T_{1}$ $G_{2-4.6}$ transp. lines 99 and 100. — (L. 99) $G_{5}$ स (for तं). — (L. 100) M सं- (for तं). $G_{5}$ मूर्ध्नि चाघ्राय. $T_{1}$ $G_{2.4.6}$ $M_{2}$ पांडवः (for चासकृत्). — (L. 101) $G_{4}$ सहामात्यं. $G_{2.4}$ वाचम् (for वाक्यम्). — (L. 102) $G_{2.4}$ M om. the ref. $G_{3-6}$ $M_{1}$ लंका- (for लङ्कां). $G_{3}$ $M_{1}$ कार्यार्थं (for करार्थं). — (L. 106) $G_{4}$ °मुक्तोथ (for °मुक्तस्तु). $T_{1}$ om. lines 106–107. — After the prior half of line 108, $T_{1}$ ins.:

विभीषणादिदृष्ट

वषावाक्यसमाविष्ट

कूर्मग्राहझषाकीर्णं मीनैर्नक्रैस्तथाकुलम् ।
शुक्तिव्रातैः समाकीर्णं शङ्खानां निचयाकुलम् ।
स दृष्ट्वा रामसेतुं च चिन्तयन्नामविक्रमम् ।
प्रणम्य तमतिक्रम्य याम्यां वेलामलोकयत् ।
गत्वा पारं समुद्रस्य दक्षिणं स घटोत्कचः ।
ददर्श लङ्कां राजेन्द्र नाकपृष्ठोपमां शुभाम् ।
प्राकारेणावृतां रम्यां शुभद्वारैश्च शोभिताम् ।
प्रासादैर्बहुसाहस्रैः श्वेतरक्तैश्च संकुलाम् ।
तापनीयगवाक्षेण मुक्ताजालान्तराणि च ।
हैमराजतजालेन दान्तजालैश्च शोभिताम् ।
हर्म्यगोपुरसंबाधां रुक्मतोरणसंकुलाम् ।
दिव्यदुन्दुभिनिर्ह्रादामुद्यानवनशोभिताम् ।
सर्वकालफलैर्वृक्षैः पुष्पितैरुपशोभिताम् ।
पुष्पगन्धैश्च संकीर्णां रमणीयमहापथाम् ।
नानारत्नैश्च संपूर्णामिन्द्रस्येवामरावतीम् ।
विवेश स पुरीं लङ्कां राक्षसैश्च निषेविताम् ।
ददर्श राक्षसव्रातान्स्थूलप्रासधरान्बहून् ।
नानावेषधरान्दक्षान्नारीश्च प्रियदर्शनाः ।
दिव्यमाल्याम्बरधरा दिव्यभूषणभूषिताः ।
मदरक्तान्तनयनाः पीनश्रोणिपयोधराः ।
भैमसेनिं ततो दृष्ट्वा हृष्टास्ते विस्मयं गताः ।
आससाद गृहं राज्ञ इन्द्रस्य सदनोपमम् ।
स द्वारपालमासाद्य वाक्यमेतदुवाच ह ।

घटोत्कचः ।

कुरूणामृषभो राजा पाण्डुर्नाम महाबलः ।
कनीयांस्तस्य दायादः सहदेव इति श्रुतः ।
कृष्णमित्रस्य तु गुरो राजसूयार्थमुद्यतः ।
तेनाहं प्रेषितो दूतः करार्थं कौरवस्य च ।
द्रष्टुमिच्छामि राजेद्रं त्वं क्षिप्रं मां निवेदय ।

वैशंपायनः ।

तस्य तद्वचनं श्रुत्वा द्वारपालो महीपतेः ।
तथेत्युक्त्वा विवेशाथ भवनं स निवेदकः ।
साञ्जलिः स समाचष्ट सर्वां दूतगिरं तदा ।
द्वारपालवचः श्रुत्वा राक्षसेन्द्रो विभीषणः ।
उवाच वाक्यं धर्मात्मा समीपं मे प्रवेश्यताम् ।
एवमुक्तस्तु राजेन्द्र धर्मज्ञेन महात्मना ।
अथ निष्क्रम्य संभ्रान्तो द्वाःस्थो हैडिम्बमब्रवीत् ।
एहि दूत नृपं द्रष्टुं क्षिप्रं प्रविश च स्वयम् ।
द्वारपालवचः श्रुत्वा प्रविवेश घटोत्कचः ।
स प्रविश्य ददर्शाथ राक्षसेन्द्रस्य मन्दिरम् ।
ततः कैलाससंकाशं तप्तकाञ्चनतोरणम् ।
प्राकारेण परिक्षिप्तं गोपुरैश्चापि शोभितम् ।
हर्म्यप्रासादसंबाधं नानारत्नसमन्वितम् ।
काञ्चनैस्तापनीयैश्च स्फाटिकै राजतैरपि ।
वज्रवैडूर्यगर्भैश्च स्तम्भैर्दृष्टिमनोहरैः ।
नानाध्वजपताकाभिर्युक्तं मणिविचित्रितम् ।

— (L. 109) G2.4.5 M समुद्रं स व्यलोकयत् (G2.4 °यन्). — (L. 110) G6 कूर्मग्रह°. G5 नक्रैर्मीनैस् (by transp.); M2 मीननक्रैस्. G2 नद्याकुलं; M1 समाकुलं. — (L. 111) G2.4 शुक्तिजालैस्; G6 M2 शुक्तिव्र(M2 °व्रा)त-; M1 शुक्तिव्रातैः. T1 G3 तदाकीर्णं; G3–5 तथाकीर्णं. G2.4 निलयाकुलं. — G3 has a lacuna for the portion from the post. half of line 114 to राजेंद्र in line 115. — (L. 114) G2.4 दक्षिणां. — G5 om. lines 117–119; G6 om. lines 117–122. — (L. 118) G2.4 तपनीयगवाक्षैश्च; G3 M2 तापनीयगवाक्षाणि. M1 °जालांतरेण च. — (L. 119) T1 हेमराजतजालानि; G2–4 है(G4 हे)मराजतजालैश्च; M2 हैमराजतवेश्मानि. T1 दंत°; M1 कांत° (for दान्त°). M2 दांतजालांतराणि च. — (L. 121) T1 दांत° (for दिव्य°). G2.4 दिव्यायुधाभिनिहितां समंतादव-शोभितां. — After line 121, T1 G3 read line 128, *repeating* it in its proper place. — (L. 122) T1 G2.3 सर्वकाम°. G2 वृक्षाः (for वृक्षैः). — (L. 123) T1 संकीर्णैः. — (L. 128) G2.3 दिव्याभरणभूषिताः (for the post. half.). — (L. 130) In G6, the portion from ततो दृष्ट्वा in line 130 up to प्रीतिमानभवद् in line 266, is lost on a missing fol. T1 G2.3 तदा (for ततो).

— (L. 131) G2 गृहं राजन्; G4 महाराजन् (for गृहं राज्ञ). — (L. 133) T1 G5 पांडुसूनुर्; G2.4 धर्मराजो (for पाण्डुर्नाम). — (L. 134) G2.4 अस्य (for तस्य). G5 श्रुतिः. — G2.4 M1 om. line 135. — (L. 137) G3 दैत्येंद्रं; M1 रक्षेंद्रं. T1 G3.5 तं; M1 तु (for मां). M1 निवेद्यतां (for निवेदय). — (L. 138) T1 महीमतः; G4 M महीपते. — (L. 139) M1 सदनं (for भवनं). T1 G3.5 सन्निवेदकः; G2 स निवेदकं. — (L. 140) G2.4 M प्रांजलिः. G2.4 M सर्वमाचष्ट (G2 °ष्टे). G2.4 सर्वं; M1 स तु (for सर्वां). M1 °वचस् (for °गिरं). — G2.4 om. lines 141–144. — (L. 143) M राज्ञा स (for राजेन्द्र). — (L. 145) G2.4 प्रविशतां; M1 प्रविशतु (for °श च). — (L. 147) T1 G2.4 संप्रविश्य. — (L. 149) G2 चोप-; G4 चाभि-; G5 चाति- (for चापि). — After line 149, G3 ins.:

दृष्ट्वा च तत्र सर्वान्वै हैडिम्बः स मनोरमम् ।

— (L. 150) G3 °विभूषितं (also °समन्वितं as above). — (L. 151) G5 तपनीयैश्च. G2 कांचनीयैस्तापनीयैश्च (hypermetric!); G4 कांचनीयैस्तापनीयैः. — (L. 152) M2 °जुष्टैश्च (for °गर्भैश्च). G2 दृष्टिमनोरमैः; M2 च सुमनोहरैः. — (L. 153) T1 G5 सुवर्णाभिश्च चित्रितं; G3 M1 सौ(M1 सु)वर्णाभि-

चित्रमाल्यावृतं रम्यं तप्तकाञ्चनवेदिकम् ।
तान्दृष्ट्वा तत्र सर्वान्स भैमसेनिर्मनोरमान् ।
प्रविशन्नेव हैडिम्बः शुश्राव मुरवस्वनम् ।
तन्त्रीगीतसमाकीर्णं समतालमिताक्षरम् ।
दिव्यदुन्दुभिनिर्ह्रादं वादित्रशतसंकुलम् ।
स श्रुत्वा मधुरं शब्दं प्रीतिमानभवत्तदा ।
ततो विगाह्य हैडिम्बो बहुकक्ष्यां मनोरमाम् ।
स ददर्श महात्मानं द्वाःस्थेन सह भारत ।
तं विभीषणमासीनं काञ्चने परमासने ।
दिव्ये भास्करसंकाशे मुक्तामणिविभूषिते ।
दिव्याभरणचित्राङ्गं दिव्यरूपधरं विभुम् ।
दिव्यमाल्याम्बरधरं दिव्यगन्धोक्षितं शुभम् ।
विभ्राजमानं वपुषा सूर्यवैश्वानरप्रभम् ।
उपोपविष्टं सचिवैर्देवैरिव शतक्रतुम् ।
यक्षैर्महारथैर्दिव्यैर्नारीभिः प्रियदर्शनैः ।
गीर्भिर्मङ्गलयुक्ताभिः पूज्यमानं यथाविधि ।
चामरे व्यजने चाग्र्ये हेमदण्डे महाधने ।
गृहीते वरनारीभ्यां धूयमाने च मूर्धनि ।
अर्चिष्मन्तं श्रिया जुष्टं कुबेरवरुणोपमम् ।
धर्मे चैव स्थितं नित्यमद्भुतं राक्षसेश्वरम् ।
दृष्ट्वा घटोत्कचो राजन्ववन्दे तं कृताञ्जलिः ।
प्रह्वस्तस्थौ महावीर्यः शक्रं चित्ररथो यथा ।
तं दूतमागतं दृष्ट्वा राक्षसेन्द्रो विभीषणः ।
पूजयित्वा यथान्यायं सान्त्वपूर्वं वचोऽब्रवीत् ।

विभीषणः ।

कस्य वंशे नु संजातः करमिच्छन्महीपतिः ।
तस्यानुजान्समस्तांश्च पुरं देशं च तस्य वै ।
त्वां च कार्यं च तत्सर्वं श्रोतुमिच्छामि तत्त्वतः ।
विस्तरेण मम ब्रूहि सर्वानेतान्पृथक्पृथक् ।

Colophon.

वैशंपायनः ।

एवमुक्तस्तु हैडिम्बः पौलस्त्येन महात्मना ।
कृताञ्जलिरुवाचाथ सान्त्वयन्राक्षसाधिपम् ।

घटोत्कचः ।

सोमस्य वंशे राजासीत्पाण्डुर्नाम महाबलः ।
पाण्डोः पुत्राश्च पञ्चासञ्शक्रतुल्यपराक्रमाः ।
तेषां ज्येष्ठस्तु नाम्नाभूद्धर्मपुत्र इति श्रुतः ।
अजातशत्रुर्धर्मात्मा धर्मो विग्रहवानिव ।
ततो युधिष्ठिरो राजा प्राप्य राज्यमकारयत् ।
गङ्गाया दक्षिणे तीरे नगरे नागसाह्वये ।
तद्दत्वा धृतराष्ट्राय शक्रप्रस्थं ययौ ततः ।
भ्रातृभिः सह राजेन्द्र शक्रप्रस्थे प्रमोदते ।
गङ्गायमुनयोर्मध्ये तावुभौ नगरोत्तमौ ।
नित्यं धर्मे स्थितो राजा शक्रप्रस्थे प्रशासति ।
तस्यानुजो महाबाहुर्भीमसेनो महाबलः ।
महातेजा महावीर्यः सिंहतुल्यः स पाण्डवः ।
दशनागसहस्राणां बले तुल्यः स पाण्डवः ।
तस्यानुजोऽर्जुनो नाम महावीर्यपराक्रमः ।

विंचित्रितं. — (L. 155) $T_1$ $G_5$ तां; $G_2$ तद्; $G_4$ तं (for तान्). $G_{2.4}$ $M_2$ सर्वं च (for सर्वान्स). $G_2$ मनोरमं; $M_2$ °हरं (for °रमान्). — (L. 156) $G_4$ मधुरस्वनं. — (L. 157) $T_1$ $G_{2-4}$ $M_1$ समताळ°. $G_2$ °मिवाक्षरं (for °मिताक्षरम्). — (L. 158) $G_{2.4}$ M °सत(M₁ °सहि)तं शुभं (for °शतसंकुलम्). — (L. 159) $G_4$ स श्रोत्रमधुरं श्रुत्वा. — (L. 160) $G_2$ [ऽ]वगाह्य; $G_4$ विगाह् (for विगाह्य). $T_1$ $G_{2.3.5}$ $M_1$ बहुकक्ष्या ($G_2$ °क्ष्य-) मनोरमाः. — (L. 161) $G_5$ भरतर्षभ (for सह भारत). — (L. 163) $G_{2.4}$ दिवि (for दिव्ये). — (L. 164) $T_1$ $G_{3.5}$ दिव्यगंधोक्षितं शुभं (= post. half. of line 165). — (L. 165) $T_1$ $G_{3.5}$ दिव्यरत्नविभूषितं; $G_4$ दिव्यगंधाक्षतं शुभं. — (L. 168) $G_{2.4}$ M महात्मभिर् (for महारथैर्). $M_2$ नारीभिर्हंचकांतिभिः (for the post. half). — (L. 169) $G_2$ $M_2$ गीतैर्; $G_4$ गीत- (for गीर्भिर्). $G_2$ $M_2$ °युक्तैश्च (for °युक्ताभिः). — (L. 170) $T_1$ $G_{2.4.5}$ $M_1$ चामर- (for चामरे). — (L. 171) $G_2$ वीज्यमानं (for धूयमाने). — (L. 173) $G_{2.4}$ $M_1$ [आ]स्थितं (for स्थितं). — After line 173, $G_4$ ins.:

रामभिक्ष्वाकुनाथं तं स्मरन्तं मनसा सदा ।

— (L. 174) $G_{2.4}$ विनयेन (for ववन्दे तं). — (L. 178) $M_1$ om. the ref. $T_1$ नु; $G_{2-4}$ $M_1$ च; $M_2$ स (for नु). — Colophon. Adhy. no.: $T_1$ $G_{2.4.5}$ M 35; $G_3$ 36. — (L. 183) $M_2$ ममर्थमिदमुत्तरं (for the post. half). — (L. 184) $M_2$ सोमवंशोद्भवो राजा (for the prior half). $G_4$ महीपतिः (for महाबलः). — (L. 185) $G_{2.4}$ तु पुत्राः; $M_2$ च पुत्राः (by transp.). — (L. 186) $G_{2.4}$ धर्मात्मा; M नाम्ना वै ($M_2$ तु) (for नाम्नाभूद्). — $G_2$ om. (hapl.) the post. half of line 186 and the prior half of line 137. — (L. 188) $T_1$ महाबलः; $G_{3.5}$ $M_1$ अपालयत् (for अकारयत्). — (L. 189) $T_1$ $G_{2.4}$ गंगायां. — (L. 190) $G_2$ शक्रप्रस्थं. $G_{2.3}$ तदा (for ततः). — (L. 191) $G_{2.4}$ सहितो राजा (for सह राजेन्द्र). $T_1$ om. (hapl.) from प्रमोदते in line 191 to शक्रप्रस्थे in line 193. — (L. 192) $M_2$ ते उभे नगरोत्तमे. — (L. 193) $T_1$ प्रशंसति; $M_2$ प्रशास्ति नः (for प्रशासति). — $T_1$ om. (hapl.) lines 194–196. — (L. 194) $G_{2.4}$ $M_2$ इति श्रुतः (for महाबलः). — $M_2$ om. lines 195–198. — (L. 195) $G_{2.4}$ °बाहुः (for °वीर्यः). $G_{2.4}$ $M_1$ शक्र($M_1$ सिंह)तुल्यपराक्रमः (for the post. half). — $G_3$ om. line 196. — (L. 197) $G_4$ राजा (for नाम). — (L. 201) $T_1$ $G_{3.5}$ भास्करप्रभः.

सुकुमारो महासत्त्वो लोके वीर्येण विश्रुतः ।
कार्तवीर्यसमो वीर्ये सागरप्रतिमो बले ।
जामदग्न्यसमो ह्यस्त्रे संख्ये रामसमोऽर्जुनः ।
रूपे शक्रसमः पार्थस्तेजसा भास्करोपमः ।
देवदानवगन्धर्वैः पिशाचोरगराक्षसैः ।
मानुषैश्च समस्तैश्च अजेयः फल्गुनो रणे ।
तेन तत्खाण्डवं दावं तर्पितं जातवेदसे ।
तरसा तर्पयित्वा तं शक्रं देवगणैः सह ।
लब्धान्यस्त्राणि दिव्यानि तर्पयित्वा हुताशनम् ।
तेन लब्धा महाराज दुर्लभा देवतैरपि ।
वासुदेवस्य भगिनी सुभद्रा नाम विश्रुता ।
अर्जुनस्यानुजो राजन्नकुलश्चेति विश्रुतः ।
दर्शनीयतमो लोके मूर्तिमानिव मन्मथः ।
तस्यानुजो महातेजाः सहदेव इति श्रुतः ।
तेनाहं प्रेषितो राजन्सहदेवेन मारिष ।
अहं घटोत्कचो नाम भीमसेनसुतो बली ।
मम माता महाभागा हिडिम्बा नाम राक्षसी ।
पार्थानामुपकारार्थं चरामि पृथिवीमिमाम् ।
आसीत्पृथिव्याः सर्वस्या महीपालो युधिष्ठिरः ।
राजसूयं क्रतुश्रेष्ठमाहर्तुमुपचक्रमे ।
संदिदेश च स भ्रातॄन्करार्थं सर्वतोदिशम् ।
उदीचीमर्जुनस्तूर्णं करार्थं समुपाययौ ।
गत्वा शतसहस्राणि योजनानि महाबलः ।
जित्वा सर्वान्नृपान्युद्धे हत्वा च तरसा वशी ।
स्वर्गद्वारमुपागम्य रत्नान्यादाय वै भृशम् ।
अश्वांश्च विविधान्दिव्यान्सर्वानादाय फल्गुनः ।
धनं बहुविधं राजन्धर्मपुत्राय वै ददौ ।
भीमसेनो हि राजेन्द्र जित्वा प्राचीं दिशं बलात् ।
वशे कृत्वा महीपालान्पाण्डवाय धनं ददौ ।
दिशं प्रतीचीं नकुलः करार्थं प्रययौ तथा ।
सहदेवो दिशं याम्यां जित्वा सर्वान्महीक्षितः ।
मां संदिदेश राजेन्द्र करार्थमिह सत्कृतः ।
पार्थानां चरितं तुभ्यं संक्षेपात्समुदाहृतम् ।
तमवेक्ष्य महाराज धर्मराजं युधिष्ठिरम् ।
पावकं राजसूयं च भगवन्तं हरिं प्रभुम् ।
एतानवेक्ष्य धर्मज्ञ करं त्वं दातुमर्हसि ।

Colophon.

वैशंपायनः ।

तेन तद्भाषितं श्रुत्वा राक्षसेन्द्रो विभीषणः ।
प्रीतिमानभवद्राजन्धर्मात्मा सचिवैः सह ।
स चास्य प्रतिजग्राह शासनं प्रीतिपूर्वकम् ।
तच्च कालकृतं धीमानित्यमन्यत स प्रभुः ।
ततो ददौ विचित्राणि कम्बलानि कुथानि च ।
दान्तकाञ्चनपर्यङ्कान्मणिहेमविचित्रितान् ।
भूषणानि विचित्राणि महार्हाणि बहूनि च ।
प्रवालानि च शुभ्राणि मणींश्च विविधान्बहून् ।
काञ्चनानि च भाण्डानि कलशानि घटानि च ।
राजतानि च भाण्डानि चित्राणि च बहूनि च ।
शस्त्राणि रुक्मचित्राणि मणिमुक्तैर्विचित्रितान् ।
यज्ञस्य तोरणे युक्तान्ददौ तालांश्चतुर्दश ।
रुक्मपङ्कजपुष्पाणि शिबिका मणिभूषिताः ।
मुकुटानि महार्हाणि हेमवर्णांश्च कुण्डलान् ।

— (L. 203) $G_{2.4}$ $M_1$ मनुष्यैश्च. $M_2$ समस्तैस्तु. — (L. 204) $T_1$ दात्तं; $G_{3.4}$ दाहं (for दावं). $T_1$ $G_5$ ईप्सितं (for तर्पितं). — (L. 205) $T_1$ तर्जयित्वा. — After line 208, $G_4$ ins.:

अर्जुनो जयतां श्रेष्ठो भार्यार्थे प्रतिगृह्य ताम् ।

— (L. 209) $T_1$ $G_{3-5}$ नकुलेति च; $G_2$ नकुलो नाम. — (L. 212) $G_4$ दूतः (for राजन्). — (L. 214) $G_{2.5}$ महाभाग. $T_1$ भीमांबा; $G_2$ हिडिंबी (for हिडिम्बा). — (L. 215) $G_2$ अहं (for इमाम्). — (L. 216) $G_{3.5}$ अस्याः (for आसीत्). $G_{2.4}$ पृथिव्यां. $T_1$ $G_{2.4}$ सर्वस्यां. — (L. 220) $T_1$ $G_{2.5}$ योजनानां. — (L. 221) $G_3$ बली (for वशी). — (L. 224) $G_2$ तदा (for ददौ). — (L. 225) $T_1$ $G_{4.5}$ $M_1$ रक्षेंद्र; $G_3$ दैत्येंद्रं (for राजेन्द्र). $G_3$ बली (for बलात्). — (L. 228) $G_4$ महीपतीन् (for °क्षितः). — (L. 229) $T_1$ $G_{2.3}$ $M_1$ रक्षेंद्र (for राजेन्द्र). $T_1$ $G_{3.5}$ अभि- (for इह). $M_1$ सत्कृतं. — (L. 230) $G_4$ पांडवाचरितं. — (L. 231) $G_{3-5}$ $M_1$ त्वम् (for तम्). $G_4$ महाराजं; $M_1$ महाभाग.

— (L. 233) $T_1$ $G_2$ त्वं करं (by transp.). $G_4$ $M_2$ करं दातुमिहार्हसि. — Colophon. Adhy. no.: $T_1$ $G_{2.4.5}$ M 36; $G_3$ 37. — (L. 236) $M_2$ शासनं प्रतिजग्राह धर्मात्मा राक्षसैः सह. — (L. 237) $T_1$ $M_2$ कृष्ण° (for काल°). — (L. 238) $T_1$ $G_{2-4}$ $M_1$ कंबलानि. — (L. 239) $T_1$ $G_{2-5}$ $M_1$ दांतकानपि ($G_2$ °कांश्चापि; $G_4$ °राजत-) पर्यंकान्. — (L. 240) $T_1$ $G_{2-4}$ $M_1$ च शुभ्राणि; $M_2$ महार्हाणि (for विचित्राणि). $M_2$ प्रवालानि मणींश्च सः (for the post. half). — (L. 241) Om. in $M_2$. $T_1$ $G_{2-4}$ $M_1$ प्रवाळानि. $G_{2.4}$ मुक्तानि (for शुभ्राणि). — $G_2$ om. lines 242–243. — (L. 242) $M_1$ घटांस्तथा (for घटानि च). — (L. 243) Om. in $M_2$. $G_3$ reads from the post. half of line 243 to the prior half of line 247, after the prior half of line 251. $G_{2.4}$ $M_1$ विचित्राणि (for चित्राणि च). — (L. 244) $G_2$ वस्त्राणि (for शस्त्राणि). $G_2$ मणिमुक्ता- (for °मुक्तैर्). — (L. 245) $G_{2.4}$ तोरणान्. — (L. 246) $G_3$ रक्त° (for रुक्म°). — (L. 247) $T_1$ $G_{2-5}$ $M_1$ मकुटानि. $T_1$ हैमवर्णांश्च; $G_3$ $M_1$

हेमपुष्पाणि विविधान्रुक्ममाल्यानि चापरान् ।
चन्द्रसंकाशाञ्शतावर्तान्विचित्रिणः ।
चन्दनानि च मुख्यानि रुक्मरत्नान्यनेकशः ।
वासांसि च महार्हाणि कम्बलानि बहून्यपि ।
अन्यांश्च विविधान्राजन्रत्नानि च बहूनि च ।
स ददौ सहदेवाय तदा राजा विभीषणः ।
विभीषणं च राजानमभिवाद्य कृताञ्जलिः ।
प्रदक्षिणं परीत्यैव निर्जगाम घटोत्कचः ।
तानि सर्वाणि रत्नानि अष्टाशीतिर्निशाचराः ।
आजह्रुः समुदा राजन्हैडिम्बेन तदा सह ।
रत्नान्यादाय सर्वाणि प्रतस्थे स घटोत्कचः ।
ततो रत्नान्युपादाय हैडिम्बो राक्षसैः सह ।
जगाम तूर्णं लङ्कायाः सहदेवपदं प्रति ।
आसेदुः पाण्डवं सर्वे लङ्घयित्वा महोदधिम् ।
सहदेवो ददर्शाथ रत्नाहारान्निशाचरान् ।
आगतान्भीमसंकाशान्हैडिम्बं च तथा नृप ।
द्रमिला नैर्ऋतान्दृष्ट्वा दुद्रुवुस्ते भयार्दिताः ।
भैमसेनिस्ततो गत्वा माद्रेयं प्राञ्जलिः स्थितः ।
प्रीतिमानभवद्दृष्ट्वा रत्नौघं तं च पाण्डवः ।
विसृज्य द्रमिलान्सर्वान्गमनायोपचक्रमे ।

16

After the ref. of 2. 30. 1, $T_1$ $G_{3-5}$ $M_1$ ins.:

एवं निर्जित्य पृथिवीं भ्रातरः कुरुनन्दन ।
वर्तमानाः स्वधर्मेण शशासुः पृथिवीमिमाम् ।
चतुर्भिर्भीमसेनाद्यैर्भ्रातृभिः सहितो नृपः ।
अनुगृह्य प्रजाः सर्वाः सर्ववर्णानगोपयत् ।
अविरोधेन सर्वेषां हितं चक्रे युधिष्ठिरः ।
क्रीयतां दीयतां सर्वं मुक्त्वा कोपं बलं विना ।
साधुधर्मेति पार्थस्य नान्यच्छ्रूयत भाषितम् ।
एवं वृत्ते जगत्तस्मिन्पितरीवान्वरज्यत ।
न तस्य विद्यते द्वेष्टा ततोऽस्याजातशत्रुता ।

17

After 2. 30. 25, $D_{1.2}$ ins.:

आगतान्पृथिवीपालान्संप्रेक्ष्याह युधिष्ठिरः ।
कृष्णं कमलपत्राक्षं सर्वतः कार्यसाधकम् ।
पादावनेजनं देयं राजसूये महाक्रतौ ।
न तादृग्दृश्यते मह्यं न च भूपैः समाहृतम् ।
कुतो लभ्यं महाबाहो एतस्य च धनागमम् ।
कृष्ण उवाच ।
मा विषीदस्व राजेन्द्र धनस्यार्थे कथंचन ।
हैडिम्बं प्रेषयिष्यामि विभीषणमरिंदमम् ।
आनेतुं रक्षसां नाथं धनौघपरिपूर्तये ।
तत आहूय हैडिम्बं बहुमानपुरःसरम् ।
उवाच श्लक्ष्णया वाचा पूजयन्निव माधवः ।
गच्छ हैडिम्ब भद्रं ते लङ्कायां रक्षसां पतिम् ।
निवेदयस्व मद्वाचा यदुक्तं राक्षसं प्रति ।
तत्स्मृत्वा त्वं समागच्छ प्रसादं मम च स्मर ।
ततो भीमसुतः कृत्वा प्रणामं कृष्णपादयोः ।
जगाम त्वरितो लोकान्द्रष्टुं पौलस्त्यमञ्जसा ।
ततः सागरमासाद्य बद्धं रामेण पादपम् ।

हेमवर्माणि; $G_4$ °वर्णानि (for °वर्णांश्च). $M_2$ रत्नगर्भांश्च कंकणान् (for the post. half). — (L. 248) $T_1$ $G_5$ विविधा; $G_{2.3}$ चित्राणि; $M_2$ सर्वाणि (for विविधान्). — (L. 249) $T_1$ $G_3$ $M_1$ विचित्रितान् (for °त्रिणः). $G_{2.4}$ $M_2$ शतावर्तविचित्रितान्. — (L. 250) $G_{2.4}$ $M_1$ तत्ररत्ना°; $G_3$ तथा रत्ना°. $M_2$ वासांसि विविधानि च (for the post. half). — (L. 251) For sequence in $G_3$, cf. v.l. line 243. — (L. 252) $G_4$ रत्नानि विविधानि च (for the post. half). — (L. 253) $G_2$ विशां पतिः (for विभीषणः). — The sequence of the lines 254–258 is as follows: $T_1$ $G_3$ 254, 257, 258, 256, 257 (repeated in $T_1$), 255; $G_4$ $M_1$ 256–258, 254, 255; $M_2$ 256, 258, 254, 255. — (L. 254) Om. in $G_2$. — (L. 255) $G_5$ प्रतीत्यैव (for परी°). — $G_2$ om. 256–258. — (L. 256) $T_1$ $G_{3.5}$ अष्टाशीति-; $M_2$ आजह्रुस्ते. — (L. 257) $G_2$ सहसा (for समुदा). $M_2$ अष्टाशीतिसहस्राणि समदा रक्तलोचनाः. — (L. 261) $G_{2.4}$ पांडववरं. — (L. 262) $G_{3-5}$ $M_1$ रत्नभारान् (for रत्नाहारान्). — (L. 264) $T_1$ $G_{2.3.5}$ द्रमिडा (for द्रमिला). — (L. 265) $T_1$ भूत्वा (for गत्वा). — (L. 266) $T_1$ तच्; $G_2$ तु (for तं). — After line 266, $M_2$ ins.:

तं परिष्वज्य पाणिभ्यां हृष्टा तान्प्रीतिमानभूत् ।

— (L. 267) $G_{2.3}$ द्रमिडान् (for द्रमिलान्).

16

(L. 1) $G_3$ विजित्य (for निर्जित्य). $T_1$ $M_1$ भ्रातृभिः (for भ्रातरः). $T_1$ $M_1$ कुरुनंदनः; $G_4$ कुलनंदन. — (L. 2) $M_1$ वर्तमानः. $T_1$ $M_1$ शशास (for शशासुः). — (L. 3) $T_1$ सहितोनघैः; $M_1$ °तोनघः (for °तो नृपः). — (L. 4) $T_1$ धर्मेणैवान्वपालयत्; $M_1$ सर्वतस्ता अगोपयत्. — (L. 5) $T_1$ रक्षां (for हितं). — (L. 6) $G_3$ क्रियतां; $G_4$ प्रीयतां (for क्रीयतां). $M_1$ देयं (for सर्वं). — (L. 7) $G_3$ स्वस्य (for साधु-).

17

(L. 12) $D_2$ रामजन्मनि (for राक्षसं प्रति). (L. 14)

तत्र रामेश्वरं देवं संपूज्य विधिवत्तदा ।
हैडिम्बस्त्वरितो लोकान्प्रविवेश नृपाज्ञया ।
स गतो वायुवेगेन लङ्कां द्वारमुपास्थितः ।
स पृष्टो द्वारपालैस्तु कस्त्वं षण्डाकृतिः कुतः ।
द्वाःस्थान्कांश्चित्समुत्क्षिप्य कर्णाभ्यां ग्राहसत्तदा ।
दुर्दशा राक्षसास्तत्र जायन्ते कुरुजाङ्गले ।
भैमसेनिस्तदोवाच द्वारस्थान्क्रोधसंयुतः ।
कृष्णाज्ञयागतं मां च निवेदयत राक्षसाः ।
विभीषणाय वै शीघ्रं कार्यार्थं राक्षसोत्तमाः ।
तदुक्तमाकर्ण्य च ते पौलस्त्याय न्यवेदयन् ।
आहूय तमुवाचेदं किं कार्यं तन्निशामय ।
स सर्वं कथयामास कृष्णप्रोक्तं तदाग्रतः ।
विभीषणश्च धर्मात्मा कृष्णाज्ञां शिरसा दधत् ।
संस्मृत्य रामवचनं कृष्णाज्ञां पालयंस्तदा ।
मन्दोदर्यै निवेद्याथ कृष्णरामप्रसादजम् ।
कृष्णं द्रष्टुं गमिष्यामि आज्ञापय नृपात्मजे ।
जगत्सारं रत्नजातं दशग्रीवेन रक्षितम् ।
आनीतं विबुधादींश्च जित्वा तच्च समृद्धिमत् ।
प्रेषयिष्यामि तत्सर्वं कृष्णप्रीत्यै नृपात्मजे ।
पश्यतोभयतः पादौ रत्नजैः पूरितैर्धनैः ।
इन्द्रप्रस्थं गत उत कृष्णश्चासौ महायशाः ।
राक्षसा यादवेन्द्रं तं द्रष्टुं गच्छाम माचिरम् ।
वैशंपायन उवाच ।
इति श्रुत्वा वचस्तस्य विस्मिता वाक्यमब्रवीत् ।
मानुषेभ्यः कथं राजन्करं दत्से वदस्व मे ।
विभीषण उवाच ।
शुभे कारणतो दद्मि न बिभेमि कुतोऽस्म्यहम् ।
पुरा रामेण कथितं ममाग्रे मयनन्दिनि ।
जन्म मे यादवे वंशे द्वापरे समुपस्थिते ।
साहाय्यं पाण्डवस्यार्थे करिष्यामि तदा व्रज ।
इन्द्रप्रस्थे महाबाहो दर्शनं ते करोम्यहम् ।
वैशंपायन उवाच ।
इत्युक्त्वा स ययौ तत्र यत्र कृष्णः सुरारिहा ।
संपूज्य कृष्णं संहृष्टः पौलस्त्यः परमो महान् ।
संपूज्य राक्षसं विष्णुरित्युवाच विभीषणम् ।
स्वागतं ते महाबाहो कुशलं ते च सर्वदा ।
विभीषण उवाच ।
तव दर्शनतो विष्णो अशुभं नास्ति मे क्वचित् ।
अद्य मे स्वागतं जन्म जीवितं च सुजीवितम् ।
इदं स्वर्णं मयानीतं कोटिशो यदुनन्दन ।
यज्ञार्थं धर्मराजस्य तवाज्ञां वचसां दधृक् ।
इति श्रुत्वा वचस्तस्य ततः स्फुरितलोचनः ।
गन्तुमाज्ञां ददौ लङ्कां पौलस्त्याय महात्मने ।
व्रज लङ्कां महावीर तुल्यं बलिरिहासुर ।
इति श्रुत्वा ततो लङ्कामगमद्रावणानुजः ।
पूज्यमानो महावीरै राक्षसो भरतर्षभ ।

Colophon.

## 18

After the addl. colophon following 2. 33. 21, S ins.:

वैशंपायनः ।
ततः समुदिता मुख्यैर्गुणैर्गुणवतां वराः ।
बहवो भावितात्मानः पृथक्पृथगरिंदमाः ।
आत्मकृत्यमिति ज्ञात्वा पाञ्चालास्तत्र सर्वशः ।
समीयुर्वृष्णयश्चैव तदानीकाग्रहारिणः ।
सदाराः सजनामात्या वहन्तो रत्नसंचयान् ।
विकृष्टत्वाच्च देशस्य गुरुभारतया च ते ।
ययुः प्रमुदिताः पश्चाद्राजभिर्न समं ययुः ।
बलशेषं समुदितं परिगृह्य समन्ततः ।
राज्ञां चक्रायुधः शौरिरमित्रगणमर्दनः ।
बलाधिकारे निक्षिप्तं संमान्यानकदुन्दुभिम् ।
संप्रायाद्यादवश्रेष्ठो यजमाने युधिष्ठिरे ।
उच्चावचमुपादाय धर्मराजाय माधवः ।
धनौघं पुरतः कृत्वा खाण्डवप्रस्थमाययौ ।
तत्र यज्ञागतान्सर्वांश्चैद्यवक्रपुरोगमान् ।
भूमिपालगणान्सर्वान्सप्रभानिव तोयदान् ।
मेघकायान्निःश्वसतो यूथपानिव यूथपः ।
बलिनः सिंहसंकाशान्महीमावृत्य तिष्ठतः ।

Before line 14, $D_2$ ins. वैशं° उ°. — (L. 35) $D_2$ मयात्मजे (for नृपा°). — (L. 40) $D_2$ दत्सि. — (L. 53) $D_2$ शिरसावहत् (for वचसां दधृक्).

## 18

(L. 2) $G_{2.5}$ अरिंदम. — (L. 4) $G_6$ समेयुर्. $G_2$ तदनीकाग्रहारिणः; $G_4$ तदानीं काम°. — (L. 5) $G_3$ सज्जनामात्या; $G_4$ सश्रिका°. — (L. 6) $T_1$ विकृष्टात्वात्तु (sic); $M_1$ प्रकृष्टत्वाच्च. $G_4$ नरेशस्य; $G_6$ च देवस्य (for च देशस्य). $G_2$ गुरुभारतयैव ते; $G_6$ गुरुत्वात्त्वरयैव ते. — After line 6, $G_{2.6}$ read lines 24–31. — (L. 8) $T_1$ बलिशेषं. — (L. 9) $T_1$ राजंश्चक्रायुधः; $G_{2.4.6}$ ऋजुचक्रायुधं ($G_4$ °धः); $G_3$ ऋजुः शक्रायुधः; $M_1$ ऋजुं चक्रा°. $G_{2.6}$ शौरिममित्रगणमर्दनं. — (L. 10) $T_1$ $G_{2.6}$ निक्षिप्य. — (L. 12) $T_1$ $M_1$ धर्मराजस्य. — (L. 13) $G_6$ सेनौघं (for धनौघं). — (L. 14) $T_1$ $G_{2-4.6}$ $M_1$ यज्ञगतान्. $T_1$ पश्यन्; $M_1$ वीक्षन् (for सर्वान्). $G_{2-4.6}$ °वक्र° (for °वक्र°). — (L. 16) $G_3$ निवसतो. $G_3$ यूथपाः; $G_4$ °पं; $G_6$ °पान् (for °पः). — (L. 17) $G_{3.6}$ °संकाशा (for

ततो जनौघसंबाधं राजसागरमक्षयम् ।
नादयन्नथघोषेणाभ्युपायान्मधुसूदनः ।
असूर्यमिव सूर्येण निवातमिव वायुना ।
कृष्णेन समुपेतेन जहर्षे भारतं पुरम् ।
ब्राह्मणक्षत्रियाणां हि पूजार्थं सर्वधर्मवित् ।
सहदेवो विशेषज्ञो माद्रीपुत्रः कृतोऽभवत् ।
प्रभवन्तं तु भूतानां भास्वन्तमिव तेजसा ।
प्रविशन्तं यज्ञभूमिं सितस्यावरजं विभुम् ।
तेजोराशिमूर्तिं विप्रमदृश्यमविजानताम् ।
वयोधिकानां वृद्धानां मार्गमात्मनि तिष्ठताम् ।
जगतस्तस्थुषश्चैव प्रभवाप्ययमच्युतम् ।
अनन्तमन्तं शत्रूणाममित्रगणमर्दनम् ।
प्रभवं सर्वभूतानामापत्स्वभयमच्युतम् ।
भविष्यं भावनं भूतं द्वारवत्यामरिंदमम् ।
स दृष्ट्वा कृष्णमायान्तं प्रतिपूज्यामितौजसम् ।
यथार्हं केशवे वृत्तिं प्रत्यपद्यत पाण्डवः ।
ज्यैष्ठ्यकानिष्ठ्यसंयोगं संप्रधार्य गुणागुणैः ।
आरिराधयिपुर्धर्मैः पूजयित्वा द्विजोत्तमान् ।
महदादित्यसंकाशमासनं च जगत्पतेः ।
ददौ नासादितं कैश्चित्तस्मिन्नुपविवेश सः ।

°संकाशान्). — Lines 18-21 =(var.) 2. 30. 14-15. — (L. 19) T1 G2.4 M1 ह्युपायान्; G6 उपायान् (for [अ]भ्युपायान्). — (L. 20) T1 विवानमिव. — (L. 21) T1 G2 समवेतेन (for समुपे°). T1 G4.5 M1 जहृषे; G3 जहृषुर्. G2 कुलं (for पुरम्). — (L. 22) T1 अथ धर्मवित्; G2.6 M1 ह्यर्थधर्म°; G4 सर्वकर्म°. — (L. 23) G3 तदा (for कृतो). — G2.6 read lines 24-31 after line 6. — (L. 24) T1 M1 भगवंतं (for प्रभ°). G2.6 भगवान्सर्वभूतानां भास्वानिव च तेजसा. — (L. 25) T1 M1 विशंतं यज्ञभूमिं तां (M1 तं यज्ञभूमिं); G2.6 विशन्तंनयज्ञभूमिं (for the prior half). G2.6 स्थि(G6 मि)तस्याविरजो विभुः; G3.4 स तस्याविरजं विभुं. — (L. 26) T1 G2-4.6 दृश्यन् (for विप्रम्). — (L. 27) G5 M1 वयोनिगानां. T1 G2.6 मार्गमावृत्य. — (L. 28) =(var.) 2. 30. $11^{ab}$. T1 G5 प्रभवाव्ययम्; G4 प्रभवाच्युतम्. G3.4 अव्ययं (for अच्युतम्). G6 प्रभवाव्य- (or °प्य)यमव्ययं. — (L. 30) G2 भवम् (for [अ]भयम्). — (L. 31) G6 भविष्णुं (for भविष्यं). G5 परमं (for भावनं). — (L. 33) G6 केशवं. G2.3.6 वृत्तं. — (L. 34) G3 ज्येष्ठकानिष्ठ-; G4 ज्येष्ठ्यकान्वीक्ष्य; G6 ज्यैष्ठ्यकानिष्ठ-. — (L. 35) G3 आनिनाययिषुर्. T1 G2-5 M1 धर्मं (for धर्मैः). — (L. 37) G6 तमनासादितं; M1 ददावनासितं.

19

D3 om. lines 1-2. (L. 1) K4 V1 B3 D3 वृद्धे (for राजन्). B1.4 स्थिते च पुरुषोत्तमे. — (L. 2) Om. in K4. B1 D1.2 तस्मिन् (for राजन्). B4.6 तस्मिन्स्वच्छंदमृत्युके (for the prior half). — K4 reads lines 3-10 after 2. 34. 10. — (L. 3) Dn2 सर्वशस्त्र°. — (L. 6) K4 B2.3 D1.2.5 भरताचार्ये; B1 (m as above) भारतश्रेष्ठे. B D1.3.5 कथं कृष्णोर्चितस्त्वया (cf. lines 2, 10 and 14). — (L. 7) D1.2 कृपं (for द्रुमं). V1 त्वया (for तथा). — (L. 8) B4 भीष्मके चैव दुर्धर्षे. K4 द्रोणे च; V1 B4 पांडुवत् (for पाण्ड्ये च). — (L. 9) D3 रुक्मिणि च (by transp.). K4 नृपे रुक्मिणि चांबष्ठे. D1.2 एकलव्ये. — (L. 10) V1 Dn कथं कृष्णस्त्वयार्चितः (cf. line 6). — (L. 11) Dn वै (for यो), and °वन्तः (for °न्यः). — (L. 14) V1 Dn कथं कृष्णस्त्वयार्चितः (cf. line 6).

19

After 2. 34. 9, K4 V1 B Dn D1-3.5 ins.:

भीष्मे शांतनवे राजन्स्थिते पुरुषसत्तमे ।
स्वच्छन्दमृत्युके राजन्कथं कृष्णोऽर्चितस्त्वया ।
अश्वत्थाम्नि स्थिते वीरे सर्वशास्त्रविशारदे ।
कथं कृष्णस्त्वया राजन्नर्चितः कुरुनन्दन ।
दुर्योधने च राजेन्द्रे स्थिते पुरुषसत्तमे ।
कृपे च भारताचार्ये कथं कृष्णस्त्वयार्चितः ।
द्रुमं किंपुरुषाचार्यमतिक्रम्य तथार्चितः ।
भीष्मके च दुराधर्षे पाण्ड्ये च कृतलक्षणे ।
नृपे च रुक्मिणि श्रेष्ठे एकलव्ये तथैव च ।
शल्ये मद्राधिपे चैव कथं कृष्णोऽर्चितस्त्वया ।
अयं च सर्वराज्ञां यो बलश्लाघी महारथः ।
जामदग्न्यस्य दयितः शिष्यो विप्रस्य भारत ।
येनात्मबलमाश्रित्य राजानो युधि निर्जिताः ।
तं च कर्णमतिक्रम्य कथं कृष्णोऽर्चितस्त्वया ।

20

S ins. after 2. 34. 9 (G2, after 2. 34. $4^{ab}$):

भीष्मे शांतनवे राजन्स्थिते पुरुषसत्तमे ।
स्वच्छन्दमृत्युके तस्मिन्कथं कृष्णोऽर्चितस्त्वया ।

20

This is an expanded version of the same passage as App. I (No. 19). — G2.3 om. lines 1-2. — (L. 2) T1 सिद्धे; G1 भीष्मे (for तस्मिन्). G4-6 M त(G4 अ)स्मिन्स्वच्छंदमृत्यूके (G6 °मृत्यौ हि). G1 स्थिते कृष्णोऽर्चितः कथं. — G3 ins. after line 2: G2 after line 12:

दुर्योधने च राजेन्द्रे स्थिते पुरुषसत्तमे ।

On the other hand, G6 M2 ins. after line 2:

अयं तत्र व्यतिक्रान्तः कर्मणां स्वल्पदर्शनः ।
त्वादृशो धर्मयुक्तो हि कुर्वाणः प्रियकाम्यया ।

कृपे च भारताचार्ये कथं कृष्णोऽर्चितस्त्वया ।
अश्वत्थाम्नि स्थिते वीरे सर्वशस्त्रविशारदे ।
कथं कृष्णस्त्वया राजन्नर्चितो यदुनन्दनः ।
द्रुमे किंपुरुषाचार्ये कथं कृष्णस्त्वयार्चितः ।
अयं पार्थादनवमो धनुर्वेदे पराक्रमे ।
एकलव्ये स्थिते राजन्कथं कृष्णस्त्वयार्चितः ।
भगदत्ते महावीर्ये जयत्सेने च मागधे ।
कालिङ्गे च स्थिते राजन्कथं कृष्णस्त्वयार्चितः ।
पूर्वदेशाधिपे वीरे कौसलेन्द्रे बृहद्बले ।
विराटे च स्थिते वीरे कथं कृष्णोऽर्चितस्त्वया ।
भीष्मके च दुराधर्षे पाण्ड्ये च कृतधन्वनि ।
नृपे रुक्मिणि च श्रेष्ठे दन्तवक्रे च पार्थिवे ।
शल्ये मद्राधिपे चैव कथं कृष्णस्त्वयार्चितः ।
सुराष्ट्राधिपतौ वीरे माल्वे च स्थिते नृपे ।
कृतक्षणे च वैदेहे कथं कृष्णस्त्वयार्चितः ।
अयं च सर्वराज्ञां यो बलश्लाघी महारथः ।
जामदग्न्यस्य दयितः शिष्यो विप्रस्य भारत ।
येनात्मबलमाश्रित्य जरासंधो युधा जितः ।
तं कर्णं समतिक्रम्य कथं कृष्णस्त्वयार्चितः ।
विन्दानुविन्दावावन्त्यौ काम्भोजं च सुदक्षिणम् ।
स्थिते साल्वे च राजेन्द्रे कथं कृष्णोऽर्चितस्त्वया ।
अस्मिन्पार्थसखे राजन्गन्धर्वाणां महीपतौ ।
स्थिते चित्ररथे वीरे कथं कृष्णस्त्वयार्चितः ।
बाह्लीकं स्थविरं वीरं कौरवाणां महारथम् ।
सौमदत्तिं महावीर्यं सोमदत्तं महारथम् ।
शकुनिं सौबलं चैव सिन्धुराजं महाबलम् ।
एतानवमतान्कृत्वा कथं कृष्णोऽर्चितस्त्वया ।

21

After 2. 35. 29, S ($G_4$ ins. lines 1, 2, 7, 8, 10 only) ins.:

वैशंपायनः ।
एवमुक्ते तु गाङ्गेये शिशुपालश्चुकोप ह ।
क्रुद्धं सुनीथं दृष्ट्वाथ सहदेवोऽब्रवीत्तदा ।
सहदेवः ।
नीतिपूर्वमिदं सर्वं चेदिराज मया कृतम् ।
न मे विमतिरस्तीह कारणं चात्र मे श्रृणु ।

— $G_1$ om. lines 3–6. — (L. 3) $G_3$ om. line 3. $G_6$ $M_1$ भरता°. $T_1$ $G_{2.5}$ transp. अर्चितः and त्वया. — (L. 4) $T_1$ सर्वशस्त्रविदां वरे; $M_1$ सर्वशास्त्रविशारदे. — (L. 6) $G_{4.6}$ transp. त्वया and अर्चितः. $T_1$ $G_2$ M स्थिते कृष्णोऽर्चितः कथं. — (L. 7) $T_1$ अस्मिन्पार्थादनवमे. $G_{2-4}$ $M_2$ धनुर्वेदपराक्रमे. — (L. 8) $G_1$ शाकलव्ये. $G_{1.2.4.6}$ M transp. त्वया and अर्चितः. — After line 8, $G_3$ reads lines 11–12. — (L. 9) $M_1$ स्थिते वीरे (for महावीर्ये). $G_2$ (before corr.).$_3$ माधवे (for मागधे). — (L. 10) $G_3$ $M_2$ कलिंगे. $G_{1-4.6}$ M transp. त्वया and अर्चितः. — (L. 11) $T_1$ $G_{3.4.6}$ कौ($G_6$ को)सले च; $G_2$ सौबले च; M कौसल्ये च (for कौसलेन्द्रे). — (L. 12) $G_{2.3.6}$ M राजन् (for वीरे). $G_3$ transp. अर्चितः and त्वया. — For lines 11–12, $G_1$ subst.:

कौसलाधिपतौ वीरे स्थिते कृष्णोऽर्चितस्त्वया ।

— $G_{2.6}$ M ins. after line 12: $G_3$, after line 15:

दरदे च महावीर्ये कथं कृष्णोऽर्चितस्त्वया ।
[ $G_3$ स्थिते कृष्णोऽर्चितः कथं. ]

— $G_{1.2.6}$ M transp. lines 13–15 and 16–17. — (L. 13) $G_1$ भीष्मकेकयपाण्ड्ये च चोळे च सहकेरळे. — (L. 14) $G_{2.3}$ नृपे च रुक्मिणि श्रे($G_3$ ज्ये)ष्ठे. $T_1$ $G_{1-3.5.6}$ दंतवक्रे. — (L. 15) $T_1$ $G_{1-4.6}$ M transp. त्वया and अर्चितः. — After line 15, $G_3$ ins. दरदे च etc. (see above). — $G_3$ om. lines 16–17. — (L. 17) $G_1$ मैथिले पूर्वदेशे च (for the prior half). $T_1$ $G_{4.6}$ transp. त्वया and अर्चितः. $G_{1.2}$ M स्थिते कृष्णोऽर्चितः कथं. — (L. 18) $G_2$ अयं च सर्वयशानां. $G_{2.4}$ महाबलः. — (L. 19) $T_1$ $G_{3-5}$ रामस्य (for विप्रस्य). $G_3$ धीमतः (for भारत). — (L. 20) $G_1$ येनात्र; $G_6$ येनापि (for येनात्म-). — (L. 21) $G_3$ कृष्णं (for कर्णं). $G_{1.3.4.6}$ M transp. त्वया and अर्चितः. — (L. 22) Om. in $G_1$. $G_2$ विंदातिविंदावन्त्योन्यौ. $G_{2.4.6}$ $M_2$ कांभोजश्च सुदक्षिणः. — (L. 23) $T_1$ $G_3$ transp. अर्चितः and त्वया. — $G_1$ om. lines 24–25. — (L. 24) $G_{2.5.6}$ M अयं (for अस्मिन्). $G_{2.6}$ °सखा; M °सखो. $G_{2.6}$ M महीपतिः. — (L. 25) $G_3$ वीर्ये; $G_6$ वृद्धे (for वीरे). $G_{2.4-6}$ M transp. त्वया and अर्चितः. — $G_{2.6}$ om. lines 26–29. — (L. 27) Om. in $G_3$. M transp. सौमदत्तिं and सोमदत्तं. $G_1$ सौमदत्तं (for °दत्तिं). $M_1$ महावीरं. — (L. 28) $M_1$ महारथं; $M_2$ जयद्रथं (for महाबलम्). — (L. 29) $G_3$ transp. अर्चितः and त्वया.

21

☞ References to Harivaṃśa (=Hari.) are to the Chitrashala edition, Poona (1936); and to the Rāmāyaṇa, to the Kumbhakonam edition (ed. Krishnacharya and Vyasacharya, 1911).

(L. 1) $G_5$ $M_1$ om. the ref. $G_6$ गांगेयेनैवमुक्तस्तु; $M_1$ तथोक्तवति गांगेये (for the prior half). $G_6$ तं (for ह). — (L. 2) $G_3$ सुनीतं. $G_6$ तथा; $M_1$ इदं (for तदा). — (L. 3) $G_{2.6}$ मति° (for नीति°). — (L. 4) $G_{2.6}$

स पार्थिवानां सर्वेषां गुरुः कृष्णो बलेन वै ।
तस्मादभ्यर्चितोऽर्ध्यार्हः सर्वे संमन्तुमर्हथ ।
यो वा न सहते राज्ञां कश्चित्सबलवाहनः ।
क्षिप्रं युद्धाय निर्यातु शक्तश्चेदत्र मे युधि ।
तस्य मूर्ध्नि सुसंन्यस्तं राज्ञः सव्यं पदं मया ।
एवमुक्तो मया हेतुरुत्तरं प्रब्रवीतु मे ।
वैशंपायनः ।
ततो न व्याजहारैषां कश्चिद्बुद्धिमतां सताम् ।
मानिनां बलिनां राज्ञां मध्ये संदर्शिते पदे ।
पुष्पवृष्टिर्महत्यासीत्सहदेवस्य मूर्धनि ।
एवमुक्ते सुनीथस्य सहदेवेन केशवे ।
स्वभावरक्ते नयने भूयो रक्ते बभूवतुः ।
तस्य कोपं समुद्भूतं ज्ञात्वा भीष्मः प्रतापवान् ।
आचचक्षे पुनस्तस्मै कृष्णस्यैवोत्तमान्गुणान् ।
स सुनीथं समामन्त्र्य तांश्च सर्वान्महीक्षितः ।
उवाच वदतां श्रेष्ठ इदं मतिमतां वरः ।
सहदेवेन राजानो यदुक्तं केशवं प्रति ।
तत्तथेति विजानीध्वं भूयश्चात्र निबोधत ।
Colophon.
वैशंपायनः ।
ततो भीष्मस्य तच्छ्रुत्वा वचः काले युधिष्ठिरः ।
उवाच मतिमान्भीष्मं ततः कौरवनन्दनः ।
विस्तरेणास्य देवस्य कर्माणीच्छामि सर्वशः ।
श्रोतुं भगवतस्तानि प्रब्रवीहि पितामह ।
कर्मणामानुपूर्व्यं च प्रादुर्भावांश्च मे विभोः ।
यथा च प्रकृतिः कृष्णे तन्मे ब्रूहि पितामह ।
वैशंपायनः ।
एवमुक्तस्तदा भीष्मः प्रोवाच पुरुषर्षभम् ।
युधिष्ठिरममित्रघ्नं तस्मिन्क्षत्रसमागमे ।
समक्षं वासुदेवस्य देवस्येव शतक्रतोः ।
कर्माण्यसुकराण्यन्यैराचचक्षे जनाधिप ।
शृण्वतां पार्थिवानां च धर्मराजस्य चान्तिके ।
इदं मतिमतां श्रेष्ठः कृष्णं प्रति विशां पते ।
सान्त्ववामन्त्र्य राजेन्द्रं चेदिराजमरिंदमम् ।
भीमकर्मा ततो भीष्मो भूयः स इदमब्रवीत् ।
कुरूणां चापि राजानं युधिष्ठिरमुवाच ह ।
भीष्मः ।
वर्तमानामतीतां च शृणु राजन्युधिष्ठिर ।
ईश्वरस्योत्तमस्यैनां कर्मणां गहनां गतिम् ।
अव्यक्तो व्यक्तलिङ्गस्थो य एष भगवान्प्रभुः ।
पुरा नारायणो देवः स्वयंभूः प्रपितामहः ।
सहस्रशीर्षः पुरुषो ध्रुवोऽव्यक्तः सनातनः ।
सहस्राक्षः सहस्रास्यः सहस्रचरणो विभुः ।
सहस्रबाहुः साहस्रो देवो नामसहस्रवान् ।
सहस्रमुकुटो देवो विश्वरूपो महाद्युतिः ।
अनेकवर्णो देवादिरव्यक्ताद्वै परे स्थितः ।
असृजत्सलिलं पूर्वं स च नारायणः प्रभुः ।
ततस्तु भगवांस्तोये ब्रह्माणमसृजत्स्वयम् ।
ब्रह्मा चतुर्मुखो लोकान्सर्वांस्तानसृजत्स्वयम् ।
आदिकाले पुरा ह्येवं सर्वलोकस्य चोद्भवः ।
पुराथ प्रलये प्राप्ते नष्टे स्थावरजङ्गमे ।
ब्रह्मादिषु प्रलीनेषु नष्टे लोके चराचरे ।

तन्मे निगदतस्त्वं हि ($G_6$ °तस्तत्त्वं) (for the prior half). $G_6$ कारणादत्र. — (L. 6) $G_{2.6}$ अभ्यर्चितोस्माभिः. — (L. 7) $G_{2.6}$ $M_1$ transp. राज्ञां and कश्चित्. — (L. 8) $G_2$ स तु वा (for अत्र मे). $G_6$ तस्य मूर्ध्याहितं पदं (for the post. half). — (L. 9) $G_{2.6}$ $M_1$ om. line 9. $G_3$ तस्य मूर्धनि निश्चितं ममेदं पदमद्य हि. — (L. 10) $M_1$ एवमुक्ते मया कश्चिद्. — (L. 12) $G_6$ तत्तेन (for मानिनां). — (L. 13) $T_1$ $G_{2.6}$ $M_1$ om. line 13. $G_3$ ततोपतत्पुष्पवृष्टिः (for the prior half). — After line 13, $G_3$ ins.:

अदृश्यता देववाचः साधु साध्विति चाब्रुवन् ।
अविध्यदजिनं हृष्टो भविष्यद्भूतभावनः ।
सर्वसंशयनिर्मुक्तो नारदः सर्वलोकवित् ।
स्मितपूर्वं ततः कृत्वा सुनीथं प्रत्यचिन्तयत् ।

— (L. 15) $T_1$ $G_{2.6}$ $M_1$ कोपाद्रक्ततरे कृते (for the post. half). — (L. 16) $G_2$ कोप-; $G_3$ कोपान् (for कोपं). — (L. 17) $G_{2.3.5.6}$ उत्तरान् (for उत्तमान्). — (L. 19) $G_2$ श्रेष्ठम् (for श्रेष्ठ). — Colophon. *Adhy. no.*: $T_1$ $G_{2.3.5.6}$ $M_1$ 46. — (L. 23) $G_2$ $M_1$ तदा (for ततः). $G_3$ कौरवनंदनं. — (L. 24) $G_2$ कर्माणि श्रोतुम् (for देवस्य कर्माणि). — (L. 26) $G_2$ पूर्वं; $M_1$ °पूर्वीं. $T_1$ $G_{5.6}$ $M_1$ प्रादुर्भावाश्च; $G_2$ °वश्च. $G_{3.5.6}$ $M_1$ ये (for मे). $T_1$ विभो. — (L. 28) $G_{2.3.6}$ $M_1$ om. the ref. $G_3$ ततो (for तदा). $T_1$ $G_3$ $M_1$ भरतर्षभं ($G_3$ °भ; $M_1$ °भः); $G_2$ पुरुषर्षभ. — (L. 29) $G_6$ राज° (for क्षत्र°). — (L. 31) $G_6$ जनाधिपः. — (L. 33) $G_2$ श्रेष्ठ. — (L. 34) $T_1$ $G_3$ राजेंद्र. $M_1$ अरिंदम. — (L. 36) $G_{2.6}$ अपि; $G_3$ चाधि- (for चापि). $M_1$ अभाषत (for उवाच ह). — (L. 37) $G_5$ om. the ref. $G_2$ वर्तमानमतीतं च. — (L. 38) $T_1$ $M_1$ [उ]त्तमस्येमां. — (L. 39) = line 76. $G_2$ विभुः (for प्रभुः). — (L. 41) $G_2$ सहस्रशीर्षा. $T_1$ [ऽ]व्यक्त- (for ऽव्यक्तः). — (L. 42) $G_6$ $M_1$ transp. सहस्राक्षः and सहस्रास्यः. — (L. 43) $G_6$ साहस्रैर् (for साहस्रो). — (L. 45) $G_3$ उपरिस्थितः; $G_6$ विमरे स्थितिः; $M_1$ वै परस्मृतः. — (L. 46) $G_3$ सर्वं (for पूर्वं). — (L. 47) $T_1$ $G_5$ $M_1$ स (for तु). — (L. 48) $T_1$ सर्वानसृजन स्वयं. — (L. 50) $G_{5.6}$ पुरापः- (for पुराथ). — (L. 51) $T_1$ $G_6$ नष्टलोके; $G_2$ नष्टे लोक-. — (L. 52) $G_6$ आघात° (for

आभूतसंप्लवे प्राप्ते प्रलीने प्रकृतौ महान् ।
एकस्तिष्ठति सर्वात्मा स तु नारायणः प्रभुः ।
नारायणस्य चाङ्गानि सर्वदैवानि भारत ।
शिरस्तस्य दिवं राजन्नाभिः खं चरणौ मही ।
अश्विनौ कर्णयोर्देवौ चक्षुषी शशिभास्करौ ।
इन्द्रवैश्वानरौ देवौ मुखं तस्य महात्मनः ।
अन्यानि सर्वदैवानि तस्याङ्गानि महात्मनः ।
सर्वं व्याप्य हरिस्तस्थौ सूत्रं मणिगणानिव ।
आभूतसंप्लवान्तेऽथ दृष्ट्वा सर्वं तमोन्वितम् ।
नारायणो महायोगी सर्वज्ञः परमात्मवान् ।
ब्रह्मभूतस्तदात्मानं ब्रह्माणमसृजत्स्वयम् ।
सोऽध्यक्षः सर्वभूतानां प्रभूतः प्रभवोऽच्युतः ।
सनत्कुमारं रुद्रं च मनुं चैव तपोधनान् ।
सर्वमेवासृजद्ब्रह्मा ततो लोकान्प्रजास्तथा ।
तेन तद्व्यसृजत्तत्र प्राप्ते काले युधिष्ठिर ।
तेभ्योऽभवन्महात्मभ्यो बहुधा ब्रह्म शाश्वतम् ।
कल्पानां बहुकोट्यश्च समतीता हि भारत ।
आभूतसंप्लवाश्चैव बहुकोट्योऽतिचक्रमुः ।
मन्वन्तरयुगेऽजस्रं संकल्पा भूतसंप्लवाः ।
चक्रवत्परिवर्तन्ते सर्वं विष्णुमयं जगत् ।
सृष्ट्वा चतुर्मुखं देवं देवो नारायणः प्रभुः ।
स लोकानां हितार्थाय क्षीरोदे वसति प्रभुः ।
ब्रह्मा तु सर्वभूतानां लोकस्य च पितामहः ।
ततो नारायणो देवः सर्वस्य प्रपितामहः ।

Colophon.

भीष्मः ।

अव्यक्तो व्यक्तलिङ्गस्थो य एष भगवान्प्रभुः ।
नारायणो जगच्चक्रे प्रभवाप्ययसंहितः ।
एष नारायणो भूत्वा हरिरासीद्युधिष्ठिर ।
ब्रह्माणं शशिसूर्यौ च धर्मं चैवासृजत्स्वयम् ।
बहुशः सर्वभूतात्मा प्रादुर्भवति कार्यतः ।
प्रादुर्भावांस्तु वक्ष्यामि दिव्यान्देवगणैर्युतान् ।
सुप्त्वा युगसहस्रं स प्रादुर्भवति कार्यवान् ।
पूर्णे युगसहस्रेऽथ देवदेवो जगत्पतिः ।
ब्रह्माणं कपिलं चैव परमेष्ठिं तथैव च ।
देवान्सप्तऋषींश्चैव शंकरं च महायशाः ।
सनत्कुमारं भगवान्मनुं चैव प्रजापतिम् ।
पुरा चक्रेऽथ देवादिः प्रदीप्ताग्निसमप्रभः ।
येन चार्णवमध्यस्थौ नष्टे स्थावरजङ्गमे ।
नष्टदेवासुरनरे प्रणष्टोरगराक्षसे ।
योद्धुकामौ सुदुर्धर्षौ भ्रातरौ मधुकैटभौ ।
हतौ प्रभवता तेन तयोर्दत्त्वा वृतं वरम् ।
भूमिं बद्ध्वा कृतौ पूर्वं मृन्मयौ द्वौ महासुरौ ।
कर्णस्रोतोद्भवौ तौ तु विष्णोस्तस्य महात्मनः ।
महार्णवे प्रस्वपतः शैलराजसमौ स्थितौ ।
तौ विवेश स्वयं वायुर्ब्रह्मणा साधु चोदितः ।
तौ दिवं छादयित्वा तु वव्रधाते महासुरौ ।
वायुप्राणौ तु तौ दृष्ट्वा ब्रह्मा पर्यामृशच्छनैः ।
एकं मृदुतरं विद्धि कठिनं विद्धि चापरम् ।
नामनी तु तयोश्चक्रे स विभुः सलिलोद्भवः ।

आभून°). G3 प्रभूते (for प्रलीने). — (L. 55) G3 चरणं. — (L. 58) G5 सप्त देवानि. G3 सर्वांगानि. — (L. 59) G2 सर्वव्यापि-; G6 सर्वस्यापि (for सर्वं व्याप्य). G2.3.6 सूत्रे मणिगणा इव (= Gītā 7. 7^d). — (L. 60) T1 आभूतः (for आभूत-), and तमोमुखं (for °न्वितम्). — (L. 64) G2.6 M1 सप्तर्षींश्च (for मनुं चैव). — (L. 65) T1 G3.5 M1 पूर्वम् (for सर्वम्). G2.6 तथा (for ततो). G5 लोकाः (for लोकान्). G6 transp. प्रजाः and तथा. — (L. 66) G6 नैव (for न तद्). M1 ते चापि ह्यसृजंस्तत्र (for the prior half). G2.6 प्राप्त- (for प्राप्ते). — (L. 68) G2.5 समतीतास्तु; G3 °तीतानि; G6 समापितास्तु (for समतीता हि). — (L. 69) G2 बहुकोट्योपचक्रमुः; G6 °धोत्था प्रचक्रमुः; M1 °कोट्यो व्यतिक्रमः. — (L. 70) G2.6 M1 मन्वंतरा(G6 °रं; M1 °र)युगा°; G3 °तरे युगे. G2.3 राजन्; G5 राज- (for ऽजस्रं). — (L. 72) G2 स्रष्टा (for सृष्ट्वा). M1 दिव्यं (for देवं). T1 G3 स्वयं (for प्रभुः). — G2 om. lines 73–75. — (L. 74) G6 M1 च (for तु). T1 G6 °देवानां; G6 °लोकानां (for °भूतानां). — (L. 75) G5 पूर्वस्य (for सर्वस्य). — Colophon. *Adhy. no.:* T1 G2.3.5.6 M1 47. — (L. 76) = line 39. G6 एव (for एष). — (L. 77) G2.3.6 M1 नरनारायणौ (G2 °णो) भूत्वा (G3 चक्रे; M1 चात्र) (for the prior half). M1 °संहितौ. — (L. 79) G2.6 ब्रह्मा च शक्रः सूर्यश्च; M1 ब्रह्मा च शक्रसूर्यौ च (for the prior half). G2.6 M1 धर्मश्चैव सनातनः; G3 धर्मं चैव सनातनं (for the post. half). — (L. 83) G2.6 अनेकबहुसाहस्रो (G6 °स्रैर्) (for the prior half). — (L. 85) G5 देवांश्च सप्तर्षींश्चैव; M1 देवान्सप्तर्षिभिश्चैव. — (L. 86) G2 प्रजाकरः; G6 °करं (for °पतिम्). — (L. 87) G2 यथा (for पुरा). G2.6 च (for ऽथ). G5 देवादीन् (for देवादिः). — (L. 88) G2.3 M1 °मध्यस्थे; G6 °मध्यस्थो. — (L. 89) G3.6 नष्टे (for नष्ट-). T1 °राक्षसैः. — (L. 91) G6 भगवता (for प्रभ°). M1 हत्वा (for दत्त्वा). G2.6 वरं; M1 मतिं (for वृतं). T1 G2.6 M1 परं (for वरम्). — (L. 92) G2 भूतिं; G6 भूतं (for भूमिं). G6 M1 बुद्ध्वा. G2.6 M1 तु तौ (for कृतौ). G3.5.6 पूर्वौ (for पूर्वं). G6 अजेयौ (for मृन्मयौ). — G3 om. lines 93–96. — (L. 93) G6 तौ कर्णमलसंभूतौ (for the prior half). — (L. 96) T1 दिशश्च (for दिवं). — (L. 97) T1 वायुः (for वायु-). G2.6 वायुप्रमाणौ तौ दृष्ट्वा. G2 M1 ब्रह्मा परि( M1

मृदुस्त्वयं मधुर्नाम कठिनः कैटभः स्वयम् ।
तौ दैत्यौ कृतनामानौ चेरतुर्बलगर्वितौ ।
तौ पुराथ दिवं सर्वां प्राप्तौ राजन्महासुरौ ।
प्रच्छाद्याथ दिवं सर्वां चेरतुर्मधुकैटभौ ।
सर्वमेकार्णवं लोकं योद्धुकामौ सुनिर्भयौ ।
तौ गतावसुरौ दृष्ट्वा ब्रह्मा लोकपितामहः ।
एकार्णवाम्बुनिचये तत्रैवान्तरधीयत ।
स पद्मे पद्मनाभस्य नाभिदेशात्समुत्थिते ।
आसीदादौ स्वयं जन्म तत्पङ्कजमपङ्कजम् ।
पूजयामास वसतिं ब्रह्मा लोकपितामहः ।
तावुभौ जलगर्भस्थौ नारायणचतुर्मुखौ ।
बहून्वर्षायुतानप्सु शयानौ न चकम्पतुः ।
अथ दीर्घस्य कालस्य तावुभौ मधुकैटभौ ।
आजग्मतुस्तमुद्देशं यत्र ब्रह्मा व्यवस्थितः ।
तौ दृष्ट्वा लोकनाथस्तु कोपात्संरक्तलोचनः ।
उत्पपाताथ शयनात्पद्मनाभो महाद्युतिः ।
तद्युद्धमभवद्घोरं तयोस्तस्य च वै तदा ।
एकार्णवे तदा घोरे त्रैलोक्ये जलतां गते ।
तदभूत्तुमुलं युद्धं वर्षसंघान्सहस्रशः ।
न च तावसुरौ युद्धे तदा श्रममवापतुः ।
अथ दीर्घस्य कालस्य तौ दैत्यौ युद्धदुर्मदौ ।
ऊचतुः प्रीतमनसौ देवं नारायणं प्रभुम् ।
प्रीतौ स्वस्तव युद्धेन श्लाघ्यस्त्वं मृत्युरावयोः ।
आवां जहि न यत्रोर्वी सलिलेन परिप्लुता ।
हतौ च तव पुत्रत्वं प्राप्नुयाव सुरोत्तम ।
यो ह्यावां युधि निर्जेता तस्यावां विहितौ सुतौ ।
तयोः स वचनं श्रुत्वा तदा नारायणः प्रभुः ।
तौ प्रगृह्य मृधे दैत्यौ दोर्भ्यां तौ समपीडयत् ।
ऊरुभ्यां निधनं चक्रे तावुभौ मधुकैटभौ ।
तौ हतौ चाप्लुतौ तोये वपुर्भ्यामेकतां गतौ ।
मेदो मुमुचतुर्दैत्यौ मथ्यमानौ जलोर्मिभिः ।
मेदसा तज्जलं व्याप्तं ताभ्यामन्तर्दधे तदा ।
नारायणश्च भगवानसृजद्विविधाः प्रजाः ।
दैत्ययोर्मेदसा छन्ना सर्वा राजन्वसुंधरा ।
तदा प्रभृति कौन्तेय मेदिनीति स्मृता मही ।
प्रभावात्पद्मनाभस्य शाश्वती च कृता नृणाम् ।

Colophon.

भीष्मः ।

प्रादुर्भावसहस्राणि समतीतान्यनेकशः ।
यथाशक्ति तु वक्ष्यामि शृणु तान्कुरुनन्दन ।
पुरा कमलनाभस्य स्वपतः सागराम्भसि ।
पुष्करे यत्र संभूता देवा ऋषिगणैः सह ।
एष पौष्करिको नाम प्रादुर्भावः प्रकीर्तितः ।
पुराणः कथ्यते यत्र वेदश्रुतिसमाहितः ।
वाराहस्तु श्रुतिमुखः प्रादुर्भावो महात्मनः ।
यत्र विष्णुः सुरश्रेष्ठो वाराहं रूपमास्थितः ।
उज्जहार महीं तोयात्सशैलवनकाननाम् ।
वेदपादो यूपदंष्ट्रः क्रतुदन्तश्चितीमुखः ।
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः ।
अहोरात्रेक्षणो दिव्यो वेदाङ्गः श्रुतिभूषणः ।
आज्यनासः स्रुवतुण्डः सामघोषस्वनो महान् ।
धर्मसत्यमयः श्रीमान्कर्मविक्रमसत्कृतः ।
प्रायश्चित्तमयो धीरः पशुजानुर्महावृषः ।
उद्गातृहोमलिङ्गोऽसौ पशुबीजमहौषधिः ।

°र्यै)मृशच्छनैः; $G_6$ ब्रह्मापदयच्छनैस्तदा. — (L. 98) $G_3$ बुध्वा (for the first विद्धि). $G_2$ कनिष्ठं (for कठिनं). $G_3$ बुध्य (for the second विद्धि). — $G_3$ om. lines 99–101. — (L. 99) $M_1$ [इ]ति (for तु). $G_3$ ततश्चक्रे. $T_1$ सविळः; $G_3$ सविनुः; $G_6$ सविना (for स विभुः). — (L. 100) $G_{3.5}$ $M_1$ त्वयं (for स्वयं). — (L. 102) $G_{2.3}$ सर्व. $M_1$ व्याप्तौ (for प्राप्तौ). — (L. 103) $G_{2.5.6}$ $M_1$ प्रशास्य (for प्रच्छाद्य). $G_{2.3}$ सर्वं; $G_6$ सर्वें (for सर्वां). — (L. 104) $T_1$ $G_3$ सुनिश्चयौ; $G_6$ सनिर्भयौ. — (L. 106) $G_2$ एकवर्णाबुनिचये. — (L. 107) $G_6$ पश्चात् (for पद्मे), and समुत्थितः (for °ते). — (L. 108) $M_1$ (*sup. lin.*) स्वकं (for स्वयं). — (L. 109) $M_1$ रोचया° (for पूजया°). — (L. 113) $G_{2.6}$ तदुद्देशं; $G_5$ तमादेशं. $G_3$ [अ]व्ययस्थितः (for व्यव°). — (L. 114) $G_{2.3}$ रोषात्; $G_6$ $M_1$ रोष- (for कोपात्). — (L. 115) $G_{2.5}$ उत्पपाताशु; $G_3$ स उत्पपात; $G_6$ उत्पपातानु- (for °पाताथ). — (L. 116) $G_6$ तत्र (for तस्य), and यौ (for वै). — (L. 117) $G_{2.6}$ महा- (for तदा). — (L. 118) $T_1$ $G_{2.3}$ नदाभूत्. $T_1$ $G_{2.3.6}$ वर्षसंख्याः (for °संघान्). — (L. 119) $G_2$ यौ (for न). — (L. 120) $G_{2.3}$ गतौ (for दैत्यौ). — (L. 121) $G_2$ प्रति (for प्रभुम्). — (L. 122) $T_1$ $G_{2.3}$ आवयोः (for आहवे). — (L. 124) $T_1$ $G_{2.3}$ प्राप्नुयावः. — (L. 126) $G_{2.5.6}$ तु (for स). — (L. 127) $G_5$ प्रहृत्य (for प्रगृह्य). $G_3$ न; $M_1$ तु (for तौ). — (L. 128) $M_1$ निहितौ (for निधनं). — (L. 129) $G_2$ चासुरौ; $G_3$ चाप्सु तौ (for चाप्लुतौ). — (L. 130) $G_{2.5.6}$ मज्ज° (for मथ्य°). — (L. 131) $T_1$ $G_5$ °मंतर्जले (for °मन्तर्दधे). — (L. 132) $G_5$ पराः (for प्रजाः). — Colophon. *Adhy. no.*: $T_1$ $G_{2.3.5.6}$ $M_1$ 48. — Lines 138–169 = (var.) Hari 1. 41. 26–39; cf. v.l. below on line 145 also. — (L. 139) $T_1$ $G_2$ सर्षिगणाः; $G_{3.5}$ $M_1$ चर्षिगणैः ($G_3$ °णाः). — (L. 142) $G_3$ वराहस्तु. $T_1$ $G_{2.5}$ $M_1$ श्रुतिसुखः. — Lines 145–157 = (var.) Hari. 3. 34. 34[c]–41[b]. — (L. 147) $G_6$ अहोरात्रेक्षणे दिव्ये. — (L. 150) $G_{2.3}$ °मुखो; $M_1$ °नखो (for °मयो). $G_3$ °जातु- (for

ब्रह्मलोकं सुरा जग्मुः सर्वे शक्रपुरोगमाः ।
पितामहं समासाद्य खिन्नाः प्राञ्जलयोऽब्रुवन् ।
देवाः ।
भगवन्भूतभव्येश नस्त्रायस्व इहागतान् ।
भयं दितिसुताद्धोरं भवत्यद्य दिवानिशम् ।
भगवन्सर्वभूतानां स्वयंभूरादिकृद्विभुः ।
स्रष्टा त्वं हव्यकव्यानामव्यक्तः प्रकृतिर्ध्रुवः ।
ब्रह्मा ।
श्रूयतामापदेवं हि दुर्विज्ञेयं मयापि च ।
नारायणस्तु पुरुषो विश्वरूपो महाद्युतिः ।
अव्यक्तः सर्वभूतानामचिन्त्यो विभुरव्ययः ।
ममापि स तु युष्माकं व्यसने परमा गतिः ।
नारायणः परोऽव्यक्तादहमव्यक्तसंभवः ।
मत्तो जज्ञुः प्रजा लोकाः सर्वे देवासुराश्च ते ।
देवा यथाहं युष्माकं तथा नारायणो मम ।
पितामहोऽहं सर्वस्य स विष्णुः प्रपितामहः ।
निश्चितं विबुधा दैत्यं स विष्णुस्तं हनिष्यति ।
तस्य नास्ति ह्यशक्यं च तस्माद्व्रजत माचिरम् ।
भीष्मः ।
पितामहवचः श्रुत्वा सर्वे ते भरतर्षभ ।
विबुधा ब्रह्मणा सार्धं जग्मुः क्षीरोदधिं प्रति ।
आदित्या वसवः साध्या विश्वे च मरुतस्तथा ।
रुद्रा महर्षयश्चैव अश्विनौ च सुरूपिणौ ।
अन्ये च दिव्या ये राजंस्ते सर्वे सगणाः सुराः ।
चतुर्मुखं पुरस्कृत्य श्वेतद्वीपमुपस्थिताः ।
गत्वा क्षीरसमुद्रे तं शाश्वतीं परमां गतिम् ।
अनन्तशयनं देवमनन्तं दीप्ततेजसम् ।
शरण्यं त्रिदशा विष्णुमुपतस्थुः सनातनम् ।
देवं ब्रह्ममयं यज्ञं ब्रह्मदेवं महाबलम् ।
भूतं भव्यं भविष्यच्च प्रभुं लोकनमस्कृतम् ।
नारायणं विभुं देवं शरण्यं शरणं गताः ।
देवाः ।
त्रायस्व नोऽद्य देवेश हिरण्यकशिपोर्वधात् ।
त्वं हि नः परमो धाता ब्रह्मादीनां सुरोत्तम ।
उत्फुल्लामलपत्राक्ष शत्रुपक्षभयंकर ।
क्षयाय दितिवंशस्य शरणं त्वं भविष्यसि ।
भीष्मः ।
देवानां वचनं श्रुत्वा तदा विष्णुः शुचिश्रवाः ।
अदृश्यः सर्वभूतानां वक्तुमेवोपचक्रमे ।
विष्णुः ।
भयं त्यजध्वममरा अभयं वो ददाम्यहम् ।
तदेवं त्रिदिवं देवाः प्रतिपद्यत माचिरम् ।
एषोऽहं सगणं दैत्यं वरदानेन दर्पितम् ।
अवध्यममरेन्द्राणां दानवेन्द्रं निहन्म्यहम् ।
ब्रह्मा ।
भगवन्भूतभव्येश खिन्ना ह्येते भृशं सुराः ।
तस्मात्त्वं जहि दैत्येन्द्रं क्षिप्रं कालोऽस्य मा चिरम् ।
विष्णुः ।
क्षिप्रं देवाः करिष्यामि त्वरया दैत्यनाशनम् ।
तस्मात्त्वं विबुधाश्चैव प्रतिपद्यत वै दिवम् ।
भीष्मः ।
एवमुक्त्वा तु भगवान्विसृज्य त्रिदिवेश्वरान् ।

$M_1$ च (for स:). — (L. 243) $G_3$ transp. जग्मुः and सर्वे. — (L. 245) $G_3$ देव्यः (for देवाः). — (L. 246) $M_1$ घोराद् (for घोरं), and अत्र (for अद्य). — (L. 247) $T_1$ भगवान्. $G_{2.5.6}$ सर्वदैत्यानां. — Lines 247–248 = (var.) lines 208–209. — (L. 248) $T_1$ $G_{3.5}$ अव्यक्त- (for °क्तः). $G_{2.6}$ ध्रुवं. — (L. 249) $G_6$ om. the ref. $T_1$ $G_3$ अपरं दैवैर्; $G_{2.3}$ $M_1$ परमं दैवं ($G_3$ दैवैर्; $M_1$ देवं) (for आपदेवं हि). $G_6$ दुर्विज्ञेया. — (L. 252) $T_1$ $G_3$ तु स (by transp.). — (L. 253) $G_2$ [ऽ]व्यक्तः अहम्; $G_3$ [ऽ]व्यक्तोप्यहम् (for ऽव्यक्तादहम्). — (L. 254) $T_1$ जाताः (for जज्ञुः). $G_3$ सर्वा; $M_1$ सर्वे (for सर्व-). $G_2$ सुराश्चैवासुराश्च ते. — (L. 255) $G_3$ $M_1$ देवो (for देवा). — (L. 257) $T_1$ $G_3$ निश्चयं (for निश्चितं). $G_5$ संहरिष्यति (for तं हनि°). — (L. 258) $G_{3.6}$ $M_1$ न शक्यं (for ह्य°). — (L. 259) $G_{2.3}$ om. the ref. — (L. 260) $T_1$ ब्रह्मणः; $G_6$ ब्राह्मणा; $M_1$ ब्रह्मणः. — (L. 261) $T_1$ transp. वसवः and मरुतः. $G_3$ स- (for च). $G_{2.5}$ वसवः (for मरुतः). — (L. 263) $G_{2.6}$ देवा (for दिव्या). — (L. 264) $G_{2.5.6}$ °मुपागताः (for °मुपस्थिताः). — (L. 265) $G_6$ क्षीरसमुद्रं तु. $G_{2.6}$ $M_1$ शाश्वतं. — (L. 266) $G_{2.6}$ अदीनं (for अनन्तं). — Lines 267–280 = (var.) Hari. 1. 41. $69^{cd}$–$74^{cd}$. — (L. 268) $M_1$ देवा. $G_{2.6}$ ब्रह्मेंद्रेशं (for ब्रह्मदेवं). — (L. 269) $G_3$ भविष्यं च. $G_2$ भूतभव्यभविष्यं च. — (L. 271) $G_6$ om. the ref. — (L. 273) $G_{2.6}$ त्वं फुल्लांबुजपत्राक्ष; $M_1$ उत्फुल्लामलपद्माक्ष. — (L. 274) $T_1$ $G_6$ शरण्यस्; $G_3$ °ण्यं. $T_1$ $G_3$ भवास्य नः. — (L. 275) $G_2$ om. the ref. $G_{2.5.6}$ तद्देवानां वचः श्रुत्वा. — (L. 276) $G_{2.5.6}$ सर्वभूतात्मा. — (L. 277) $G_5$ भगवानुवाच (for विष्णुः). — $G_5$ om. lines 278–280. — (L. 278) $G_6$ तद्दैव. — (L. 280) $M_1$ तं (for [अ]हम्). — (L. 281) $G_{2.6}$ om. the ref. $T_1$ $G_{2.5.6}$ देवदेवेश (for भूतभव्येश). $T_1$ एते (for ह्येते). — (L. 282) $M_1$ तं (for त्वं). — (L. 283) $T_1$ $G_5$ $M_1$ श्रीभगवान् (for विष्णुः). $G_2$ एव (for देवाः). — (L. 284) $G_3$ माचिरं (for वै दिवम्). — Lines 285–287 = (var.) Hari. 1. 41. $75^{ab}$, 76. — (L. 285) $G_2$ om. the ref. $T_1$ स (for तु). $T_1$

नरस्यार्धतनुं कृत्वा सिंहस्यार्धतनुं तथा ।
नारसिंहेन वपुषा पाणिं निष्पिष्य पाणिना ।
भीमरूपो महातेजा व्यादितास्य इवान्तकः ।
हिरण्यकशिपुं राजञ्जगाम हरिरीश्वरः ।
दैत्यास्तमागतं दृष्ट्वा नारसिंहं महाबलम् ।
ववर्षुः शस्त्रवर्षैस्ते सुसंक्रुद्धास्तदा हरिम् ।
तैर्विसृष्टानि शस्त्राणि भक्षयामास वै हरिः ।
जघान च रणे दैत्यान्सहस्राणि बहून्यपि ।
तान्निहत्य च दैत्येन्द्रान्सर्वान्क्रुद्धान्महाबलान् ।
अभ्यधावत्सुसंक्रुद्धो दैत्येन्द्रं बलगर्वितम् ।
जीमूतघनसंकाशो जीमूतघननिस्वनः ।
जीमूत इव दीप्तौजा जीमूत इव वेगवान् ।
देवारिर्दितिजो दुष्टो नृसिंहं समुपाद्रवत् ।
दैत्यं सोऽतिबलं दृष्ट्वा क्रुद्धशार्दूलविक्रमम् ।
दृप्तैर्दैत्यगणैर्गुप्तं खरैर्नखमुखैरुत ।
ततः कृत्वा तु युद्धं वै तेन दैत्येन वै हरिः ।
संध्याकाले महातेजा भवनान्ते त्वरान्वितः ।
ऊरौ निधाय दैत्येन्द्रं निर्बिभेद नखैर्हि तम् ।
महाबलं महावीर्यं वरदानेन दर्पितम् ।
दैत्यश्रेष्ठं सुरश्रेष्ठो जघान तरसा हरिः ।
हिरण्यकशिपुं हत्वा सर्वान्दैत्यांश्च वै तदा ।
विबुधानां प्रजानां च हितं कृत्वा महाद्युतिः ।
प्रमुमोद हरिर्देवः प्राप्य धर्मं तदा भुवि ।
एष ते नारसिंहोऽत्र कथितः पाण्डुनन्दन ।
शृणु त्वं वामनं नाम प्रादुर्भावं महात्मनः ।

Colophon.

भीष्मः ।

पुरा त्रेतायुगे राजन्बलिर्वैरोचनोऽभवत् ।
दैत्यानां पार्थिवो वीरो बलेनाप्रतिमो बली ।
तदा बलिर्महाराज दैत्यसंघैः समावृतः ।
विजित्य तरसा शक्रमिन्द्रस्थानमवाप सः ।
तेन वित्रासिता देवा बलिनाखण्डलादयः ।
ब्रह्माणं वै पुरस्कृत्य गत्वा क्षीरोदधिं तदा ।
तुष्टुवुः सहिताः सर्वे देवं नारायणं प्रभुम् ।
तेषां प्रसादं चक्रेऽथ विबुधानां हरिस्तदा ।
प्रसादजं तस्य विभोरदित्यां जन्म उच्यते ।
अदितेरपि पुत्रत्वमेत्य यादवनन्दनः ।
एष विष्णुरिति ख्यात इन्द्रस्यावरजोऽभवत् ।
तस्मिन्नेव तु काले तु दैत्येन्द्रो वीर्यवान्बली ।
अश्वमेधं क्रतुश्रेष्ठमाहर्तुमुपचक्रमे ।
वर्तमाने तदा यज्ञे दैत्येन्द्रस्य युधिष्ठिर ।
स विष्णुर्वामनो भूत्वा प्रच्छन्नो ब्रह्मवेषधृक् ।
मुण्डो यज्ञोपवीती च कृष्णाजिनधरः शिखी ।
पलाशदण्डं संगृह्य वामनोऽद्भुतदर्शनः ।
प्रविश्य स बलेर्यज्ञे वर्तमाने तु दक्षिणाम् ।
देहीत्युवाच दैत्येन्द्रं विक्रमांस्त्रीन्ममैव ह ।
दीयतां त्रिपदीमात्रमित्ययाचन्महासुरम् ।
स तथेति प्रतिश्रुत्य प्रददौ विष्णवे तदा ।
तेन लब्ध्वा हरिर्भूमिं जृम्भयामास वै भृशम् ।
स शिशुः सदिवं खं च पृथिवीं च विशां पते ।
त्रिभिर्विक्रमणैरेतत्सर्वमाक्रमताभिभूः ।
बलेर्बलवतो यज्ञे बलिना विष्णुना पुरा ।
विक्रमैस्त्रिभिरक्षोभ्याः क्षोभितास्ते महासुराः ।
विप्रचित्तिमुखाः क्रुद्धा दैत्यसंघा महाबलाः ।
नानावक्त्रा महाकाया नानावेषधरा नृप ।

G2.3.6 त्रिदशेश्वरान्. — (L. 286) T1 [अ]र्धं (for [अ]र्ध-). M1 नरस्य कृत्वार्धतनुं. G2.3.6 पुनः (for तथा). — (L. 287) G3.6 M1 संस्पृश्य (for निष्पिष्य). — (L. 291) G2 शस्त्रवर्षांस्ते; G3.5.6 शरवर्षैस्ते. — (L. 292) G6 तैः सृष्टसर्वशस्त्राणि. G3 पूज° (for भक्ष°). — (L. 293) T1 G2.5 रणैर्. G6 च (for [अ]पि). — (L. 294) G2.5.6 [ए]व (for च). G2.5.6 M1 दैतेयान् (for दैत्येन्द्रान्). G2 सर्व- (for सर्वान्). — Lines 296–300 = (var.) Hari. 1. 41. 77–78. — G2.6 M1 om. line 298. — (L. 299) G2.6 M1 दृप्तं (for दृष्ट्वा), and दृ(G2 दी)प्त° (for क्रुद्ध°). — (L. 300) G3 दृप्तं (for गुप्तं). T1 G6 करैर् (for खरैर्). M1 तथा (for उत). — (L. 301) T1 G2.5 नदन् (for तेन). — (L. 302) G5 प्रधाणे च (for भवनान्ते). — (L. 303) G2.6 तदा; M1 तथा (for हि तम्). — (L. 304) G6 गर्वितं (for दर्पितम्). — (L. 308) T1 स्थाप्य; G3 M1 व्याप्य (for प्राप्य). G2 विभुः (for भुवि). — Colophon. *Adhy. no.:* T1 G2.3.5.6 M1 50. — (L. 313) G5 दैत्यसंघैः (for महाराज), and घोररूपैः (for दैत्यसंघैः). — (L. 317) G6 विभुं (for प्रभुम्). — (L. 318) G2.6 स तेषां दर्शनं चक्रे (for the prior half). T1 M1 ततः; G5 स्तुतः (for तदा). — (L. 319) G5 M1 ह्यस्य (for तस्य). G2 आदित्यां; G3 अदित्या; G5 अदित्याज्. — (L. 321) G3 M1 इंद्राद् (for इन्द्रस्य). G6 स इंद्रावरजो विभुः. — (L. 322) G2 च (for the first तु). G3 स (for the second तु). M1 एतस्मिन्नेव काले तु. G6 बलवीर्यवान् (for वीर्यवान्बली). — (L. 324) T1 G2.5 महा- (for तदा). — (L. 325) G2.6 M1 (*sup. lin.*) °संवृतः (for °वेषधृक्). — (L. 326) G6 मुंडी. — (L. 327) G5 पालाशदंडं. G2 संहृत्य; G5 संग्राह्य. — (L. 329) G2 विक्रमं त्रीणि वै मम; G5 °मांस्त्रीन्भुवो मम; G6 °मांस्त्रीणि वै मम. — (L. 330) G2 त्रिपदा° (for त्रिपदी°). T1 इत्युवाच; G2 इत्ययाच; G6 इत्ययाचन् (for इत्ययोचन्). — (L. 331) G6 तथा (for तदा). — (L. 332) G2.5 M1 ततो (for तेन). — (L. 333) G6 च (for स-). — (L. 334) G6 °क्रमनादिभूः. — Lines 335–336 =

नानाप्रहरणा रौद्रा नानामाल्यानुलेपनाः ।
स्वान्यायुधानि संगृह्य प्रदीप्ता इव तेजसा ।
क्रममाणं हरिं तस्य उपावर्तन्त भारत ।
प्रमथ्य सर्वान्दैतेयान्पादहस्ततलैस्तु तान् ।
रूपं कृत्वा महाभीमं जहाराशु स मेदिनीम् ।
संप्राप्य दिवमाकाशमादित्यसदने स्थितः ।
अत्यरोचत भूतात्मा भास्करं स्वेन तेजसा ।
प्रकाशयन्दिशः सर्वाः प्रदिशश्च महाबलः ।
शुशुभे स महाबाहुः सर्वलोकान्प्रकाशयन् ।
तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे ।
नभः प्रक्रममाणस्य नाभ्यां किल तदा स्थितौ ।
परमाक्रममाणस्य जानुभ्यां तौ व्यवस्थितौ ।
विष्णोरमितवीर्यस्य वदन्त्येवं द्विजातयः ।
अथासाद्य कपालं स अण्डस्य तु युधिष्ठिर ।
तच्छिद्रात्स्यन्दिनी तस्य पादात्क्रष्टाथ निम्नगा ।
ससार सागरं साशु पावनी सागरंगमा ।
जहार मेदिनीं सर्वां हत्वा दानवपुंगवान् ।
आसुरीं श्रियमाहृत्य त्रीँल्लोकान्स जनार्दनः ।
सपुत्रदारानसुरान्पाताले विन्यपातयत् ।
नमुचिः शम्बरश्चैव प्रह्लादश्च महामनाः ।
पादपाताभिनिर्धूताः पाताले विनिपातिताः ।
महाभूतानि भूतात्मा सविशेषाणि वै हरिः ।
कालं च सकलं राजन्गात्रभूतान्यदर्शयत् ।
तस्य गात्रे जगत्सर्वमानीतमिव दृश्यते ।
न किंचिदस्ति लोकेषु यदनाप्तं महात्मना ।
तद्धि रूपमुपेन्द्रस्य देवदानवमानवाः ।
दृष्ट्वा तं मुमुहुः सर्वे विष्णुतेजोभिपीडिताः ।
बलिर्बद्धोऽभिमानी च यज्ञवाटे महात्मना ।
विरोचनकुलं सर्वं पाताले विनिपातितम् ।
एवंविधानि कर्माणि कृत्वा गरुडवाहनः ।
न विस्मयमुपागच्छत्पारमेष्ठ्येन तेजसा ।
स सर्वममरैश्वर्यं संप्रदाय शचीपतेः ।
त्रैलोक्यं च ददौ शक्रे विष्णुर्दानवसूदनः ।
एष ते वामनो नाम प्रादुर्भावो महात्मनः ।
वेदविद्भिर्द्विजैरेतत्कथ्यते वैष्णवं यशः ।
मानुषेषु यथा विष्णोः प्रादुर्भावं तथा शृणु ।

Colophon.

भीष्मः ।

विष्णोः पुनर्महाराज प्रादुर्भावो महात्मनः ।
दत्तात्रेय इति ख्यात ऋषिरासीन्महायशाः ।
तेन नष्टेषु वेदेषु क्रियासु च मखेषु च ।
चातुर्वर्ण्ये च संकीर्णे धर्मे शिथिलतां गते ।
अभिवर्धति चाधर्मे सत्ये नष्टे स्थितेऽनृते ।
प्रजासु क्षीयमाणासु धर्मे चाकुलतां गते ।
सयज्ञाः सक्रिया वेदाः प्रत्यानीताश्च तेन वै ।
चातुर्वर्ण्यमसंकीर्णं कृतं तेन महात्मना ।
स एष वै यदा प्रादाद्धैहयाधिपतेर्वरम् ।

Hari. 1. 41. 80. — (L. 337) G2.6 M1 सर्व° (for दैत्य°). G2.6 °सुराः (for °बलाः). — Lines 339–343 =(var.) Hari. 1. 41. 97cd–99ab. — (L. 342) G3 सर्व- (for सर्वान्). — (L. 343) M1 च (for स). — (L. 344) T1 पदम्; G5 पादम् (for दिवम्). — (L. 345) G6 अभ्यरोचत. G2.6 भास्करस्येव तेजसा. — (L. 346) G2.6 M1 (*sup. lin.* as above) °यशाः (for °बलः). — (L. 347) G3 सर्वान् (for सर्व-). — Lines 348–351 =(var.) Hari. 1. 41. 100–101. — (L. 349) M1 (*sup. lin.* as above) ततः (for नभः). T1 G3 om. (hapl.) the post. half of line 349 and the prior half of line 350. G6 नाभ्यामासीत्तदा विभोः (for the post. half). — (L. 350) G3 दिवम् (for परम्). G3 जानुनोः किल तौ स्थितौ; G5 जानुभ्यां पर्वतौ स्थितौ. — (L. 353) G3 स्यंदती (for स्यन्दिनी), and च (for [अ]थ). — (L. 355) G5 सर्वान् (for सर्वां). — (L. 357) G2 संनिवेशयत्; G5 न्यपातयत्; G6 संन्यवेशयत्; M1 विनिपातयत् (for विन्य°). — (L. 359) G3 M1 पादवाताभिनिर्धूताः; G6 °वातविनि°. G2 °वेशिताः (for °पातिताः). — (L. 360) G5 स विशेषेण; M1 सर्वशेषाणि. — (L. 361) G6 °भूतान्प्रद°. — (L. 362) T1 अभिदृश्यते; G2.6 अभिया(G2 °पा)स्यति; G3 M1 अथ (M1 °धि-) पश्यति (for इव दृश्यते). — (L. 363) M1 यदव्याप्तं. — (L. 364) T1 महेंद्रस्य; G5 महेशस्य (for उपेन्द्रस्य). — (L. 365) G6 तं दृष्ट्वा (by transp.). T1 च; G2 तु; G3 M1 सं- (for तं). G2 तं मुहुः (for मुमुहुः). G6 विष्णुना हि प्रपीडिताः. — (L. 367) G2 वैरो° (for विरो°). G2.3.6 वि(G6 वै)निवेशितं (for विनिपातितम्). — (L. 370) G2.6 असुरैश्वर्यं (for अमरै°). — (L. 371) G2.6 वज्रे चक्रे (for ददौ शक्रे). — Lines 372–373 =(var.) Hari. 1. 41. 103. — (L. 374) G2.3 M1 तथा; G6 ततो (for यथा). G3 विष्णुप्रादुर्भावस् (for °र्भावं). G2.6 महात्मनः; M1 अतः शृणु (for तथा शृणु). — Colophon. *Adhy. no.*: T1 G2.3.5.6 M1 51. — Lines 375–382 =(var.) Hari. 1. 41. 104–107. — (L. 377) M1 (*sup. lin.*) सक्रियेषु (for क्रियासु च). G2 महेषु (for मखेषु). — (L. 378) G6 [ऽ]थ (for च). — T1 om. (hapl.) lines 379–380. — (L. 379) G3 वाधर्मे and नष्टस्थिते. G2 कृते; G5 नृपे (for ऽनृते). — (L. 380) G2.6 चामूलतां (for चाकु°). — (L. 381) T1 सत्क्रिया; G3 सत्कृता (for सक्रिया). G3 देवाः; G5 देशाः (for वेदाः). G5 प्रीत्या° (for प्रत्या°). G2.5.6 M1 हि (for च). — (L. 383) G5 एव (for एष), and सुतं (for वरम्). — (L. 384) G2.5.6 स (for तं).

तं हैहयानामधिपस्त्वर्जुनोऽभिप्रसादयन् ।
वने पर्यचरत्सम्यक्शुश्रूषुरनसूयकः ।
निर्ममो निरहंकारो दीर्घकालमतोषयत् ।
आराध्य दत्तात्रेयं हि अगृह्णात्स वरानिमान् ।
आप्ताद्आप्ततराद्विप्राद्विद्वान्विद्वन्निषेवितान् ।
ऋतेऽमरत्वाद्विप्रेण दत्तात्रेयेण धीमता ।
वरैश्चतुर्भिः प्रवृत इमांस्तत्राभ्यनन्दत ।
श्रीमान्मनस्वी बलवान्सत्यवागनसूयकः ।
सहस्रबाहुर्भूयासमेष मे प्रथमो वरः ।
जरायुजाण्डजं सर्वं सर्वं चैव चराचरम् ।
प्रशास्तुमिच्छे धर्मेण द्वितीयस्त्वेष मे वरः ।
पितॄन्देवानृषीन्विप्रान्यजेयं विपुलैर्मखैः ।
अमित्रान्निशितैर्बाणैर्घातयेयं रणाजिरे ।
दत्तात्रेयेह भगवंस्तृतीयो वर एष मे ।
यस्य नासीन्न भविता न चास्ति सदृशः पुमान् ।
इह वा दिवि वा लोके स मे हन्ता भवेदिति ।
सोऽर्जुनः कृतवीर्यस्य वरः पुत्रोऽभवद्युधि ।
स सहस्रं सहस्राणां माहिष्मत्यामवर्धत ।
स भूमिमखिलां जित्वा द्वीपांश्चापि समुद्रिणः ।
नभसीव ज्वलन्सूर्यः पुण्यैः कर्मभिरर्जुनः ।
इन्द्रद्वीपं कशेरुं च ताम्रद्वीपं गभस्तिमत् ।
गान्धर्वं वारुणं द्वीपं सौम्यार्षमिति च प्रभुः ।
पूर्वैरजितपूर्वांश्च द्वीपानजयदर्जुनः ।
सौवर्णं सर्वमप्यासीद्विमानवरमुत्तमम् ।
चतुर्धा व्यभजद्राष्ट्रं तद्विभज्यान्वपालयत् ।
एकांशेनाहरत्सेनामेकांशेनावसद्गृहान् ।
यस्तु तस्य तृतीयांशो राजासीज्जनसंग्रहे ।
आप्तः परमकल्याणस्तेन यज्ञानकल्पयत् ।
ये दस्यवो ग्रामचरा अरण्ये च वसन्ति ये ।
चतुर्थेन च सोंऽशेन तान्सर्वान्प्रत्यषेधयत् ।
सर्वेभ्यश्चान्तवासिभ्यः कार्तवीर्योऽहरद्बलिम् ।
आहृतं स्वबलैर्यत्तदर्जुनस्तावमन्यते ।
काको वा मूषिको वापि तं तमेव न्यबर्हयत् ।
द्वाराणि नापिधीयन्ते राष्ट्रेषु नगरेषु च ।
स एव राष्ट्रपालोऽभूत्स्त्रीपालोऽभवदर्जुनः ।
स एवासीदजापालः स गोपालो विशां पते ।
सर्वाण्येव मनुष्याणां राजा क्षेत्राणि रक्षति ।
इदं तु कार्तवीर्यस्य बभूवासदृशं जनैः ।
न पूर्वे नापरे तस्य गमिष्यन्ति गतिं नृपाः ।
यदर्णवे प्रयातस्य वस्त्रं न परिषिच्यते ।

G2 ह्यर्जुनो; G6 अर्जुनो (for त्वर्जुनो). G2.5.6 M1 [ऽ]पि (for ऽभि-). — (L. 387) G5.6 सोगृह्णात् (for अगृ°). G6 च (for स). — (L. 388) G5 M1 आप्तान् (for आप्ताद्). G2 आप्ततरान् (for °राद्). T1 G2.6 विप्रान् (for विप्राद्). G3 M1 (*sup. lin.*) °न्निषेविनात्; G5 °न्विशेषतः. — (L. 390) G2 प्रावृत्त; G3 प्रवृता. T1 इमां स तत्र नंदत. — (L. 391) G2 इमान् (for श्रीमान्). — (L. 394) T1 G2 इच्छेद् (for इच्छे). G5 [अ]प्येष (for त्वेष). — (L. 396) G2.3.5.6 च शितैर् (for निशितैर्). — G2.3.5.6 om. the post. half of line 396 and the prior half of line 397. M1 पान्येयं (for घात°). — (L. 397) M1 [अ]त्र (for [इ]ह). — (L. 398) G5 तस्य नास्ति (for यस्य नासीन्). G6 चास्य (for चास्ति). — (L. 399) G6 भूपालो (for वा लोके). G5 भविष्यति (for भवेदिति). — (L. 400) Before line 400, T1 M1 ins. वैशंपायनः. T1 G3.5 वरं; G6 वर-. T1 M1 महाबलः; G2 भवेद्युधि; G3 महाद्युति; G5 भवेदिति (for ऽभवद्युधि). — (L. 401) M1 यः (for स). G5 शतं वर्ष- (for स सहस्रं). — (L. 402) T1 पृथिवी° (for स भूमि°). G6 विप्रांश्चापि; M1 द्वीपांश्चैव. M1 समुद्रगाः (for °द्रिणः). — (L. 403) G6 अच्युतः (for अर्जुनः). — (L. 404) Before line 404, G6 ins. अर्जुनः. G2 कुशेरुं च; G6 विशे कृत्वा. G2 ताम्रपर्णी; G6 काशद्वीपं (for ताम्र°). T1 G2.3 गभस्तिमान्; G5 समृद्धिमान्. — (L. 405) G2.6 गंधर्ववरुणद्वीपं. G2 सौमाय इति म प्रभुः; G5.6 सौम्यमार्षमि(G6 इ)ति प्रभुः. — G5 om. lines 406–408. — (L. 406) G2 पूर्वैराजित°; G5 सर्वैरजित°. — (L. 409) G3 °नावसन्; M1 (*sup. lin.* as above) °नाभरन् (for °नाहरन्). M1 °नाहरद् (for °नावसद्). — (L. 410) G5 पश्यनस्तु (for यस्तु तस्य). G2 तृतीयोभूद्. G2 राज्ञो यजनसंग्रहे; G5.6 राज्ञोभूज्जन°. — (L. 413) Om. in G2. — (L. 414) T1 बलि; G2 वनं; M1 बली (for बलिम्). — (L. 415) G3 repeats line 415. T1 G3 शासनं; G2 आहृतैः; G6 आहूतैः (for आहृतं). T1 G5 यत्नाद्; G2 यज्ञाद्; G3 युक्तन्; M1 वित्तम् (for यत्तद्). G2 [अ]वमन्य ते; M1 (*sup. lin.*) [अ]भिमन्यते (for [अ]व°). — (L. 416) G2 [अ]थं; G6 यत् (for [अ]पि). G2 निबर्हयत्. G3 तन्नमेवान्वबर्हयत्; G5 यत्तदा तदभक्षयत्. — (L. 417) G2 नास्य सीदंतः; G5 नापि धीयंत; G6 नाप्यदीयत. G2.5.6 पुरेषु (for राष्ट्रेषु). — (L. 418) G2 एष; G6 एवं (for एव). T1 श्रीपालो. — (L. 419) G5 स एवाभूद्राजपालः. G6 गोपालो वा (for स गोपालो). — (L. 420) T1 स सारण्ये; G3 M1 सर्वारण्ये (for सर्वाण्येव). G5 राज्ञां (for राजा). G6 कृष्यति (for रक्षति). — (L. 421) G5.6 च (for तु). T1 गणैः (for जनैः). — (L. 422) G2.5.6 यस्य (for तस्य). — (L. 423) G5 यदर्णवमपीतस्य; M1 (*inf. lin.* as above) अर्णवेन प्रयातस्य. M1 वस्त्रेण परिषिच्यते (*inf. lin.* वस्त्रा न परिकृष्यते). — (L. 424) M1 शत- (for शतं). G2

शतं वर्षसहस्राणामनुशिष्यार्जुनो महीम् ।
दत्तात्रेयप्रसादेन एवं राज्यं चकार सः ।
एवं बहूनि कर्माणि चक्रे लोकहिताय सः ।
दत्तात्रेय इति ख्यातः प्रादुर्भावस्तु वैष्णवः ।
कथितो भरतश्रेष्ठ शृणु भूयो महात्मनः ।

Colophon.

भीष्मः ।

यदा भृगुकुले जन्म यदर्थं च महात्मनः ।
जामदग्न्य इति ख्यातः प्रादुर्भावस्तु वैष्णवः ।
जमदग्नेः सुतो राजन्रामो नाम स वीर्यवान् ।
हैहयान्तकरो राजन्स रामो बलिनां वरः ।
कार्तवीर्यो महावीर्यो बलेनाप्रतिमस्तथा ।
रामेण जामदग्न्येन हतो विषममाचरन् ।
तं कार्तवीर्यं राजानं हैहयानामरिंदमम् ।
रथस्थं पार्थिवं रामः पातयित्वावधीद्रणे ।
जम्भस्य यज्ञहन्ता स ऋत्विजं चैव संस्तरे ।
जम्भस्य मूर्ध्नि भेत्ता च हन्ता च शतदुन्दुभेः ।
स एष कृष्णो गोविन्दो जातो भृगुषु वीर्यवान् ।
सहस्रबाहुमुद्धर्तुं सहस्रजितमाहवे ।
क्षत्रियाणां चतुःषष्टिमयुतानि महायशाः ।
सरस्वत्यां समेतानि एष वै धनुषाजयत् ।
ब्रह्मद्विषां वधे तस्मिन्सहस्राणि चतुर्दश ।
पुनर्जग्राह शूराणामन्तं चक्रे नरर्षभः ।
ततो दशसहस्रस्य भङ्क्त्वा पूर्वमरिंदमः ।
सहस्रं मुसलेनाघ्नन्सहस्रमुदकृन्तत ।
चतुर्दश सहस्राणि कणधूममपाययत् ।
शिष्टान्ब्रह्मद्विषो जित्वा ततोऽस्नायत भार्गवः ।
राम रामेत्यभिक्रुष्टो ब्राह्मणैः क्षत्रियार्दितैः ।
न्यघ्नद्दश सहस्राणि रामः परशुनाभिभूः ।
न ह्यमृष्यत तां वाचमार्तैर्भृशमुदीरिताम् ।
भृगो रामाभिधावेति यदाक्रन्दन्द्विजातयः ।
काश्मीरान्दरदान्कुन्तीन्क्षुद्रकान्मालवाञ्शकान् ।
चेदिकाशिकरूशांश्च ऋषीकान्क्रथकैशिकान् ।
अङ्गान्वङ्गान्कलिङ्गांश्च मागधान्काशिकोसलान् ।
रात्रायणान्वीतिहोत्रान्किरातान्मार्तिकावतान् ।
एतानन्यांश्च राजेन्द्रान्देशे देशे सहस्रशः ।
निकृत्य निशितैर्बाणैः संप्रदाय विवस्वते ।
कीर्णा क्षत्रियकोटीभिर्मेरुमन्दरभूषणा ।
त्रिःसप्तकृत्वः पृथिवी तेन निःक्षत्रिया कृता ।
कृत्वा निःक्षत्रियां चैव भार्गवः स महायशाः ।
इन्द्रगोपकवर्णस्य जीवंजीवनिभस्य च ।
पूरयामास सरितः क्षतजस्य सरांसि च ।

अनुशिष्येर्जुनोमही; $G_6$ अधिशिष्यार्जुनो महत्. — (L. 425) $G_6$ ह (for सः). — $G_{2.5}$ transp. lines 426 and 427. — (L. 426) $G_{2.5.6}$ एवमादीनि. $G_6$ कृत्वा (for चक्रे). — (L. 427) $G_{2.5.6}$ ह्ययं ($G_6$ [अ]व्ययो) हरेः; $M_1$ (*sup. lin.*) [अ]प्ययं हरेः (for तु वैष्णवः). — After line 427, $G_3$ repeats line 426. — Colophon. *Adhy. no.*: $T_1$ $G_{2.3.5.6}$ $M_1$ 52. — (L. 429) $T_1$ om. the ref. $G_2$ $M_1$ (*sup. lin.*) तथा; $G_3$ तदा (for यदा). — (L. 431) $G_{2.6}$ जमदग्निसुतो. $G_6$ रामनामा (for रामो नाम). — After line 431, $G_{2.5}$ read line 435. — (L. 433) $G_2$ °बाहुर् (for °वीर्यो). $G_{2.5}$ तदा (for तथा). — After line 435, $G_3$ reads line 440. — (L. 436) $G_{2.3.6}$ [अ]र्जुनं युधि (for [अ]वधीद्रणे). — (L. 437) $G_5$ यज्ञे (for यज्ञ-). $T_1$ [अ]सौ; $M_1$ च (for स). $T_1$ $G_2$ ऋत्विजां; $G_3$ °जो (for °जं). $G_{3.5}$ $M_1$ वै स (for चैव). — (L. 439) $G_2$ एव (for एष). — (L. 440) $G_3$ उद्धंतुं (for उद्धर्तुं). — (L. 442) $G_2$ समेतारान् (for °तानि). — (L. 444) $G_6$ पुनर्जघान. $T_1$ $G_2$ $M_1$ दंतक्रूरे; $G_5$ अंतश्चक्रे; $G_6$ अतिक्रूरे (for अन्तं चक्रे). $T_1$ $G_2$ रथर्षभः ($G_2$ °भं); $G_5$ नरर्षभ; $M_1$ (*sup. lin.*) रथर्षभान्. — (L. 445) $T_1$ दश सहस्राणि; $G_{2.3}$ दशासहस्रस्य; $G_6$ राज्ञां सहस्रं वै (for दशसहस्रस्य). $G_3$ $M_1$ हंता (for भङ्क्त्वा). — (L. 446) $T_1$ $G_{5.6}$ $M_1$ (*sup. lin.* as above) °नाघ्नत्. $M_1$ (*sup. lin.* as above) उदके तथा (for उदकृन्तत). — (L. 447) $T_1$ अपायतत्; $G_3$ अपोथयत् (for अपाययत्). $G_2$ क्षणमात्रमपातयत् (for the post. half). — (L. 448) $T_1$ ब्रह्मद्विषश्छित्वा; $G_{3.5}$ °द्विषं जित्वा. $G_{2.6}$ [ऽ]त्रायत (for ऽस्नायत). — (L. 449) $G_{2.6}$ $M_1$ °क्रुष्टैर् (for °क्रुष्टो). — (L. 450) $G_{2.6}$ निघ्नन् (for न्यघ्नद्). — (L. 451) $T_1$ ह्यमुष्यत तां; $G_2$ ह्यमृष्यति तां; $G_3$ °ष्यत तं; $G_6$ °ष्यत्तदा. $G_5$ उदीरितं. — (L. 452) $G_2$ यथा°; $G_6$ यत्रा° (for यदा°). — (L. 453) $T_1$ $G_5$ मालकान् (for मालवान्). — (L. 454) $T_1$ $G_3$ ऋषिकान्; $G_6$ इषीकान्; $M_1$ (*sup. lin.* as above) ऋचीकान्. — (L. 455) $T_1$ अंतान्यंगान्; $G_{2.5}$ अंगवंग- (for अङ्गान्वङ्गान्). $G_{2.3.6}$ °कौसलान्; $G_5$ °कोशलान्. — (L. 456) $G_2$ दाक्षा° (for रात्रा°). $G_{2.6}$ कार्ति° (for मार्ति°). — (L. 457) $G_{2.6}$ $M_1$ राजन्यान् (for राजेन्द्रान्). — Lines 459–461 =(var.) Hari. 1. 41. $115^a$–$116^b$. — (L. 460) $T_1$ $G_2$ त्रिः($G_2$ त्रि)सप्तकृत्वा. $T_1$ $G_{2.3}$ $M_1$ निक्षत्रिया. — (L. 461) $T_1$ $G_{2.3}$ $M_1$ निक्षत्रियां. $M_1$ सु- (for स). — (L. 462) $T_1$ $G_{2.5}$ इंद्रकोपक°. $T_1$ $G_{3.5}$ बंधुजीव° (for जीवंजीव°). — (L. 463) $G_2$ पूजयित्वा च; $G_6$ $M_1$ पूरयित्वा च.

चकार तर्पणं वीरः पितॄणां तासु तेषु च ।
सर्वानष्टादश द्वीपान्वशमानीय भार्गवः ।
सोऽश्वमेधसहस्राणि नरमेधशतानि च ।
इष्ट्वा सागरपर्यन्तां काश्यपाय महीं ददौ ।
तस्याग्रेणानुपर्येति भूमिं कृत्वा विपांसुलाम् ।
ततः कालकृतां सत्यां भार्गवाय महात्मने ।
गाथामप्यत्र गायन्ति ये पुराणविदो जनाः ।
वेदिमष्टादशोत्सेधां हिरण्यस्यातिपौरुषीम् ।
रामस्य जामदग्न्यस्य प्रतिजग्राह काश्यपः ।
एवमिष्ट्वा महाबाहुः क्रतुभिर्भूरिदक्षिणैः ।
अन्यद्वर्षशतं रामः सौभे साल्वमयोधयत् ।
ततः स भृगुशार्दूलस्तं सौभं योधयन्प्रभुः ।
सुबन्धुरं रथं राजन्नास्थाय भरतर्षभ ।
नग्निकानां कुमारीणां गायन्तीनामुपाशृणोत् ।
राम राम महाबाहो भृगूणां कीर्तिवर्धन ।
त्यज शस्त्राणि सर्वाणि न त्वं सौभं वधिष्यसि ।
चक्रहस्तो गदापाणिर्भीतानामभयंकरः ।
युधि प्रद्युम्नसाम्बाभ्यां कृष्णः सौभं वधिष्यति ।
तच्छ्रुत्वा पुरुषव्याघ्रस्तत एव वनं ययौ ।
न्यस्य सर्वाणि शस्त्राणि कालकाङ्क्षी महायशाः ।
रथं वर्मायुधं चैव शरान्परशुमेव च ।
धनूंष्यप्सु प्रतिष्ठाप्य रामस्तेपे परं तपः ।
ह्रियं प्रज्ञां श्रियं कीर्तिं लक्ष्मीं चामित्रकर्शनः ।
पञ्चाधिष्ठाय धर्मात्मा तं रथं विससर्ज ह ।
आदिकाले प्रवृत्तं हि विभजन्कालमीश्वरः ।
नाहनच्छ्रद्धया सौभं न ह्यशक्तो महायशाः ।
जामदग्न्य इति ख्यातो यस्त्वसौ भगवानृषिः ।
सोऽस्य भागस्तपस्तेपे भार्गवो लोकविश्रुतः ।

Colophon.

भीष्मः ।

शृणु राजंस्तथा विष्णोः प्रादुर्भावं महात्मनः ।
चतुर्विंशे युगे चापि मार्कण्डेयपुरःसरः ।
तिथौ नावमिके जज्ञे तथा दशरथादपि ।
कृत्वात्मानं महाबाहुश्चतुर्धा विष्णुरव्ययः ।
लोके राम इति ख्यातस्तेजसा भास्करोपमः ।
प्रसाधनार्थं लोकस्य विष्णुस्तस्य सनातनः ।
धर्मार्थमेव कौन्तेय जज्ञे तत्र महायशाः ।
तमप्याहुर्मनुष्येन्द्रं सर्वभूतपतेस्तनुम् ।
यज्ञविघ्नं तदा कृत्वा विश्वामित्रस्य भारत ।
सुबाहुर्निहतस्तेन मारीचस्ताडितो भृशम् ।
तस्मै दत्तानि शस्त्राणि विश्वामित्रेण धीमता ।
वधार्थं देवशत्रूणां दुर्वाराणि सुरैरपि ।
वर्तमाने तदा यज्ञे जनकस्य महात्मनः ।
भग्नं माहेश्वरं चापं क्रीडता लीलया परम् ।
ततो विवाहं सीतायाः कृत्वा स रघुवल्लभः ।
नगरीं पुनरासाद्य मुमुदे तत्र सीतया ।
कस्यचित्त्वथ कालस्य पित्रा तत्राभिचोदितः ।
कैकेय्याः प्रियमन्विच्छन्वनमभ्यवपद्यत ।
यः समाः सर्वधर्मज्ञश्चतुर्दश वने वसन् ।
लक्ष्मणानुचरो रामः सर्वभूतहिते रतः ।
चतुर्दश वने तत्वा तपो वर्षाणि भारत ।
रूपिणी यस्य पार्श्वस्था सीतेत्यभिहिता जनैः ।

---

$T_1$ $G_5$ सरिनं. — $T_1$ $G_{2.3.5.6}$ $M_1$ om. line 464. — (L. 468) $G_3$ तु (for [अ]नु-). $T_1$ भूतिं (for भूमिं). $G_2$ स (for वि-). — (L. 470) $G_2$ गदितां (for गायन्ति). — (L. 471) $T_1$ $G_3$ $M_1$ (*sup. lin.* as above) [अ]तिपौरुषां; $G_2$ [अ]धिपौरुषं. — (L. 472) $G_{2.6}$ रामेण जामदग्न्येन (for the prior half). — (L. 474) $G_3$ अभ्यवर्षंश्च तं रामः. $G_2$ सौधिं; $G_6$ $M_1$ सौभं (for °भे). — (L. 475) $G_3$ बहु (for प्रभुः). — (L. 480) $T_1$ भूतानाम्; $G_2$ $M_1$ (*sup. lin.* as above) दीना°; $G_3$ सुता° (for भीता°). — (L. 483) $G_6$ शस्त्राणि सर्वाणि (by transp.). — (L. 484) $G_{2.6}$ सर्वा° (for वर्मा°). — (L. 485) $M_1$ धनुश्चाप्सु. $T_1$ $G_5$ राजंस् (for रामस्). — (L. 486) $M_1$ (*sup. lin.* as above) धृतिं (for श्रियं). — (L. 487) $G_6$ सः (for ह). — (L. 488) $G_6$ प्रवृत्तिं. $G_{2.6}$ तु (for हि), and व्यभजत् (for विभजन्). $G_2$ करम्; $G_6$ कोयन् (for कालम्). — (L. 489) $G_{2.6}$ नाग्नचं (for नाहनत्). $T_1$ नास्य शक्तो; $G_2$ $M_1$ न ह्यशक्यो ($M_1$ °क्यं); $G_3$ तस्य शक्तो. $M_1$ मया त्विति (for महायशाः). — (L. 490) $G_6$ यस्यांशो (for यस्त्वसौ). — Colophon. *Adhy. no.:* $T_1$ $G_{2.3}$ $M_1$ 53; $G_{5.6}$ 50. — For lines 492–581 Harivaṁśa has a parallel abridged version omitting some lines at 1. 41. 121–155. — (L. 492) $T_1$ $G_3$ तदा; $G_2$ $M_1$ ततो (for तथा). — (L. 493) $G_2$ चतुर्विंशद्-; $G_6$ चतुर्दशे. $M_1$ विश्वामित्र° (for मार्कण्डेय°). — (L. 497) $G_3$ प्रसादनार्थं. $G_{2.6}$ $M_1$ तत्र (for तस्य). — (L. 498) $G_{2.3.6}$ $M_1$ कर्मार्थमेव. $G_6$ कौरव्य (for कौन्तेय). $M_1$ तात (for तत्र). — (L. 499) $G_{2.5.6}$ $M_1$ मनुष्येंद्र. — (L. 500) $G_{2.6}$ यज्ञविघ्नकरस्तत्र (for the prior half). — (L. 502) $G_{2.6}$ तस्माद् (for तस्मै). $T_1$ शास्त्राणि; $G_2$ $M_1$ चास्त्राणि. $G_{2.6}$ विश्वामित्राच्च धीमतः. — (L. 503) $G_{2.6}$ सर्व° (for देव°). $G_2$ $M_1$ दुर्वाराणां. — (L. 504) $G_2$ महा- (for तदा). — (L. 505) $G_2$ क्रीडया. $G_6$ पीडया स्वल्पया परं (for the post. half). — $G_{2.6}$ $M_1$ om. lines 506–509. — (L. 510) $T_1$ $M_1$ (*sup. lin.*) [ऽ]वसत् (for वसन्). — (L. 511) $G_6$ लक्ष्मणानुगतो. — (L. 512) $M_1$ तपस् (for वने). $T_1$ $G_2$

पूर्वाचितन्वात्सा लक्ष्मीर्भर्तारमनुगच्छति ।
जनस्थाने वसन्कार्यं त्रिदशानां चकार सः ।
मारीचं दूषणं हत्वा खरं त्रिशिरसं तथा ।
चतुर्दश सहस्राणि रक्षसां घोरकर्मणाम् ।
जघान रामो धर्मात्मा प्रजानां हितकाम्यया ।
विराधं च कबन्धं च राक्षसौ क्रूरकर्मिणौ ।
जघान च तदा रामो गन्धर्वौ शापविक्षतौ ।
स रावणस्य भगिनीनासाच्छेदं च कारयत् ।
भार्यावियोगं तं प्राप्य मृगयन्व्यचरद्वनम् ।
ततस्तमृश्यमूकं स गत्वा पम्पामतीत्य च ।
सुग्रीवं मारुतिं दृष्ट्वा चक्रे मैत्रीं तयोः स वै ।
अथ गत्वा स किष्किन्धां सुग्रीवेण तदा सह ।
निहत्य वालिनं युद्धे वानरेन्द्रं महाबलम् ।
अभ्यषिञ्चत्तदा रामः सुग्रीवं वानरेश्वरम् ।
ततः स वीर्यवान्राजंस्त्वरयन्वै समुत्सुकः ।
विचित्य वायुपुत्रेण लङ्कादेशं निवेदितम् ।
सेतुं बद्ध्वा समुद्रस्य वानरैः सहितस्तदा ।
सीतायाः पदमन्विच्छन्रामो लङ्कां विवेश ह ।
देवोरगगणानां हि यक्षराक्षसपक्षिणाम् ।
तत्रावध्यं राक्षसेन्द्रं रावणं युधि दुर्जयम् ।
युक्तं राक्षसकोटीभिर्भिन्नाञ्जनचयोपमम् ।
दुर्निरीक्ष्यं सुरगणैर्वरदानेन दर्पितम् ।
जघान सचिवैः सार्धं सान्वयं रावणं रणे ।
त्रैलोक्यकण्टकं वीरं महाकायं महाबलम् ।
रावणं सगणं हत्वा रामो भूतपतिः पुरा ।
लङ्कायां तं महात्मानं राक्षसेन्द्रं विभीषणम् ।
अभिषिच्य च तत्रैव अमरत्वं ददौ तदा ।
आरुह्य पुष्पकं रामः सीतामादाय पाण्डव ।
सबलः स्वपुरं गत्वा धर्मराज्यमपालयत् ।
दानवो लवणो नाम मधोः पुत्रो महाबलः ।
शत्रुघ्नेन हतो राजंस्ततो रामस्य शासनात् ।
एवं बहूनि कर्माणि कृत्वा लोकहिताय सः ।
राज्यं चकार विधिवद्रामो धर्मभृतां वरः ।
दशाश्वमेधानाजह्रे ज्योतिरुक्थ्यानहर्गणान् ।
नाश्रूयन्ताशुभा वाचो नात्ययः प्राणिनां तदा ।
न वित्तजं भयं चासीद्रामे राज्यं प्रशासति ।
प्राणिनां च भयं नासीज्जलानलविधानजम् ।
पर्यदेवन्न विधवा नानाथाः काश्चनाभवन् ।
सर्वमासीत्तदा तृप्तं रामे राज्यं प्रशासति ।
न संकरकरा वर्णा न कृष्टकरकृज्जनः ।
न च स्म वृद्धा बालानां प्रेतकार्याणि कुर्वते ।
विशः पर्यचरन्क्षत्रं क्षत्रं नापीडयद्विशः ।
नरा नात्यचरन्भार्या भार्या नात्यचरन्पतीन् ।
नासीदल्पकृषिर्लोके रामे राज्यं प्रशासति ।

तदा; M1 वने (for तपो). — (L. 514) T1 G2.5.6 अनुशोचती (G5 °ति); G3 °गच्छती. — (L. 517) G6 घोरदर्शिनां; M1 क्रूरकर्मणां. — (L. 519) T1 क्रूरकर्मणौ; G2 M1 घोरकर्म(M1 °र्मि)णौ. — (L. 520) T1 G3.5 ततो (for तदा). G2.3 °वि(G3 °वी)क्षितौ. — (L. 521) G2.3 भगिनीं (for °नी-). M1 -नासोच्छेदं. G2.6 अकारयत्; G3 चकार यः; M1 चकार ह (for च कारयत्). — (L. 522) G3 भार्यावियोगजं प्राप्य; G6 °योगस्तत्रासीन्; M1 °योगं संप्राप्य. G2 विचचार ह; G3 विचरद्वनं. M1 मृगयस्य(sic)चरद्वने (*sup. lin.* °नं). — (L. 523) G5 तु (for तम्). G2 हि (for स). G6 स तस्मादृष्यमूकं हि. — (L. 524) T1 G3 सुग्रीवमारुती (T1 °तिं). G2 चक्रे मैत्रं तयोः सह. — (L. 528) G2.5 M1 त्वरया वै (G2 च). G6 त्वरया वानरोत्तमः. — (L. 529) T1 विचित्र-; G2 विचिंत्य; G6 विजित्य. G2.3.6 लंकादेशान्निवेदिना (G3 °तः); G5 °देशनिवेदितं; M1 °देशे निवेदिते. — (L. 530) G2.6 वानरैः स समुत्सुकः. — (L. 531) G6 वै (for ह). — (L. 533) G2.6 यत्र; M1 तम् (for तत्र). G3 निर्जयं (for दुर्जयम्). — (L. 534) T1 G3.5 M1 गुप्तं (for युक्तं). — M1 repeats the post. half of line 534 and the prior half of line 535. — (L. 535) G3 M1 दुर्निरीक्षं. G3 गर्वितं (for दर्पितम्). — (L. 538) G3 रावणस्य गणं हत्वा. — (L. 540) G6 ततो रामस्; M1 स वै तस्य (for च तत्रैव). G6 त्वमरत्वं. — (L. 542) G6 धर्म्यं; M1 धर्माद् (for धर्म-). G3 धर्मेणापालयन्महीं. — (L. 544) G2.6 तदा (for ततो). — (L. 545) M1 कार्याणि (for कर्माणि). — (L. 547) = (var.) B. 12. 29. $59^{cd}$; (var.) Rām. 6. 131. $94^{cd}$. T1 G3 शता° (for दशा°). G2 जागरूढ्यान्स निर्गळान्; G6 M1 आरूढ्यान्स(M1 जारूथ्यां स)निरर्गळान्. — (L. 549) G3 वातजं; M1 मृत्युजं (for वित्तजं). M1 चापि (for चासीद्). The phrase रामे राज्यं प्रशासति occurs several times in the Ṣodaśarājakīya episode in both the Droṇa and Śānti parvans and also in the Rāmāyaṇa. — T1 om. (hapl.) lines 550–552. — (L. 550) M1 reads line 550 after line 553. G2.6 प्राणिनामभयं चासीज्. M1 °विघातजं (for °विधानजम्). — (L. 551) Cf. B. 12. 29. $52^{ab}$; Rām. 6. 131. $97^{ab}$. G2.6 नानाथा काचनाभवत्. — (L. 552) G2.3.6 दृप्तं (for तृप्तं). G3 तदा तस्मिन्विशां पते (= the post. half of line 562). — After line 552, G3 reads lines 563–565 repeating them in their proper place. — (L. 553) G6 न संकरकरो वर्णो. G5.6 नाकृष्ट°. Line 554 = Rām. 6. 131. $98^{cd}$. — (L. 556) G2.6 नरो नात्यचरद्. G2.3.5.6

आमन्त्वर्षसहस्राणि तथा पुत्रसहस्रिणः ।
अरोगाः प्राणिनोऽप्यासन्रामे राज्यं प्रशासति ।
ऋषीणां देवतानां च मनुष्याणां तथैव च ।
पृथिव्यां सहवासोऽभूद्रामे राज्यं प्रशासति ।
सर्वे ह्यासंस्तृप्तरूपास्तदा तस्मिन्विशां पते ।
धर्मेण पृथिवीं सर्वामनुशासति भूमिपे ।
तपस्येवाभवन्सर्वे सर्वे धर्ममनुव्रताः ।
पृथिव्यां धार्मिके तस्मिन्रामे राज्यं प्रशासति ।
नाधर्मिष्ठो नरः कश्चिद्बभूव प्राणिनां क्वचित् ।
प्राणापानौ समावास्तां रामे राज्यं प्रशासति ।
गाथामप्यत्र गायन्ति ये पुराणविदो जनाः ।
श्यामो युवा लोहिताक्षो मातङ्गानामिवर्षभः ।
आजानुबाहुः सुमुखः सिंहस्कन्धो महाबलः ।
दश वर्षसहस्राणि दश वर्षशतानि च ।
राज्यं भोगं च संप्राप्य शशास पृथिवीमिमाम् ।
रामो रामो राम इति प्रजानामभवन्कथाः ।
रामभूतं जगदिदं रामे राज्यं प्रशासति ।
ऋग्यजुःसामहीनाश्च न तदासन्द्विजातयः ।
उषित्वा दण्डके कार्यं त्रिदशानां चकार सः ।
पूर्वापकारिणं संख्ये पौलस्त्यं मनुजर्षभः ।
देवगन्धर्वनागानामरिं स निजघान ह ।
सत्त्ववान्गुणसंपन्नो दीप्यमानः स्वतेजसा ।
एवमेव महाबाहुरिक्ष्वाकुकुलवर्धनः ।
रावणं सगणं हत्वा दिवमाक्रमताभिभूः ।
इति दाशरथेः ख्यातः प्रादुर्भावो महात्मनः ।
ततः कृष्णो महाबाहुर्भीतानामभयंकरः ।
अष्टाविंशे युगे राजन्जज्ञे श्रीवत्सलक्षणः ।
पेशलश्च वदान्यश्च लोके बहुमतो नृषु ।
स्मृतिमान्देशकालज्ञः शङ्खचक्रगदासिधृक् ।
वासुदेव इति ख्यातो लोकानां हितकृत्सदा ।
वृष्णीनां च कुले जातो भूमेः प्रियचिकीर्षया ।
स नृणामभयं दाता मधुहेति स विश्रुतः ।
स शकार्जुनरामाणां किल स्थानान्यसूदयत् ।
कंसादींश्च जघानाजौ दैत्यान्मानुषविग्रहान् ।
अयं लोकहितार्थाय प्रादुर्भावो महात्मनः ।
कल्की विष्णुयशा नाम भूयश्चोत्पत्स्यते हरिः ।
कलेर्युगान्ते संप्राप्ते धर्मे शिथिलतां गते ।
पाषण्डिनां गणानां हि वधार्थं भरतर्षभ ।
धर्मस्य च विवृद्ध्यर्थं विप्राणां हितकाम्यया ।
एते चान्ये च बहवो दिव्या देवगणैर्युताः ।

---

मार्यो. G2.6 पर्नि. — After line 556, G3 M1 ins.:

सर्वबीजान्यरोहन्त निर्दस्युः पृथिवी तदा ।
राम एवाभवद्भर्ता रामः पालयिताभवत् ।

[ G3 reads second line, after line 557. ]

— (L. 557) Om. in M1. G2.6 योगे (for लोके). For lines 558–559, cf. B. 12. 29. 55; Rām. 6. 131. 100. — (L. 558) T1 G3 M1 वर्षसहस्राणां. — (L. 559) G2.6 M1 चासन्; G3 ह्यासन् (for ऽप्यासन्). — Lines 560–561 = (var.) B. 7. 59. $12^{c}$–$13^{b}$. — (L. 560) T1 G3.5 M1 च सर्वशः (for तथैव च). — (L. 561) G2.6 पृथिव्यां धार्मिकाः सर्वे. — (L. 562) G2 तत्र रूपाम्; G3 सुख° (for तृप°). T1 G5 पतौ (for पते). — (L. 564) T1 G3 (second time).5 तपस्तपस्येवाभूच्च धर्मो धर्ममनुव्रतः (T1 °तं; G5 °ताः); G2.6 तपस्तपस्ये (G6 °स्ती) वाभावं (G6 °वद्) धर्मो धर्मभृतां वर; G3 (first time) तपस्येवाभवद्धर्मस्तपो धर्ममनुव्रतं. — (L. 565) T1 G5 पृथिव्यां धार्मिकाः सर्वे. — (L. 567) = (var.) B. 7. 59. $14^{ab}$. G2 समाभ्यस्तां; G6 समौ ह्यास्तां (for समावास्तां). — (L. 568) = line 470. — Lines 569–571 = (var.) B. 7. 59. $20^{c}$–$21^{d}$; B. 12. 29. $60^{c}$–$61^{b}$. — (L. 570) G3 महाभुजः (for °बलः) — (L. 571) = Rām. 1. 1. $94^{ab}$; 15. $29^{cd}$; 6. 131. $105^{ab}$; etc. G2.6 रामो राज्यमकारयत् (for the post. half.). — G2.6 om. line 572. — Lines 573–574 = (var.) B. 7. 59. $22^{c}$–$23^{b}$; (var.) Rām. 6. 131. 101. — M1 reads lines 573–574 after the insertion following line 579. — (L. 574) G2.5 M1 जगदभूद् (for °दिदं). — (L. 576) G2.6 वसित्वा (for उषित्वा). — (L. 577) G2.6 M1 तं तु (for संख्ये). G2 मनुजर्षभ. — (L. 578) G6 °मर्त्यानाम् (for °नागानाम्). — (L. 579) = (var.) B. 7. 59. $11^{cd}$. T2 G3.5 सत्य° (for सत्त्व°). G6 दयावानविकत्थनः (for the post. half). — After line 579, M1 ins.:

अति लोकत्रयं चापि रामो दाशरथिर्बभौ ।

— (L. 580) G3 एवमेतत्; M1 °मेव. G2.5 M1 °कुलनंदनः. — (L. 583) G2.6 सीतो (for कृष्णो). T1 भूता°; G3 हिता°; M1 दीना° (for भीता°). — (L. 584) G2.6 अष्टाविंश- (for °विंशे). — (L. 585) G5 कारुण्यतो (for बहुमतो). — (L. 586) M1 °भृत् (for °धृक्). — (L. 589) G2.6 शत्रूणां भयकृद्दाता (for the prior half). T1 G5 च (for स). M1 मधुहा इति विश्रुतः. — (L. 590) T1 G5 यमकार्जुनरामाणां; G3 स शक्रोर्जुनरामाभ्यां. G5 रिपु- (for किल). — (L. 593) T1 G5 M1 कल्किर् (for कल्की). G2.6 उत्पद्यते (for °त्स्यते). — (L. 594) G6 काले (for कलेर्). — (L. 595) T1 G2 पापंडीनां. G3 गणं सर्वं; M1 गणस्यास्य (for गणानां हि). G3 पुरुषर्षभ. — Lines 597–598 = Hari. 1. 41. 170. — (L. 597) T1 दिव्यादिव्या (for दिव्या देव-). — Colophon.

प्रादुर्भावाः पुराणेषु गीयन्ते ब्रह्मवादिभिः ।

Colophon.

वैशंपायनः ।

एवमुक्तोऽथ कौन्तेयस्ततः पौरवनन्दनः ।
आबभाषे पुनर्भीष्मं धर्मराजो युधिष्ठिरः ।

युधिष्ठिरः ।

भूय एव मनुष्येन्द्र उपेन्द्रस्य यशस्विनः ।
जन्म वृष्णिषु विज्ञातुमिच्छामि वदतां वर ।
यथैव भगवाञ्जातः क्षिताविह जनार्दनः ।
माधवेषु महाबुद्धिस्तन्मे ब्रूहि पितामह ।
यदर्थं च महातेजा गास्तु गोवृषभेक्षणः ।
ररक्ष कंसस्य वधाल्लोकानामभिरक्षिता ।
क्रीडता चैव यद्बाल्ये गोविन्देन विचेष्टितम् ।
तदा मतिमतां श्रेष्ठ तन्मे ब्रूहि पितामह ।

वैशंपायनः ।

एवमुक्तस्ततो भीष्मः केशवस्य महात्मनः ।
माधवेषु तदा जन्म कथयामास वीर्यवान् ।

भीष्मः ।

हन्त ते कथयिष्यामि युधिष्ठिर यथातथम् ।
यतो नारायणस्येह जन्म वृष्णिषु कौरव ।
पुरा लोके महाराज वर्तमाने कृते युगे ।
आसीत्त्रैलोक्यविख्यातः संग्रामस्तारकामयः ।
विरोचनो मयस्तारो वराहः श्वेत एव च ।
लम्बः किशोरः स्वर्भानुररिष्टोऽथ क्षरश्च वै ।
विप्रचित्तिः प्रलम्बश्च वृत्रजम्भबलादयः ।
नमुचिः कालनेमिश्च प्रह्लाद इति विश्रुतः ।
एते चान्ये च बहवो दैत्यसंघाः सहस्रशः ।
नानाशस्त्रधरा राजन्नानाभूषणवाहनाः ।
देवतानामभिमुखास्तस्थुर्दैतेयदानवाः ।
देवास्तु युध्यमानास्ते दानवानभ्ययू रणे ।
आदित्या वसवो रुद्राः साध्या विश्वे मरुद्गणाः ।
इन्द्रो यमश्च चन्द्रश्च वरुणोऽथ धनेश्वरः ।
अश्विनौ च महावीर्यौ ये चान्ये देवतागणाः ।
चक्रुर्युद्धं महाघोरं दानवैश्च यथाक्रमम् ।
युध्यमानाः समेयुश्च देवा दैतेयदानवैः ।
तद्युद्धमभवद्घोरं देवदानवसंकुलम् ।
ताभ्यां बलाभ्यां संजज्ञे तुमुलो विग्रहस्तदा ।
तीक्ष्णैः शस्त्रैः किरन्तोऽथ अभ्ययुर्देवदानवाः ।
अघ्नन्देवान्सगन्धर्वान्सयक्षोरगचारणान् ।
ते वध्यमाना दैतेयैर्देवसंघास्तदा रणे ।
दुद्रुवुः संपरिश्रान्ताः क्षीणप्रहरणा रणे ।
त्रातारं मनसा जग्मुर्देवं नारायणं प्रभुम् ।
एतस्मिन्नन्तरे तत्र जगाम हरिरीश्वरः ।
दीपयञ्ज्योतिषा भूमिं शङ्खचक्रगदाधरः ।
तमागतं सुपर्णस्थं विष्णुं लोकनमस्कृतम् ।
दृष्ट्वा मुदा युताः सर्वे भयं त्यक्त्वा रणे सुराः ।
चक्रुर्युद्धं पुनः सर्वे देवा दैतेयदानवैः ।
तद्युद्धमभवद्घोरमचिन्त्यं रोमहर्षणम् ।
जघ्नुर्दैत्यान्रणे देवाः सर्वे शक्रपुरोगमाः ।
ते वध्यमाना विबुधैर्दुद्रुवुर्दैत्यदानवाः ।
विद्रुतान्दानवान्दृष्ट्वा तदा भारत संयुगे ।
कालनेमिरिति ख्यातो दानवः प्रत्यदृश्यत ।
शतप्रहरणो घोरः शतबाहुः शताननः ।
शतशीर्षः स्थितः श्रीमाञ्शतशृङ्ग इवाचलः ।
भास्कराकारमकुटः शिञ्जिताभरणाङ्गदः ।
धूम्रकेशो हरिश्मश्रुर्निर्दष्टोष्ठपुटाननः ।

*Adhy. no.:* $T_1$ $G_{2.3.5.6}$ $M_1$ 54. — (L. 599) $G_6$ ॐ (for वैशं°). $G_{2.6}$ उक्तेथ; $M_1$ उक्तस्तु (for उक्तोऽथ). $M_1$ भीष्मेण (for कौन्तेयस्). $G_{2.3.6}$ $M_1$ कौरवनंदनः. — $G_6$ om. lines 600–603. — (L. 600) $T_1$ °पुत्रो (for °राजो). — (L. 604) $G_3$ यादवेषु (for माधवेषु). — (L. 605) $G_6$ सदर्थं. $T_1$ $G_{2.3}$ तु (for च). $G_3$ महाराज (for °तेजा). $T_1$ वै (for गो-). — (L. 606) $G_{2.6}$ $M_1$ तदा (for वधात्). — (L 607) $T_1$ सह रामेग; $G_3$ क्रीडिता चैव; $G_6$ किं धाता चैव. — (L. 608) $M_1$ गोविंदेन (for तन्मे ब्रूहि). — (L. 609) $M_1$ तदा (for ततो). — (L. 610) $G_2$ मानवेषु; $G_3$ यादवे° (for माधवे°). $T_1$ $G_{2.6}$ $M_1$ तथा (for तदा). — (L. 612) $T_1$ $G_6$ ततो; $M_1$ विभोर् (for यतो). $G_2$ भारत (for कौरव). — (L. 614) $G_6$ अस्ति (for आसीत्). — (L. 615) $G_3$ विरोचन-. $G_2$ वमस्तारो. — (L. 616) $G_{2.6}$ अ($G_6$ व)रिष्टो राक्षसश्च वै; $G_3$ अरिष्टोष्येभश्च वै. — $G_{2.6}$ $M_1$ om. lines 617–618. — (L. 617) $G_3$ जंभवृत्र- (by transp.). — (L. 618) $G_3$ विश्रुताः. — (L. 624) $T_1$ वरुणश्चयनेश्वरः; $G_3$ वरुणो धनदेश्वरः. — (L. 625) $G_6$ एते (for ये च). — (L. 626) $G_2$ कुर्युर् (for चक्रुर्). $G_{2.6}$ महद् (for महा-). — (L. 629) $M_1$ द्वाभ्यां (for ताभ्यां). — (L. 630) $T_1$ अस्त्रैः; $G_{2.6}$ $M_1$ तीक्ष्ण- (for तीक्ष्णैः). $G_2$ ह्यभ्य° (for अभ्य°). — (L. 631) $G_{2.6}$ $M_1$ घ्नंति (for अघ्नन्). $G_6$ °राक्षसान् (for °चारणान्). — (L. 633) $T_1$ क्षीणप्रहरणा; $G_6$ तीक्ष्णप्रहरणा. — (L. 636) $T_1$ $G_{2.5}$ ज्योतिषां. $M_1$ व्योम (for भूमिं). — (L. 637) $G_6$ दृष्ट्वा (for विष्णुं). $G_{2.5}$ $M_1$ विष्णुं लोकगुरुं तदा ($G_5$ °था). — (L. 638) $G_6$ तदा (for दृष्ट्वा). $G_5$ $M_1$ त्यज्य (for त्यक्त्वा). — (L. 639) $G_6$ पुरा (for पुनः). — (L. 643) $T_1$ तथा (for तदा). — (L. 644) $G_6$ कालनेमीति विख्यातो. — (L. 645) $T_1$ शतं; $G_6$ शत्रु- (for शत-). — (L. 648)

त्रैलोक्यान्तरविस्तारं धारयन्विपुलं वपुः ।
तर्जयन्वै रणे देवांश्छादयन्स दिशो दश ।
अभ्यधावत्सुसंक्रुद्धो व्यादितास्य इवान्तकः ।
ततः शस्त्रप्रपातैश्च देवान्धर्षितवान्रणे ।
अथाभ्ययुः सुरान्सर्वान्पुनस्ते दैत्यदानवाः ।
आपीडयन्रणे क्रुद्धास्ततो देवान्युधिष्ठिर ।
ते वध्यमाना विबुधाः समरे कालनेमिना ।
दैत्यैश्चैव महाराज दुद्रुवुः सहिता दिशः ।
विद्रुतान्विबुधान्दृष्ट्वा कालनेमिर्महासुरः ।
इन्द्रं यमाग्निवरुणान्वायुं च धनदं रविम् ।
एतांश्चान्यान्बलाज्जित्वा तेषां कार्याण्यवाप सः ।
तान्सर्वांस्तरसा जित्वा कालनेमिर्महासुरः ।
ददर्श गगने विष्णुं सुपर्णस्थं महाद्युतिम् ।
तं दृष्ट्वा क्रोधताम्राक्षस्तर्जयन्नभ्ययात्तदा ।
स बाहुशतमुद्यम्य सर्वास्त्रग्रहणं रणे ।
रोषाद्धारत दैत्येन्द्रो विष्णोरुरसि पातयत् ।
दैत्याश्च दानवाश्चैव सर्वे मयपुरोगमाः ।
स्वान्यायुधानि संगृह्य सर्वे विष्णुमताडयन् ।
स ताड्यमानोऽतिबलैर्दैत्यैः सर्वायुधोद्यतैः ।
न चचाल हरिर्युद्धेऽकम्प्यमान इवाचलः ।
पुनरुद्यम्य संक्रुद्धः कालनेमिर्दृढां गदाम् ।
जघान संयुगे राजन्स विष्णुं गरुडं च वै ।
स दृष्ट्वा गरुडं श्रान्तं चक्रमुद्यम्य वै हरिः ।
शतं शिरांसि बाहूंश्च सोऽच्छिनत्कालनेमिनः ।
जघानान्यांश्च तान्सर्वान्समरे दैत्यदानवान् ।
तस्मिन्राजन्रणे दैत्यास्त्रय एव विनिःसृताः ।
विरोचनो मयश्चैव स्वर्भानुश्च महासुरः ।
सर्वानशेषान्हत्वा तु विष्णुर्वै दैत्यदानवान् ।
विबुधानामृषीणां च स्वानि स्थानानि वै ददौ ।
दत्त्वा सुराणां सुप्रीतिं प्राप्य सर्वाणि भारत ।
जगाम ब्रह्मणा सार्धं ब्रह्मलोकं तदा हरिः ।
ब्रह्मलोकं प्रविश्याथ तत्र नारायणः प्रभुः ।
पौराणं गुह्यसदनं दिव्यं नारायणाश्रमम् ।
संप्रविश्य तदा देवः स्तूयमानो महर्षिभिः ।
सहस्रशीर्षो भूत्वाथ शयनायोपचक्रमे ।
आदिदेवः पुराणात्मा निद्रावशमुपागतः ।
शेते सुखं सदा विष्णुर्मोहयञ्जगदव्ययः ।
जग्मुस्तस्याथ वर्षाणि शयानस्य महात्मनः ।
षट्त्रिंशच्छतसाहस्रं मानुषेणेह संख्यया ।
ततः कृतयुगत्रेताद्वापरान्ते बुबोध सः ।
ब्रह्मादिभिः सुरैश्चापि स्तूयमानो महर्षिभिः ।
उत्थाय शयनाद्विष्णुर्ब्रह्मणा विबुधैः सह ।
देवानां च हितार्थाय ययौ देवसभां प्रति ।
मेरोः शिखरविन्यस्तां ज्वलन्तीं तां शुभां सभाम् ।
विविशुस्तां सुराः सर्वे ब्रह्मणा सह भारत ।
जग्मुस्तत्र निषेदुस्ते सा निःशब्दमभूत्तदा ।
तत्र भूमिरुवाचाथ खेदात्करुणभाषिणी ।

भूमिः ।

राज्ञां बलैर्बलवतां खिन्नास्मि भृशपीडिता ।
नित्यं भारपरिश्रान्ता दुःखाज्जीवामि वै सुराः ।

T1 ताम्रकेशो; G2.6 धूम्रकेतुर् (for °केशो). G2 निर्दिष्टोष्ठ°. — (L. 649) T1 °विस्तारद्; M1 °विस्तारि. — (L. 650) G2.6 छादयन्वै. — (L. 651) M1 अभ्यधावत सँक्रुद्धो. — (L. 652) G2.6 तत्र (for ततः). G2.5.6 M1 शस्त्र(G6 °क्र)प्रतापैश्च. G2 उन्मीपतान्; G6 निमिषतो (for धर्षितवान्). — (L. 653) G2.5.6 अथा(G2 °भ्या)ययुः (for अथाभ्ययुः). — (L. 656) M1 दिशं. — (L. 657) G2 (marg. as above) महाबलः. — (L. 658) G2.5.6 इंद्रं यमं च वरुणं. — (L. 659) G6 बलात् (for बलाज्). T1 एतानन्यान्पुनर्जित्वा. M1 कर्माणि (for कार्याणि). — (L. 660) T1 समरे; G2.6 सहसा (for तरसा). — (L. 664) M1 वक्षस्यपातयत्. — (L. 666) G2.6 M1 उपाद्रवन् (for अताडयन्). — (L. 668) T1 तोयवर्षैर्; G2 [ऽ]कंपमान (for ऽकम्प्य°). — (L. 669) G2 गदां दृढां (by transp.). — (L. 670) G2.6 M1 तं (for स). — (L. 671) G2.6 तं (for स). G2.5.6 शांतं; M1 भ्रांतं (for श्रान्तं). — (L. 672) M1 बाहूनां (for बाहूंश्च). — (L. 673) G6 दैत्यांश्च समरे पुनः (for the post. half). — G2.6 om. lines 674–676. — (L. 674) T1 रणाजिरे (for राजन्रणे). — (L. 675) M1 महाबलः (for °सुरः). — After line 676, T1 repeats line 674. — (L. 677) G6 transp. विबुधानां and ऋषीणां. — (L. 678) G6 संप्रीतिं. G2 व्याप्य; G6 दत्वा; M1 स्वाप्य (for प्राप्य). G2.6 धर्माणि; M1 धर्मांश्च (for सर्वाणि). — (L. 680) G2.6 प्राप्य (for तत्र). — (L. 681) G2 पुराण-; G6 M1 (orig.) पौराणं; M1 (sup. lin.) पुराणां. G2.6 ब्रह्म° (for गुह्य°). G2 तदा (for दिव्यं). G6 नारायणाश्रयं. — G6 om. line 682. — (L. 683) G6 वै; M1 तु (for [अ]थ). G2 स सहस्रशिरा भूत्वा. — (L. 685) M1 स ह (for सुखं). G6 जिष्णुर् (for विष्णुर्). G2 om. (hapl.) from the post. half of line 685 to the prior half of line 690. — (L. 686) T1 शयनस्य; G6 शयितस्य. — (L. 687) T1 G6 M1 [ष]ट्; G2 द्वि (for [ष]ट्). — (L. 688) G2.6 जग्मुः (for ततः). G2.5.6 कृतयुगे (for °युग-). G2 ह (for सः). — (L. 689) G6 चाथ (for चापि). — (L. 693) G2.6 शिरसि (for शिखर-). T1 G2.6 सभां शुभां (by transp.). — (L. 693) M1 ते (for तां). — (L. 694) T1 G2.6 ततस्तत्र; G6 जग्मुस्तेत्र; M1 संप्रविश्य (for जग्मुस्तत्र). M1 सा निःशब्दा ह्यभूत्तदा. — (L. 695) T1 वेदात् (for खेदात्). — (L. 696) G2.6 om. भूमिः. — (L. 697) G2 दुःखं (for दुःखाज्). G2.6 [अ]हं

पुरे पुरे च नृपतिः कोटिसंख्यैर्बलैर्वृतः ।
राष्ट्रे राष्ट्रे च शतशो ग्रामाः कुलसहस्रिणः ।
भूमिपानां सहस्रैश्च तेषां च बलिनां बलैः ।
ग्रामायुतैश्च राष्ट्रैश्च अहं निर्विवरीकृता ।
केचिद्दैत्येषु चोत्पन्ना केचिद्राक्षसयोनयः ।
तस्माद्धारयितुं शक्ता न शक्ष्यामि जनानहम् ।
दैत्यैर्बाध्यमानास्ताः प्रजा नित्यं दुरात्मभिः ।

भीष्मः ।

भूमेस्तद्वचनं श्रुत्वा देवो नारायणस्तदा ।
व्यादिश्य तान्सुरान्सर्वान्क्षितौ वस्तुं मनो दधे ।

Colophon.

भीष्मः ।

यच्चक्रे भगवान्विष्णुर्वसुदेवकुलोद्भवः ।
तत्तेऽहं नृप वक्ष्यामि शृणु सर्वमशेषतः ।
वासुदेवस्य माहात्म्यं चरितं च महाद्युतेः ।
हितार्थं सुरमर्त्यानां लोकानां हि हिताय च ।
यदा दिवि विभुस्तात न रेमे भगवानसौ ।
ततो व्यादिश्य भूतानि भुवि भौमसुखावहः ।
निग्रहार्थाय दैत्यानां चोदयामास वै तदा ।
मरुतश्च वसूंश्चैव सूर्याचन्द्रमसावुभौ ।
गन्धर्वाप्सरसश्चैव रुद्रादित्यांस्तथाश्विनौ ।
जायध्वं मानुषे लोके सर्वभूतमहेश्वराः ।
जङ्गमानि विशालाक्षो ह्यात्मानं ह्यात्मनासृजत् ।
जायतामिति गोविन्दस्तिर्यग्योनिगतैरपि ।
तानि सर्वाणि सर्वज्ञः ससुराणि सुरेश्वरः ।
त एवमुक्ताः कृष्णेन सर्व एव दिवौकसः ।
दैत्यदानवहन्तारः संभूता भुवनेश्वराः ।
ययातिवंशजस्याथ वसुदेवस्य धीमतः ।
कुले पुण्ययशःकर्मा भेजे नारायणः प्रभुः ।
आज्ञापयित्वा रत्यर्थमजायत यदोः कुले ।
आत्मानमात्मना तात कृत्वा बहुविधं हरिः ।
रत्यर्थमेव गावस्ता ररक्ष पुरुषोत्तमः ।
अजातशत्रो जातस्तु यथैष भुवि भूमिप ।
कीर्त्यमानं मया तात निबोध भरतर्षभ ।

Colophon.

भीष्मः ।

सागराः समकम्पन्त मुदा चेलुश्च पर्वताः ।
जज्वलुश्चाग्नयः शान्ता जायमाने जनार्दने ।
शिवाः संप्रववुर्वाताः प्रशान्तमभवद्रजः ।
ज्योतींषि संप्रकाशन्ते जायमाने जनार्दने ।
देवदुन्दुभयश्चापि सस्वनुर्भृशमम्बरे ।
अभ्यवर्षत्तदागम्य नारदः पुष्पवृष्टिभिः ।
गीर्भिर्मङ्गलयुक्ताभिरस्तुवन्मधुसूदनम् ।
उपतस्थुस्तदा प्रीताः प्रादुर्भावे महर्षयः ।
ततस्तानभिसंप्रेक्ष्य नारदप्रमुखानृषीन् ।
उपानृत्यन्नुपजगुर्गन्धर्वाप्सरसां गणाः ।

(for वै). — After line 697, $G_3$ ins.:

अहं राष्ट्रे नृपाणां हि विस्तीर्णैः शाम्यती भृशम् ।

— (L. 698) $T_1$ (hypermetric) नृपतयः (for नृपतिः). $G_3$ कोटिसंख्य- (for °संख्यैर्). $T_1$ वृताः. — (L. 699) $G_2$ कूल-; $G_3$ कूले (for कुल-). — (L. 700) $G_3$ भूमिपालैः (for °पानां). — (L. 701) $T_1$ ग्रामायुताद्यै राष्ट्रैश्च; $G_2$ °युतास्तु तै राष्ट्रैर्; $G_3$ $M_1$ °युताढ्यै राष्ट्रैश्च; $G_6$ °युता तैस्तु राष्ट्रैर्. — $G_{2.3.5.6}$ $M_1$ om. line 702. — (L. 703) $G_{2.6}$ शक्ना; $M_1$ सर्वान् (for शक्ता). — (L. 704) $G_2$ $M_1$ दैत्यैश्च; $G_6$ तैस्तैश्च (for दैत्यैर्). $G_2$ वध्यमानास्ताः. — (L. 705) $G_3$ तु (for तद्). $T_1$ भूमेर्वचनमाकर्ण्य. — (L. 706) $M_1$ आदिश्य. $G_3$ $M_1$ भूमौ (for क्षितौ). — Colophon. *Adhy. no.:* $T_1$ $G_{2.3.5.6}$ $M_1$ 55. — (L. 707) $G_5$ वसुदेवकुलोद्वहः; $G_6$ °सुतस्तदा. — (L. 708) $M_1$ संप्रवक्ष्यामि (for नृप व°). — (L. 709) $G_{2.6}$ महात्मनः; $G_5$ $M_1$ °द्युते. — (L. 710) $G_{2.6}$ च; $M_1$ वै (for हि). $G_3$ लोकानां हितकाम्यया. — (L. 711) $M_1$ भुवि (for दिवि). — $G_3$ om. lines 712–715. — (L. 712) $G_{2.6}$ विभु_ _ावहः. $M_1$ भुवि भूमि°. — (L. 713) $M_1$ निग्रहार्थं च (for °हार्थाय). $G_6$ बोधयामास. — (L. 714) $M_1$ तथा ([उ]भौ). — (L. 716) $T_1$ सर्वभूतमहेश्वरं; $G_{2.3.6}$ $M_1$ °लोकमहेश्वराः ($G_2$ °रः). — (L. 717) $G_5$ reads line 717 after line 720. $G_{3.6}$ म($G_6$ ज)न्यमानो (for जङ्गमानि). $G_{2.6}$ स्वात्मानं (for ह्यात्मानं). $G_3$ भूतान्येकात्मनासृजत्; $M_1$ साक्षाद्यान्यात्मनासृजत्. — (L. 718) $T_1$ जायतादिति; $G_{2.3}$ जायंतामिति. — (L. 719) $G_{2.6}$ व्यजायत यदोः कुले (for the post. half). — $G_{2.6}$ om. lines 720–724. — (L. 723) $G_3$ कुलं. $G_3$ पुण्ययशा. $G_3$ जन्म; $G_5$ -कर्म (for -कर्मा). $M_1$ जज्ञे (for भेजे). — (L. 724) $G_5$ $M_1$ यदुक्षये (for यदोः कुले). — (L. 726) $T_1$ $G_{2.6}$ रत्यर्थमिह गास्तत्र ($T_1$ °स्तास्तु). — (L. 728) $M_1$ तत्वं (for तात). — Colophon. *Adhy. no.:* $T_1$ $G_{2.3.5.6}$ $M_1$ 56. — (L. 731) $M_1$ च (for सं-). $G_6$ प्रशांतिमगमद्रजः. — (L. 735) $G_{2.3.6}$ $M_1$ स्तुवन्वै (for अस्तुवन्). — (L. 736) $M_1$ महा- (for तदा). — (L. 737) $T_1$ अपि (for अभि-). — (L. 738) $T_1$ देवानृत्यन्; $G_{2.6}$ उप($G_6$ अपा)नृत्यन्. $G_2$ गणैः. — After line 738, $G_3$ ins.:

ते नारदादयो राजञ्छ्रुत्वैतन्मधुभाषितम् ।
अन्तर्दृष्टा महात्मानः प्रेक्ष्यैनं विष्णुमव्ययम् ।
त्वद्यज्ञभूमिमासाद्य समासन्ते यथा वयम् ।

उपनस्थे च गोविन्दं सहस्राक्षः शचीपतिः ।
अभ्यभाषत तेजस्वी महर्षीन्पूजयंस्तदा ।
कृत्यानि देवकार्याणि कृत्वा लोकहिताय च ।
स्वं लोकं लोककृद्देवः पुनर्गच्छति तेजसा ।
इत्युक्त्वा मुनिभिः सार्धं जगाम त्रिदिवेश्वरः ।
अभ्यनुज्ञाय तान्सर्वाञ्छादयन्प्रकृतिं पराम् ।
नन्दगोपकुले कृष्ण उषित्वा बहुलाः समाः ।
वसुदेवस्ततो जातं बालमादित्यसंनिभम् ।
नन्दगोपकुले राजन्भयात्प्रच्छादयद्धरिम् ।
ततः कदाचित्सुप्तं तं शकटस्य त्वधः शिशुम् ।
यशोदा संपरित्यज्य जगाम यमुनां नदीम् ।
शिशुलीलां ततः कुर्वन्स्वहस्तचरणौ क्षिपन् ।
रुरोद मधुरं कृष्णः पादावूर्ध्वं प्रसारयन् ।
पादाङ्गुष्ठेन शकटं धारयन्नथ केशवः ।
तत्राथैकेन पादेन पातयित्वा तदा शिशुः ।
न्युब्जं पयोधराकाङ्क्षी चकार च रुरोद च ।
पातितं शकटं दृष्ट्वा भिन्नभाण्डघटीघटम् ।
जनास्ते शिशुना तेन विस्मयं परमं ययुः ।
प्रत्यक्षं शूरसेनानां दृश्यते महदद्भुतम् ।
शयानेन हतः पक्षी शिशुना तिग्मतेजसा ।
पूतना चापि निहता महाकाया महास्तनी ।
पश्यतां सर्वदेवानां वासुदेवेन भारत ।
ततः काले महाराज संसक्तौ रामकेशवौ ।
कृष्णः संकर्षणश्चोभौ रिङ्गिणौ समपद्यताम् ।
अन्योन्यकिरणग्रस्तौ चन्द्रसूर्याविवाम्बरे ।
विसर्पयेतां सर्वत्र सर्पभोगभुजौ तदा ।
रेजतुः पांसुदिग्धाङ्गौ रामकृष्णौ तदा नृप ।
क्वचिच्च जानुभिः स्पृष्टौ क्रीडमानौ क्वचिद्वने ।
पिबन्तौ दधिकुल्याश्च मथ्यमाने च भारत ।
ततः स बालो गोविन्दो नवनीतं तदाक्षयम् ।
ग्रसमानस्तु तत्राथ गोपीभिर्ददृशेऽथ वै ।
दाम्नाथोलूखले कृष्णो गोपस्त्रीभिश्च बन्धितः ।
तदाथ शिशुना तेन राजंस्तावर्जुनावुभौ ।
समूलविटपौ भग्नौ तदद्भुतमिवाभवत् ।
ततस्तौ बाल्यमुत्तीर्णौ कृष्णसंकर्षणावुभौ ।
तस्मिन्नेव व्रजस्थाने सप्तवर्षौ बभूवतुः ।
नीलपीताम्बरधरौ पीतश्वेतानुलेपनौ ।
बभूवतुर्वत्सपालौ काकपक्षधरावुभौ ।
पर्णवाद्यं श्रुतिसुखं वादयन्तौ वराननौ ।
शुशुभाते वनगतावुदीर्णाविव पन्नगौ ।
मयूराङ्गजकर्णौ तौ पल्लवापीडधारिणौ ।
वनमालापरिक्षिप्तौ सालपोताविवोद्गतौ ।
अरविन्दकृतापीडौ रज्जुयज्ञोपवीतिनौ ।
शिक्यतुम्बधरौ वीरौ गोपवेणुप्रवादकौ ।
क्वचिद्धसन्तावन्योन्यं क्रीडमानौ क्वचिद्वने ।
पर्णशय्यासु संसुप्तौ क्वचिन्निद्रान्तरैषिणौ ।
तौ वत्सान्पालयन्तौ हि शोभयन्तौ महद्वनम् ।
चञ्चूर्यन्तौ रमन्तौ स्म राजन्नेवं तदा शुभौ ।

— (L. 740) $G_2$ महर्षि. $M_1$ चिंतयंस्तदा. — $M_1$ om. lines 741–743. — (L. 741) $T_1$ $G_{2.6}$ कृत्वा च (for कृत्यानि) and देवहितानि (for लोकहिताय). — (L. 742) $G_{2.5.6}$ स्वर्लोकं (for स्वं लोकं). $G_3$ देव. $G_{3.5}$ पुनर्गच्छस्व तेजसा. — (L. 743) $G_{2.6}$ ऋषिभिः (for मुनिभिः). $T_1$ $G_3$ त्रिदशेश्वरः; $G_{2.6}$ त्रिदिवं पुनः. — (L. 744) $M_1$ वरां (for पराम्). — $T_1$ $G_{5.6}$ om. lines 745–747. — (L. 745) $M_1$ °गृहे (for °कुले). — $G_2$ $M_1$ om. lines 746–747. — Lines 748–754 = (var.) Hari. 2. 6. 4–6. — (L. 749) $G_2$ संपरिष्वज्य. $G_3$ यमुनानदीं. — (L. 750) $T_1$ शिशुलीलास्; $G_{3.5.6}$ शिशुर्लीलां. $T_1$ $G_{2.5}$ स (for स्व-). — (L. 751) $T_1$ $G_{2.3.6}$ पादमूर्ध्वं. — (L. 752) $G_{2.6}$ दारयन्; $M_1$ चालयन् (for धारयन्). — (L. 753) $G_6$ ततोथैकेन (for तत्राथैकेन). $M_1$ पादयित्वा. — (L. 754) $G_{3.5}$ मातुः पयोधराकांक्षां. — (L. 755) Cf. Hari 2. 6. $13^{ab}$. $G_3$ शकटं पतितं; $G_5$ पतितं शकटं. — (L. 758) $G_3$ शयाने निहतः पक्षी. — $G_{2.6}$ om. line 760. — (L. 761) $G_3$ $M_1$ ततः कालेन महता. — (L. 762) = (var.) Hari. 2. 7. $1^{cd}$. $T_1$ $M_1$ विष्णुः (for कृष्णः). $M_1$ चापि (for चोभौ). $T_1$ रिंखणौ; $G_2$ रागिणौ; $G_{3.6}$ $M_1$ रंगिणौ. $G_{2.6}$ च बभूवतुः (for समपद्यताम्). — Lines 763–765 = (var.) Hari. 2. 7. $6^{c}$–$7^{d}$. — (L. 763) $G_{2.6}$ °किरणाक्रांतौ. — (L. 764) $G_{2.6}$ $M_1$ विसर्पंतौ च सर्वत्र. — (L. 766) $G_{2.6}$ स्पृष्ट्वा; $M_1$ घृष्टैः (for स्पृष्टौ). $G_6$ च तौ; $M_1$ व्रजे (for वने). — (L. 768) $G_2$ बाल- (for बालो). — (L. 769) $T_1$ गृह्यमाणस्तु (for ग्रस°). $G_{2.6}$ $M_1$ तदा (for ऽथ वै). — (L. 770) $G_6$ च (for [अ]थ). $G_{2.6}$ गोपिभिश्च निपीडि- ($G_6$ °बंधि)तः. — (L. 771) $G_{2.6}$ कर्मणा चार्जुनावुभौ. — Lines 773–785 = (var.) Hari. 2. 8. $1^{a}$–$7^{ab}$. — $T_1$ om. lines 774–776. — (L. 774) $G_6$ विषयाक्तौ (for सप्तवर्षौ). — $G_2$ om. the post. half of line 775 and the prior half of line 776. — (L. 777) $G_3$ पर्व° (for पर्ण°). — (L. 778) $G_{2.6}$ त्रिशीर्षाविव; $M_1$ निर्मुक्ता° (for उदीर्णा°). — (L. 779) $T_1$ $G_3$ मायूरांगज°; $G_2$ मधुरांगद°; $M_1$ मयूरांगद°. $G_3$ च (for तौ). — (L. 780) $M_1$ द्रुम° (for साल°). $G_3$ [उ]त्थितौ (for [उ]द्गतौ). — (L. 782) $G_{2.6}$ स शिक्यतुंबककरौ. $G_3$ गोपविणा°; $G_6$ गोपौ वेणु°. — (L. 783) $G_3$ महद्वने. — (L. 784) $G_3$ संतप्तौ; $G_5$ सुसुप्तौ. — (L. 785) $T_1$ $G_{2.5}$ महावनं. — (L. 786) $G_{2.3.6}$ $M_1$ रमेते (for रमन्तौ). $G_3$ तौ (for स).

ततो वृन्दावनं गत्वा वसुदेवसुतावुभौ ।
गोव्रजं तत्र कौन्तेय चारयन्तौ विजह्रतुः ।

Colophon.

भीष्मः ।

ततः कदाचिद्गोविन्दो ज्येष्ठं संकर्षणं विना ।
चचार तद्वनं रम्यं रम्यरूपो वरानन ।
काकपक्षधरः श्रीमाञ्श्यामः पद्मनिभेक्षणः ।
श्रीवत्सेनोरसा युक्तः शशाङ्क इव लक्ष्मणा ।
रज्जुयज्ञोपवीती स पीताम्बरधरो युवा ।
श्वेतगन्धेन लिप्ताङ्गो नीलकुञ्चितमूर्धजः ।
राजता बर्हिपत्रेण मन्दमारुतकम्पिना ।
क्वचिद्गायन्क्वचित्क्रीडन्क्वचिन्नृत्यन्क्वचिद्धसन् ।
गोपवेणुं स मधुरं कामं तदपि वादयन् ।
प्रह्लादनार्थं तु गवां क्वचिद्वनगतो युवा ।
गोकुले मेघकाले तु चचार द्युतिमान्प्रभुः ।
बहुरम्येषु देशेषु वनस्य वनराजिषु ।
तासु कृष्णो मुदं लेभे क्रीडया भरतर्षभ ।
स कदाचिद्वने तस्मिन्गोभिः सह परिव्रजन् ।
भाण्डीरं नाम दृष्ट्वाथ न्यग्रोधं केशवो महान् ।
तस्य छायानिवासाय मतिं चक्रे तदा प्रभुः ।
स तत्र वयसा तुल्यैर्वत्सपालैः सहानघ ।
रेमे स दिवसान्कृष्णः पुरा स्वर्गपुरे यथा ।
तं क्रीडमानं गोपालाः कृष्णं भाण्डीरवासिनः ।
रमयन्ति स्म बहवो मान्यैः क्रीडनकैस्तदा ।
अन्ये स्म परिगायन्ति गोपा मुदितमानसाः ।
गोपालाः कृष्णमेवान्ये गायन्ति स्म वनप्रियाः ।
तेषां स गायतामेव वादयामास केशवः ।
पर्णवाद्यान्तरे वेणुं तुम्बवीणां च तत्र वै ।
एवं क्रीडान्तरैः कृष्णो गोपालैर्विजहार सः ।
तेन बालेन कौन्तेय कृतं लोकहितं तदा ।
पश्यतां सर्वभूतानां वासुदेवेन भारत ।
ह्रदे नीपवने तत्र क्रीडितं नागमूर्धनि ।
शासयित्वा तु कालीयं सर्वलोकस्य पश्यतः ।
विजहार ततः कृष्णो बलदेवसहायवान् ।
धेनुको दारुणो दैत्यो राजन्रासभविग्रहः ।
तदा तालवने राजन्बलदेवेन वै हतः ।
ततः कदाचित्कौन्तेय रामकृष्णौ वनं गतौ ।
चारयन्तौ प्रवृद्धानि गोधनानि शुभाननौ ।
विहरन्तौ मुदा युक्तौ वीक्षमाणौ वनानि वै ।
क्ष्वेलयन्तौ प्रगायन्तौ विचिन्वन्तौ च पादपान् ।
नामभिर्व्याहरन्तौ च वत्सान्गाश्च परंतपौ ।
चेरतुर्लोकसिद्धाभिः क्रीडाभिरपराजितौ ।
तौ देवौ मानुषीं दीक्षां वहन्तौ सुरपूजितौ ।
तज्जातिगुणयुक्ताभिः क्रीडाभिश्चेरतुर्वनम् ।
ततः कृष्णो महातेजास्तदा गत्वा तु गोव्रजम् ।
गिरियज्ञं तमेवैष प्रकृतं गोपदारकैः ।

$G_6$ तथा उभौ (for तदा शुभौ). — (L. 787) $G_2$ reads line 787 after line 790. $G_2$ वसुदेवसुतो बली. — (L. 788) $G_{2.6}$ $M_1$ गोकुलं (for गोव्रजं). — Colophon. *Adhy. no.*: $T_1$ $G_{2.3.5.6}$ $M_1$ 57. — Lines 789–792 = (var.) Hari. 2 11. 1–2. — (L. 790) $G_2$ स स्वरूप-; $G_6$ स सुरूपो (for रम्यरूपो). — (L. 791) $G_6$ श्यामः (for श्रीमान्) and फुल्ल- (for श्यामः). — (L. 792) $G_2$ लक्ष्मणः; $G_6$ लक्षणः. — (L. 793) $M_1$ च (for स). — (L. 794) $G_{2.3.6}$ $M_1$ श्वेतचंदन($G_3$ °गंधेन)दिग्धांगो. $T_1$ $G_5$ नीलकुंजित°. — Lines 795–800 = (var.) Hari. 2. 11. $10^c$–$13^d$. — (L. 795) $G_3$ रराज बर्हपत्रेण. — (L. 797) $G_3$ सुमधुरं. — (L. 798) $G_6$ प्रचारणार्थं (for प्रह्लादनार्थं). $G_{2.6}$ $M_1$ च (for तु). — (L. 799) $T_1$ मति° (for द्युति°). $G_3$ विभुः (for प्रभुः). — Lines 801–802 = (var.) Hari. 2. 11. $17^c$–$18^b$. — (L. 801) $G_{2.6}$ मुदा युक्तः (for मुदं लेभे). $G_{2.6}$ क्रीडयन्; $M_1$ लीलया (for क्रीडया). — Lines 803–812 = (var.) Hari. 2. 11. 23–27. — (L. 803) $G_6$ पृथुं (for महान्). — (L. 804) $G_{2.6}$ $M_1$ तच्छायायां ($G_2$ तस्य छाये) मतिं चक्रे, and निवासाय (for मतिं चक्रे). $G_6$ महा- (for तदा). — (L. 805) $G_{2.3.6}$ तदा (for सह). — (L. 806) $M_1$ भगवान् (for दिवसान्). $G_6$ वृषा (for पुरा). $G_{2.6}$ $M_1$ स्वर्गगतो (for °पुरे). — (L. 809) $T_1$ अन्यैः. $G_2$ सं- (for स्म). — (L. 810) $T_1$ मनप्रियाः. — (L. 811) $T_1$ स गाथताम्; $M_1$ संगायताम् (for स गाय°). — (L. 812) $T_1$ $G_{2.3}$ स्तं($T_1$ स्तुं)बवीणां. — (L. 813) $G_2$ एवं क्रुद्धांतरतरैः; $G_6$ एवं क्रीडांतररतैः. $G_{2.6}$ कृष्णो गोपाञ्जहार सः. — (L. 816) $G_3$[ऽ]तिपतिता; $M_1$ नीलवने (for नीप°). $T_1$ $G_5$ तात (for तत्र). $G_6$ ह्रदे स निपपाताशु (for the prior half). $G_2$ क्रीडिता; $G_6$ तत्क्रीडन्; $M_1$ क्रीडित्वा (for क्रीडितं). — (L. 817) $G_6$ प्रशासयित्वा; $M_1$ ताडयित्वा तु. — (L. 819) $G_5$ दानवो (for दारुणो). $G_2$ वृषभ° (for रासभ°). — (L. 820) $M_1$ बले (for बल-). $T_1$ हतं. — $G_{2.6}$ read lines 821–828 after line 855; $G_3$ reads lines 821–827 after the insertion, following line 855. — Lines 822–825 = (var.) Hari. 2. 14. 2–3. — (L. 823) $G_{2.3.6}$ $M_1$ च (for वै). — (L. 824) $T_1$ (second time) $G_{2.6}$ वीक्षमाणौ (for विचिन्वन्तौ). — Lines 826–828 = (var.) Hari. 2. 14. $7^c$–$8^d$. — (L. 827) $G_3$ तां देव-; $M_1$ तौ देव- (for तौ देवौ). — (L. 829) $M_1$ महाबाहुस् (for °तेजास्). $G_2$ ततो; $G_3$ स्थित्वा (for तदा). — (L. 830)

बुभुजे पायसं शौरिरीश्वरः सर्वभूतकृत् ।
तं दृष्ट्वा गोपकाः सर्वे कृष्णमेव समर्चयन् ।
पूज्यमानस्ततो गोपैर्दिव्यं वपुरधारयत् ।
धृतो गोवर्धनो नाम सप्ताहं पर्वतस्तदा ।
शिशुना वासुदेवेन गवार्थमरिमर्दन ।
क्रीडमानस्तदा कृष्णः कृतवान्कर्म दुष्करम् ।
तदद्भुतमिवात्रासीत्सर्वलोकस्य भारत ।
देवदेवः क्षितिं गत्वा कृष्णं दृष्ट्वा मुदान्वितः ।
गोविन्द इति तं ह्युक्त्वा ह्यभ्यषिञ्चत्पुरंदरः ।
इत्युक्त्वाश्लिष्य गोविन्दं पुरुहूतोऽभ्ययाद्दिवम् ।
अथारिष्ट इति ख्यातं दैत्यं वृषभविग्रहम् ।
जघान तरसा कृष्णः पशूनां हितकाम्यया ।
केशिनं नाम दैतेयं राजन्वै हयविग्रहम् ।
तथा वनगतं पार्थ गजायुतबलं हयम् ।
प्रगृह्य भोजपुत्रस्य जघान पुरुषोत्तमः ।
आन्ध्रं मल्लं च चाणूरं निजघान महासुरम् ।
सुनामानममित्रघ्नः सर्वसैन्यपुरस्कृतम् ।
मृगरूपेण गोविन्दं त्रासयामास भारत ।
बलदेवेन चायत्तात्समाजे मुष्टिको हतः ।
त्रासितश्च तदा कंसः स हि कृष्णेन भारत ।
ऐरावतं युयुत्सन्तं मातङ्गानामिवर्षभम् ।
कृष्णः कुवलयापीडं हतवांस्तस्य पश्यतः ।
हत्वा कंसममित्रघ्नः सर्वेषां पश्यतां तदा ।
अभिषिच्योग्रसेनं तं पित्रोः पादमवन्दत ।
एवमादीनि कर्माणि कृतवान्वै जनार्दनः ।
एवं बाल्येऽपि गोपालैः क्रीडाभिस्तौ विजह्रतुः ।

Colophon.

भीष्मः ।

ततस्तौ जग्मतुस्तात गुरुं सान्दीपनिं पुनः ।
गुरुशुश्रूषया युक्तौ धर्मज्ञौ धर्मचारिणौ ।
व्रतमुग्रं महात्मानौ विचरन्ताववन्तिषु ।
अहोरात्रैश्चतुःषष्ट्या षडङ्गं वेदमापतुः ।
लेख्यं च गणितं चोभौ प्राप्नुतां यदुनन्दनौ ।
गान्धर्ववेदं चित्रं च सकलं समवापतुः ।
हस्तिशिक्षाश्वशिक्षां च द्वादशाहेन चापतुः ।
तावुभौ जग्मतुर्वीरौ गुरुं सान्दीपनिं पुनः ।
धनुर्वेदचिकीर्षार्थं धर्मज्ञौ धर्मचारिणौ ।
ताविष्वस्त्रवराचार्यमभिगम्य प्रणम्य च ।
तेन तौ सत्कृतौ राजन्विचरन्ताववन्तिषु ।
पञ्चाशद्भिरहोरात्रैर्दशाङ्गं सुप्रतिष्ठितम् ।
सरहस्यं धनुर्वेदं सकलं ताववापतुः ।
दृष्ट्वा कृतार्थौ विप्रेन्द्रो गुर्वर्थे तावचोदयत् ।
अयाचतार्थं गोविन्दं ततः सान्दीपनिर्विभुः ।
मम पुत्रः समुद्रेऽस्मिंस्तिमिना चापवाहितः ।

G2.6 प्रवृत्तं; G3 प्रक्रांतं. — (L. 831) T1 G3 °धृक्; G5 °दृक् (for °कृत्). — (L. 832) G5 गोपगाः. G2.6 समर्पयन्. — (L. 833) G2.6 तदा (for ततो). G2 देवैर् (for गोपैर्). — (L. 834) G2.6 पर्वतो (G6 वर्षतो) महान् (for पर्वतस्तदा). — (L. 835) G6 गोपार्थम् (for गवा°). G2 गोपालार्थेमरिंदम (for the post. half). — (L. 837) G2.6 अतीव (for इवात्र). — (L. 838) G2 गत्वा; G6 नत्वा (for दृष्ट्वा). M1 मुदान्वितं. — (L. 839) G2 युक्त्वा; G6 मत्वा (for ह्युक्त्वा). G5 अभिषिंचन्: M1 अभ्य° (for ह्यभ्य°). — (L. 840) G5.6 [आ]श्लिष्य (for [आ]श्लिष्य). — (L. 841) T1 G2.5 ऋषभ- (for वृषभ-). — (L. 843) G2.6 केशि नाम (G6 केशी नाम) ततो राजन्दैत्यं तुरगविग्रहं. — (L. 845) G2 प्रहितां; G6 प्रेषितं; M1 प्रग्रहं. G2.6 भोजपुत्रेण (for °पुत्रस्य), and मधुसूदनः (for पुरुषोत्तमः). — (L. 846) T1 G2.6 अथ (for आन्ध्रं). M1 आगृह्य मल्लं चाणूरं. — (L. 847) G3 सुदामानम्. M1 अमित्रघ्नं. G6 सर्वसैन्यैः (for °सैन्य-). — (L. 848) Om. in T1 G2.6. M1 वृक° (for मृग°), and त्रासयानं तु भारत. — (L. 849) G2.5 चायत्तः; M1 चायस्तः. T1 यष्टिको. — (L. 850) G2 ताडितश्च; M1 शासितश्च. T1 G2.6 स ह (for स हि). — G2.6 M1 om. lines 851–854. — (L. 853) T1 अमित्रघ्न. — (L. 855) G3 एवमन्यानि. G2 कृतान्येव (for कृतवान्वै). — After line 855, T1 repeats lines 821–828; while G3.5 ins.:

उवास कतिचित्तत्र दिनानि मद्रलायुधः ।

— (L. 856) Om. in G5. M1 तु (for ऽपि). T1 गोपालाः. G3 क्रीडयापि; G6 क्रीडासक्तौ (for °भिस्तौ). — Colophon. *Adhy. no.*: T1 G2.3.5.6 M1 58. — (L. 857) T1 G6 om. the ref. G2.6 तत्र (for तात). G3 सांदीपिनं. T1 प्रभुं (for पुनः). — (L. 858) G2 गुरुं (for गुरु-). T1 M1 सर्वज्ञौ (for धर्मज्ञौ). — (L. 859) G5 [अ]निषुतां (for [अ]वन्तिषु). — (L. 860) = (var.) Hari 2.33. 6cd. G3 °रात्र्या; M1 °रात्र- (for °रात्रैश्च). — (L. 862) G6 वेदं (for चित्रं). — (L. 863) G2 हस्त- (for हस्ति-). M1 -शिक्षे (for -शिक्षां). G6 हस्तिशिक्षामश्वशिक्षां. — (L. 864) = (var.) line 857. Om. in G6. G3 उभौ (for गुरुं). G2 सांदीपनं; G3 °पिनं. — (L. 865) T1 °जिहीर्षार्थं (for °चिकीर्षार्थं). T1 G3 M1 सर्वज्ञौ (for धर्मज्ञौ). — (L. 866) Om. in G6. T1 G3 M1 ताविष्वास° (for ताविष्वस्त्र°). T1 च माधवौ (for प्रणम्य च). — (L. 867) T1 G2 [इ]मौ (for तौ). G6 व्रतमुग्रं महात्मानौ (for the prior half). — (L. 870) G2 कृतार्थौ. — (L. 871) G2.6 तदा (for ततः). T1 G2 सांदीपिनिर्. T1 G2.3.6 विभुं; M1 प्रभुं. — (L. 872) G2 चोपहारितः; G6 चोपघातितः (for चाप-

पुत्रमानय भद्रं ते भक्षितं तिमिना मम ।
आर्ताय गुरवे तत्र प्रतिशुश्राव दुष्करम् ।
अशक्यं त्रिषु लोकेषु कर्तुमन्येन केनचित् ।
यश्च सान्दीपनेः पुत्रं जघान भरतर्षभ ।
सोऽसुरः समरे ताभ्यां समुद्रे विनिपातितः ।
ततः सान्दीपनेः पुत्रः प्रसादादमितौजसः ।
दीर्घकालं गतः प्रेतः पुनरासीच्छरीरवान् ।
तदशक्यमचिन्त्यं च दृष्ट्वा सुमहदद्भुतम् ।
सर्वेषामेव भूतानां विस्मयः समजायत ।
ऐश्वर्याणि च सर्वाणि गवाश्वं च धनानि च ।
सर्वं तदुपजह्राते गुरवे रामकेशवौ ।
गदापरिघयुद्धेषु सर्वास्त्रेषु च केशवः ।
परमां मुख्यतां प्राप्तः सर्वलोकेषु विश्रुतः ।
कश्च नारायणादन्यः सर्वरत्नविभूषितम् ।
रथमादित्यसंकाशमातिष्ठेत शचीपतेः ।
तस्य चाप्रतिमो यन्ता वज्रपाणेः प्रियः सखा ।
मातलिः संगृहीता स्यादन्यत्र पुरुषोत्तमात् ।
भोजराजतनूजोऽपि कंसस्तात युधिष्ठिर ।
अस्त्रज्ञाने बले वीर्ये कार्तवीर्यसमोऽभवत् ।
तस्य भोजपतेः पुत्राद्भोजराजन्यवर्धनात् ।
उद्विजन्ते स्म राजानः सुपर्णादिव पन्नगाः ।
चित्रकार्मुकनिस्त्रिंशविमलप्रासयोधिनः ।
शतं शतसहस्राणि पादातास्तस्य भारत ।
अष्टौ शतसहस्राणि शूराणामनिवर्तिनाम् ।
अभवन्भोजराजस्य जाम्बूनदमयध्वजाः ।
रुक्मकाञ्चनकक्ष्यास्तु गजास्तस्य युधिष्ठिर ।
तावन्त्येव सहस्राणि गजानामनिवर्तिनाम् ।
ते च पर्वतसंकाशाश्चित्रध्वजपताकिनः ।
बभूवुर्भोजराजस्य नित्यं प्रमुदिता गजाः ।
स्वलंकृतानां शीघ्राणां करेणूनां युधिष्ठिर ।
अभवद्भोजराजस्य द्विस्तावद्धि महद्बलम् ।
षोडशाश्वसहस्राणि किंशुकाभानि तस्य वै ।
अपरस्तु महाव्यूहः किशोराणां युधिष्ठिर ।
आरोहवरसंपन्नो दुर्धर्षः केनचिद्बलात् ।
स च षोडशसाहस्रः कंसभ्रातृपुरःसरः ।
सुनामा सर्वतस्त्वेनं स कंसं पर्यपालयत् ।
य आसन्सर्ववर्णास्तु हयास्तस्य युधिष्ठिर ।
स गणो मिश्रको नाम षष्टिसाहस्र उच्यते ।
कंसरोषमहावेगां ध्वजानूपमहाद्रुमाम् ।
मत्तद्विपमहाग्राहां वैवस्वतवशानुगाम् ।
शस्त्रजालमहाफेनां सादिवेगमहाजलाम् ।
गदापरिघपाठीनां नानाकवचशैवलाम् ।
रथनागमहावर्तां नानारुधिरकर्दमाम् ।
चित्रकार्मुकनिस्त्रिंशां रथाश्वकलिलह्रदाम् ।

वाहितः). — (L. 873) $T_1$ कृतकृत्योसि तेन वै (for the post. half). — (L. 874) $G_6$ दुष्कृतं (for दुष्करम्). — (L. 875) $G_{2.6}$ $M_1$ अशक्यं सर्वभूतेषु. — (L. 876) $T_1$ यस्तु (for यश्च). $G_{2.5}$ सांदीपिनेः. $G_2$ $M_1$ पुरुषर्षभ (for भरत°). — (L. 877) $G_6$ सागरे (for समरे). $T_1$ $G_5$ $M_1$ पाताळे; $G_6$ समरे (for समुद्रे). $T_1$ विनिवेशितः (for °पातितः). $G_3$ पार्वतेन निपातितः. — Lines 878–881 = (var.) Hari. 2. 33. 21ᶜ–23ᵇ. — (L. 878) $G_{2.5}$ सांदीपिनेः. — (L. 879) $G_{2.5.6}$ $M_1$ दीर्घकालकृत($M_1$ °तः)प्रेतः. — (L. 880) $G_3$ दृष्ट्वा तु सुमहाद्भुतं. — (L. 881) $G_3$ समपद्यत (for °जायत). — (L. 882) $G_{2.3.6}$ $M_1$ आसुराणि (for ऐश्वर्याणि). — (L. 884) $G_{2.5.6}$ °युद्धे च (for °युद्धेषु). — After line 885, $T_1$ ins.:

युधिष्ठिरः ।
कथं कंसं तु बलवान्बालस्त्वेको ह्यशिक्षितः ।
कंसस्तु शस्त्रास्त्रबलो भोजवृष्ण्यन्धकैर्वृतः ।
भीष्मः ।
हते कुवलयापीडे कृष्णेन मधुघातिना ।
रथमादित्यसंकाशं प्रेषयामास मातलिः ।
शस्त्रैः सर्वैः परिवृतमन्यैश्च विविधायुधैः ।
तमारुह्य रथं श्रीमान्धनुरादाय वीर्यवान् ।

— (L. 886) $G_6$ क्व च (for कश्च). — (L. 887) $G_5$ यथा सादित्यमाकाशम् (for the prior half). $T_1$ $G_3$ आतिष्ठेच्च (for °ष्ठेत). — (L. 888) $G_5$ $M_1$ कस्य (for तस्य). — (L. 889) $G_{2.3}$ संगृहीतः. — (L. 890) $G_{2.6}$ भोजराजात्मजो वापि. — (L. 891) $G_2$ अस्त्रजाते; $G_6$ °जाले. $M_1$ युधि (for ऽभवत्). — (L. 893) $M_1$ उद्विजंति. — (L. 895) $T_1$ $G_5$ पदातीनां तु भारत. — (L. 896) $M_1$ रथानाम् (for शूराणाम्). — $G_3$ om. lines 897–899. — (L. 898) $T_1$ $G_5$ स्फुरत्-; $M_1$ रुप्य- (for रुक्म-). $G_{2.6}$ रथास् (for गजास्). $T_1$ $G_5$ तत्र (for तस्य). — $G_2$ om. (hapl.) lines 899–902. — (L. 901) $M_1$ भोजपुत्रस्य. $G_3$ नित्य-. — (L. 902) $G_6$ हि भारत (for युधिष्ठिर). — (L. 903) $G_{2.3}$ $M_1$ भोजपुत्रस्य. $G_6$ द्विस्तावद्भिर्. — (L. 905) $G_6$ अप्रसूत- (for अपरस्तु). $M_1$ किशोरीणां. — (L. 907) $G_2$ °साहस्रं. $M_1$ कंसभ्रात्रा पुरस्कृतः. — (L. 908) $T_1$ $G_{3.5}$ सदृशस्तेन ($G_3$ °स्त्वेनं) (for सर्वतस्त्वेनं). $M_1$ कंसं संपर्यपालयत्. — (L. 909) $T_1$ अभवन्; $M_1$ आसन्वै (for य आसन्). $G_{2.6}$ आसन्गंधर्ववर्णास्तु. — (L. 910) $G_2$ मुष्टिसाहस्र; $G_6$ षष्टिसाहस्रम्. — (L. 911) $T_1$ °वेगाद्; $G_2$ $M_1$ °वेगान् (for °वेगां). — (L. 912) $T_1$ $G_{3.5}$ $M_1$ °वशावहां ($G_5$ °हं). — (L. 913) $G_2$ °ध्वजां; $G_6$ $M_1$ °जवां (for °जलाम्). — (L. 916)

महास्थनदीं घोरां योधावर्तननिस्वनाम् ।
को वा नारायणादेकः कंसहन्ता युधिष्ठिर ।
एष शक्ररथे तिष्ठंस्तान्यनीकानि भारत ।
व्यधमदुग्रसेनपुत्रस्य महाभ्राणीव मारुतः ।
तं सभास्थं सहामात्यं हत्वा कंसं सहान्वयम् ।
मानयामास मानार्हां देवकीं ससुहृद्गणाम् ।
यशोदां रोहिणीं चैव अभिवाद्य पुनः पुनः ।
उग्रसेनं च राजानमभिषिच्य जनार्दनः ।
अर्चितो यदुमुख्यैस्तु भगवान्वासवानुजः ।
ततः पार्थिवमायान्तं सहितं सर्वराजभिः ।
सरस्वत्यां जरासन्धमजयत्पुरुषोत्तमः ।

Colophon.

भीष्मः ।

शूरसेनपुरं त्यक्त्वा सर्वयादवनन्दनः ।
द्वारकां भगवान्कृष्णः प्रत्यपद्यत केशवः ।
प्रत्यपद्यत यानानि रत्नानि च बहूनि च ।
यथार्हं पुण्डरीकाक्षो नैरृतान्प्रत्यपद्यत ।
तत्र विघ्नं चरन्ति स्म दैतेयाः सह दानवैः ।
ताञ्जघान महाबाहुर्वरदत्तान्महासुरान् ।
स विघ्नमकरोत्तत्र नरको नाम नैरृतः ।
त्रासनः सुरसंघानां विदितो वः प्रभावतः ।
स भूम्यां मूर्तिलिङ्गस्थः सर्वदेवासुरान्तकः ।
मानुषाणामृषीणां च प्रतीपमकरोत्तदा ।
त्वष्टुर्दुहितरं भौमः कशेरुमगमत्तदा ।
गजरूपेण जग्राह रुचिराङ्गीं चतुर्दशीम् ।
प्रमथ्य च जहारैनां हृत्वा च नरकोऽब्रवीत् ।
नष्टशोकभयाबाधः प्राग्ज्योतिषपतिस्तदा ।

नरकः ।

यानि देवमनुष्येषु रत्नानि विविधानि च ।
बिभर्ति च मही कृत्स्ना सागरेषु च यद्वसु ।
अद्यप्रभृति तद्देवि सहिताः सर्वनैरृताः ।
तवैवोपहरिष्यन्ति दैत्याश्च सह दानवैः ।
एवमुत्तमरत्नानि बहूनि विविधानि च ।
स जहार तदा भौमः स्त्रीरत्नानि च भारत ।
गन्धर्वाणां च याः कन्या जहार नरको बलात् ।
याश्च देवमनुष्याणां सप्त चाप्सरसां गणाः ।
चतुर्दशसहस्राणामेकविंशच्छतानि च ।
एकवेणीधराः सर्वाः सतां मार्गमनुव्रताः ।
तासामन्तःपुरं भौमोऽकारयन्मणिपर्वते ।
औदकायामदीनात्मा मुरस्य विषयं प्रति ।
ताश्च प्राग्ज्योतिषो राजा मुरस्य दश चात्मजाः ।
नैरृताश्च यथा मुख्याः पालयन्त उपासते ।
स एष तपसः पारे वरदत्तो महासुरः ।
अदितिं धर्षयामास कुण्डलार्थं युधिष्ठिर ।
न चासुरगणैः सर्वैः सहितैः कर्म तत्पुरा ।
कृतपूर्वं महाघोरं यदकार्षीन्महासुरः ।
यं मही सुषुवे देवी यस्य प्राग्ज्योतिषं पुरम् ।
विषयान्तपालाश्चत्वारो यस्यासन्युद्धदुर्मदाः ।

$G_{2.3.6}$ °निर्त्रिंश- (for °निर्त्रिंशां). $T_1$ °कलिलाह्वदां; $G_6$ °कललिप्रदां. — (L. 917) $M_1$ चक्रे (for घोरां). $G_2$ यौधावर्तनिवर्तनां; $G_5$ यौधावर्तननिस्वनां; $G_6$ घोषवर्तन°. — (L. 919) $G_2$ कंसरथे. — (L. 920) $G_{3.6}$ $M_1$ °राज्यस्य (for °पुत्रस्य). — (L. 921) $T_1$ $G_2$ महामात्यं (for सहा°). $T_1$ सहानुगं (for °न्वयम्). — (L. 922) $G_{2.6}$ आनयामास. — Colophon. *Adhy. no.:* $T_1$ $G_{2.3.5.6}$ $M_1$ 59. — Lines 928–985 = (var.) Hari. 2. 63. 2–29. — (L. 928) $G_{2.6}$ गत्वा; $M_1$ हित्वा (for त्यक्त्वा). — (L. 929) $G_{3.5}$ विष्णुः (for कृष्णः). $M_1$ वीर्यवान् (for केशवः). $T_1$ $G_{2.6}$ द्वारवत्यां स भगवान्कृष्णः प्रत्यवपद्यत ($G_6$ °ते). — $T_1$ om. (hapl.) lines 930–931. — (L. 930) $M_1$ रत्नानि (for यानानि), and विविधानि (for रत्नानि च). $G_{2.6}$ वीर्यवान्प्रत्यपद्यंत रत्नानि विविधानि च. — (L. 931) $G_2$ यथा हि (for °थार्हं). $G_{2.6}$ प्रत्यपादयत्; $M_1$ प्रतिपालयन्. — (L. 932) $T_1$ $G_2$ सर्वदानवैः. — (L. 934) $G_5$ नैरृतः; $G_6$ नामतः. — (L. 935) $G_6$ त्रासयन्. $T_1$ यः (for वः). — (L. 936) $T_1$ भूम्या; $M_1$ भूम्य-. $G_3$ मूर्ति (for मूर्ति-). $T_1$ $G_2$ स तु (for सर्व-). $G_2$ -देव- (for -देवा-). $M_1$ सर्वदेवनरांतकः. — (L. 938) $G_2$ करोरुम्. $M_1$ कुशेशयगतां तदा. — (L. 940) $G_5$ जहारैतां. $G_3$ भूत्वा; $G_6$ हृतां (for हृत्वा). — (L. 941) $G_6$ नष्टशोकभयभ्रांतः. $T_1$ $G_{2.6}$ $M_1$ °गतस् (for °पतिस्). — After line 942, $G_2$ reads line 948 repeating it in its proper place. — (L. 943) $G_2$ स (for च). $G_{2.3.6}$ महीं कृत्स्नां. $G_{2.6}$ नगरेषु (for सागरेषु). — (L. 944) $T_1$ तां देवे; $G_{3.5}$ तं देवी; $G_3$ तद्देवी; $G_6$ तां देवी. — (L. 945) $G_2$ मह्यैवोप°; $G_6$ नयैवोप°. — (L. 946) $G_2$ उत्तर° (for उत्तम°). $G_{3.6}$ $M_1$ विविधानि बहूनि ($M_1$ वसूनि) च. — (L. 947) $G_3$ भूमौ (for भौमः). $G_6$ स्त्रीरत्नानि धनानि च. — (L. 949) $G_2$ स च साप्सरसां गणैः. — (L. 950) $G_{3.5}$ $M_1$ °सहस्राणि. $G_{3.5}$ चैक° (for एक°). — (L. 952) $T_1$ भूमौ; $G_3$ भौमैः. — (L. 953) $G_6$ तस्मिन्नद्रावदीनात्मा. — (L. 954) $G_{2.6}$ तास (for ताश्च). $G_2$ राजन् (for राजा). — (L. 955) $T_1$ नैरृताश्च. $G_{2.6}$ बाधयंत (for पाल°). — (L. 956) $G_6$ एव (for एष). $G_{2.3.6}$ तमसः. $T_1$ वरदृप्तो (for °दत्तो). $G_{2.6}$ $M_1$ महासुरः (for महीसुरः). — (L. 958) $G_{2.6}$ यत्पुरा. — (L. 959) $T_1$ यदाकार्षीन्. — (L. 961) Hypermetric! $G_6$ चत्वारो बलविख्याता (for the

आदेवयानमावृत्य पन्थानं पर्यवस्थिताः ।
त्रासनाः सुरसंघानां विरूपैः राक्षसैः सह ।
हयग्रीवो निसुम्भश्च घोरः पञ्चजनस्तथा ।
सुरः पुत्रसहस्रैश्च वरदत्तो महासुरः ।
तद्वधार्थं महाबाहुरेष चक्रगदासिधृक् ।
जातो वृष्णिषु देवक्यां वासुदेवो जनार्दनः ।
तस्यास्य पुरुषेन्द्रस्य लोकप्रथिततेजसः ।
निवासो द्वारका तात विदितो वः प्रधानतः ।
अतीव हि पुरी रम्या द्वारका वासवक्षयात् ।
अति वै राजते पृथ्व्यां प्रत्यक्षं ते युधिष्ठिर ।
तस्मिन्देवपुरप्रख्ये सा सभा वृष्ण्युपाश्रया ।
या दाशार्हीति विख्याता योजनायतविस्तृता ।
तत्र वृष्ण्यन्धकाः सर्वे रामकृष्णपुरोगमाः ।
लोकयात्रामिमां कृत्स्नां परिरक्षन्त आसते ।
तत्रासीनेषु सर्वेषु कदाचिद्भरतर्षभ ।
दिव्यगन्धा ववुर्वाताः कुसुमानां च वृष्टयः ।
ततः सूर्यसहस्राभस्तेजोराशिर्महाद्भुतः ।
मुहूर्तमन्तरिक्षेऽभूत्ततो भूमौ प्रतिष्ठितः ।
मध्ये तु तेजसस्तस्य पाण्डरं गजमास्थितः ।
वृतो देवगणैः सर्वैर्वासवः प्रत्यदृश्यत ।
रामकृष्णौ च राजा च वृष्ण्यन्धकगणैः सह ।
उत्पत्य सहसा तस्मै नमस्कारमकुर्वत ।
सोऽवतीर्य गजात्तूर्णं परिष्वज्य जनार्दनम् ।
सस्वजे बलदेवं च राजानं च तमाहुकम् ।
उद्धवं वसुदेवं च विकद्रुं च महामतिम् ।
प्रद्युम्नसाम्बनिशठानिरुद्धं ससात्यकिम् ।
गदं सारणमक्रूरं भानुझिल्लिविडूरथान् ।
कृतवर्माचारुदेष्णौ दाशार्हाणां पुरोगमान् ।
परिष्वज्य च दृष्ट्वा च भगवान्भूतभावनः ।
वृष्ण्यन्धकमहामात्रान्परिष्वज्याथ वासवः ।
प्रगृह्य पूजां तैर्दत्तां भगवान्पाकशासनः ।
सोऽदितेर्वचनात्तात कुण्डलार्थे जनार्दन ।
उवाच परमप्रीतो जहि भौममिति प्रभो ।

Colophon.

भीष्मः ।

तमुवाच महाबाहुः प्रियमाणो जनार्दनः ।
निहत्य नरकं भौममाहरिष्यामि कुण्डले ।
एवमुक्त्वा तु गोविन्दो राममेवाभ्यभाषत ।
प्रद्युम्नमनिरुद्धं च साम्बं चाप्रतिमं बले ।
एतांश्चोक्त्वा तदा तत्र वासुदेवो महायशाः ।
अथारुह्य सुपर्णं वै शङ्खचक्रगदासिधृत् ।
ययौ तदा हृषीकेशो देवानां हितकाम्यया ।
तं प्रयान्तममित्रघ्नं देवाः सहपुरंदराः ।
पृष्ठतोऽनुययुः प्रीताः स्तुवन्तो विष्णुमच्युतम् ।
उग्रान्रक्षोगणान्हत्वा नरकस्य महासुरान् ।
क्षुरान्तान्मौरवान्पाशान्षट्सहस्रं ददर्श सः ।

prior half). — (L. 962) $M_1$ आ देवयानादावृत्य. — (L. 963) $G_3$ त्रासनं. $G_6$ तैर्नानासुरसंघैश्च (for the prior half). — (L. 964) $G_{2.6}$ निकुंभश्च; $G_5$ °शुंभश्च; $M_1$ °सुंदश्च. — (L. 967) $G_{2.3.5}$ $M_1$ वसुदेवाज्. — (L. 968) $T_1$ $G_{2.3}$ $M_1$ लोके (for लोक-). — (L. 969) $G_{2.6}$ तत्र (for तात). — (L. 971) $G_{2.6}$ अतीव (for अति वै). $G_{2.6}$ रा($G_6$ भ्रा)जमाना सा; $G_3$ राजमुद्धृत्य; $M_1$ राजमप्यृध्या (for राजते पृथ्व्यां). $G_2$ प्रत्यक्षस्ते; $G_6$ [आ]ध्यस्ता तेन (for प्रत्यक्षं ते). — (L. 972) $T_1$ वृष्ण्यपाश्रया; $G_2$ वृष्णिपाश्रया; $G_6$ वृष्ण्यधिष्ठिता. — (L. 973) $G_2$ सुधर्मेति च विख्याता; $G_3$ $M_1$ सुदाशार्हे($M_1$ °र्हा)ति वि°; $G_6$ सुधर्मा इति वि°. $M_1$ दशयोजनविस्तृता. — (L. 981) $T_1$ $G_6$ ततो (for वृतो). — (L. 983) $G_2$ उत्पुत्य (for उत्पत्य). $T_1$ देवान्; $G_2$ $M_1$ देवे (for तस्मै). $G_6$ उत्पत्य सहदेवेन. — (L. 986) $G_{2.3}$ $M_1$ वसुदेवमुद्धवं च; $G_5$ वसुदेवोद्धवौ चैव. $G_6$ वितद्रुं च महारथं (for the post. half). — (L. 987) $G_6$ प्रद्युम्नः सांबनिशठौ. $G_2$ ससात्यकान्; $G_3$ च सात्यकिं; $G_6$ ससात्यकं. — (L. 988) $G_{2.5}$ भानुझल्लि°; $G_6$ भानुमंतं सुदेष्णकं. — (L. 989) $G_2$ $M_1$ कृतवर्मचारुदेष्ण- ($M_1$ °ष्णाद्); $G_6$ कृतवर्मा चारुदेष्ण-. $G_{2.6}$ दा($G_6$ द)शार्हादि-; $G_5$ दशार्हाणां; $M_1$ [आ]गावह. — (L. 990) $T_1$ भगवान्देवकीसुतः. — (L. 991) $G_3$ °महामात्यान्. — (L. 993) $G_3$ राजन् (for तात). $G_6$ कुंडलार्थं. — (L. 994) $G_{2.6}$ भोजं (for भौमम्). $G_2$ जनेश्वर; $G_6$ $M_1$ नरेश्वर ($G_6$ °रः) (for इति प्रभो). $T_1$ विनयावनताननः (for the post. half). — After line 994, $T_1$ ins.:

इन्द्रः ।

अदित्या चोदितः कृष्ण तव मात्राहमागतः ।
कुण्डले ह्याहृते तत्र भौमेन नरकेण च ।
तं देवशब्दवाच्यं तु लोकेऽस्मिन्मधुसूदन ।
तस्माज्जहि महाभाग भूमिपुत्रं नरेश्वर ।

— Colophon. *Adhy. no.:* $T_1$ $G_{2.3.5.6}$ $M_1$ 60. — (L. 995) $G_6$ om. the ref. $G_6$ भ्रिय° (for प्रिय°). — (L. 997) $G_6$ [अ]थ (for तु). — (L. 998) $T_1$ प्रद्युम्नं चानिरुद्धं च. $G_6$ सांबमप्रतिमं बले. — (L. 999) $G_{2.6}$ $M_1$ तथा (for तदा). $G_2$ महामतिः; $G_3$ जनार्दनः; $G_6$ महाबलः (for °यशाः). — (L. 1000) $M_1$ °गदाधरः. — (L. 1001) $M_1$ तत्र (for तदा). — (L. 1003) $T_1$ पृष्ठतो न ययुः प्रीत्या; $G_2$ °तोन्वययुः प्रीताः. $T_1$ अव्ययं (for अच्युतम्). — (L. 1004) = (var.) Hari. 2. 63. $56^{cd}$. $T_1$ अग्रान्; $G_3$ $M_1$ सोग्रान्; $G_5$ सोग्र्यान् (for उग्रान्). $M_1$ पुरस्सरान् (for महासुरान्). — (L. 1005) = (var.) Hari. 2. 63. $46^{cd}$. $G_6$ सुरांतान् (for क्षुरान्तान्). $T_1$ $G_{3.5}$ $M_1$ षट्सहस्रान्.

संछिद्य पाशाञ्शस्त्रेण मुरं हत्वा सहान्वयम् ।
शिलासंघानतिक्रम्य निशुम्भमवपोथयत् ।
यः सहस्रसमस्त्वेकः सर्वान्देवानयोधयत् ।
तं जघान महावीर्यं हयग्रीवं महाबलम् ।
अपारतेजा दुर्धर्षः सर्वयादवनन्दनः ।
मध्ये लोहितगङ्गायां भगवान्देवकीसुतः ।
औदकायां विरूपाक्षं जघान मधुसूदनः ।
पञ्च पञ्चजनान्घोरान् नरकस्य महासुरान् ।
ततः प्राग्ज्योतिषं नाम दीप्यमानमिव श्रिया ।
पुरमासादयामास तत्र युद्धमवर्तत ।
महद्देवासुरं युद्धं यद्वृत्तं भरतर्षभ ।
युद्धं न स्यात्समं तेन लोकविस्मयकारकम् ।
चक्रलाङ्गलसंछिन्नाः शक्तिखड्गहतास्तदा ।
निपेतुर्दानवास्तत्र समासाद्य जनार्दनम् ।
अष्टौ शतसहस्राणि दानवानां परंतप ।
निहत्य पुरुषव्याघ्रः पातालविवरं ययौ ।
त्रासनं सुरसंघानां नरकं पुरुषोत्तमः ।
योधयस्त्वतितेजस्वी मधुवन्मधुसूदनः ।
तद्युद्धमभवद्घोरं तेन भौमेन भारत ।
कुण्डलार्थे सुरेशस्य नरकेण महात्मना ।
मुहूर्तं लालयित्वाथ नरकं मधुसूदनः ।
प्रवृत्तचक्रं चक्रेण प्रममाथ बलाद्बली ।
चक्रप्रमथितं तस्य पपात सहसा भुवि ।
उत्तमाङ्गं हताङ्गस्य वृत्रे वज्रहते यथा ।
भूमिस्तु पतितं दृष्ट्वा ते वै प्रादाच्च कुण्डले ।
प्रदाय च महाबाहुमिदं वचनमब्रवीत् ।
सृष्टस्त्वयैव मधुहंस्त्वयैव निहतः प्रभो ।
यथेच्छसि तथा क्रीडन्प्रजास्तस्यानुपालय ।

वासुदेवः ।

देवानां च मुनीनां च पितॄणां च महात्मनाम् ।
उद्वेजनीयो भूतानां ब्रह्मद्विड् पुरुषाधमः ।
लोकद्विष्टः सुतस्तुभ्यं देवारिर्लोककण्टकः ।
सर्वलोकनमस्कार्यामदितिं बाधते बली ।
कुण्डले दर्पसंपूर्णस्ततो मे निहतोऽसुरः ।
नैव मन्युस्त्वया कार्यो यत्कृतं मयि भामिनि ।
मत्प्रभावाच्च ते पुत्रो लब्धवान्गतिमुत्तमाम् ।
तस्माद्गच्छ महाभागे भारावतरणं कृतम् ।

Colophon.

भीष्मः ।

निहत्य नरकं भौमं सत्यभामासहायवान् ।
सहितो लोकपालैश्च ददर्श नरकालयम् ।
अथास्य गृहमासाद्य नरकस्य यशस्विनः ।
ददर्श धनमक्षय्यं रत्नानि विविधानि च ।
मणिमुक्ताप्रवालानि वैडूर्यविकृतानि च ।
सारानर्कमणीन्विमलान्स्फाटिकानपि ।

— (L. 1006) Cf. Hari. 2. 63. 56[ab]. $T_1$ अस्त्रेण; $G_{3.5}$ त्वस्त्रेण; $M_1$ तत्रैव (for शस्त्रेण). — (L. 1007) $T_1$ निसुंभं; $M_1$ निसुंदम् (for निशुंभम्). $T_1$ समयोधयत्; $G_6$ चावपोथयत् (for अवपोथयत्). — Lines 1009–1012 = (var.) Hari. 2. 63. 86–87. — (L. 1009) $M_1$ महासुतं (for °बलम्). — (L. 1011) $M_1$ °गंगाया. — (L. 1012) $G_2$ ओदकायां. $G_{3.5}$ भरतर्षभ; $M_1$ पुरुषर्षभ (for मधुसूदनः). — (L. 1013) $T_1$ हत्वा (for पञ्च). $M_1$ तं च पंचजनं घोरं. $M_1$ महासुरं. — Lines 1014–1015 = (var.) Hari. 2. 63. 89[c]–90[b]. — (L. 1014) $T_1$ दीप्यमान इव. — (L. 1015) $T_1$ पुरमादीपयामास. $G_6$ ततो (for तत्र). — (L. 1016) $T_1$ महादेवासुरं. $G_5$ युद्धं (for वृत्तं). — (L. 1017) $T_1$ $G_6$ तत् (for न). — (L. 1018) $T_1$ $G_3$ चक्रलांछन-; $G_2$ °लांगूल- (for °लाङ्गल-). $T_1$ $G_5$ -संच्छन्नाः. $G_2$ °गदास् (for °हतास्). — (L. 1019) $G_{2.6}$ $M_1$ विनेदुर् (for निपेतुर्). $G_6$ समासेदुर् (for °साद्य). — Lines 1020–1021 = (var.) Hari. 2. 63. 88. — (L. 1020) $G_{2.6}$ दश- (for शत-). — Lines 1022–1023 = (var.) Hari. 2. 63. 110[c]–111[b]. — (L. 1023) $G_6$ बोधयत्यति-; $M_1$ अयोधयत. — $G_{2.3}$ om. (hapl.) lines 1024–1026. — (L. 1025) $M_1$ कुंडलार्थं सुरेंद्रस्य. $G_5$ नरकस्य; $G_6$ अनीकस्य (for नरकेण). $G_6$ महात्मनः. — (L. 1026) $G_6$ तु (for [अ]थ). — (L. 1027) $T_1$ $G_3$ प्रवृत्तचक्रस्; $G_5$ °वृद्धचक्रस्. $G_2$ प्रवृत्तचक्रवक्रेण; $G_6$ प्रकृतश्चक्रभारेण. $G_3$ [illegible]; $G_5$ महान्बली (for बलाद्बली). — (L. 1028) $T_1$ तरसा (for सहसा). $G_2$ चक्रेण मथितं तस्य सहसा चापतद्भुवि. — (L. 1029) $G_{2.3}$ वृत्रो वज्रहतो यथा. — For lines 1030–1034, cf. Hari. 2. 63. 124–126. — (L. 1030) $T_1$ तस्मै (for ते वै). $G_{2.6}$ प्रायच्छत्कुंडले शुभे (for the post. half). — (L. 1032) $T_1$ नरकम् (for मधुहंस्). $G_{2.6}$ पुनः (for प्रभो). — (L. 1033) $G_{2.6}$ $M_1$ क्रीड (for क्रीडन्). $G_6$ [आ]नु (for [अ]नु-). — (L. 1034) $T_1$ $G_{3.5}$ transp. मुनीनां and पितॄणां. — (L. 1036) $T_1$ $G_6$ देवविद्विट्; $G_3$ लोकविद्विष्टा; $M_1$ देवद्विष्टः. — (L. 1037) $G_{2.6}$ $M_1$ बाधयद् (for बाधते). $G_3$ भृशं (for बली). $T_1$ अदितिं चाथ बाधयत्. — (L. 1038) $G_{2.6}$ ते; $G_5$ [ऽ]सौ (for मे). $G_{2.6}$ सुरः (for ऽसुरः). — (L. 1039) $T_1$ नेद् (for नैव). $G_6$ भामिनि. — (L. 1040) $G_{2.6}$ तद्- (for मद्-). — Colophon. *Adhy. no.*: $T_1$ $G_{2.3.5.6}$ $M_1$ 61. — For lines 1042–1163, cf. Hari. 2. 64. — (L. 1042) $G_{2.3.6}$ $M_1$ वासवेन पुरस्कृतः (for the post. half). — (L. 1043) $T_1$ लोकपालैश्च सहितो (by transp.). — (L. 1044) $G_{2.6}$ महात्मनः (for यशस्विनः). — (L. 1045) $G_2$ रत्नानि च धनानि च. — (L. 1047) $T_1$ स्फाटिकानि च रत्नानि. $G_2$ विस्तारानल्पार्कमणीन्; $G_3$ $M_1$ ससारगल्वर्कमणीन्;

जाम्बूनदमयान्येव शातकुम्भमयानि च ।
प्रदीप्तज्वलनाभानि शीतरश्मिप्रभाणि च ।
हिरण्यवर्णं रुचिरं श्वेतमभ्यन्तरं गृहम् ।
यत्तदर्थं गृहे दृष्टं नरकस्य धनं बहु ।
न हि राज्ञः कुबेरस्य तावद्धनसमुच्छ्रयः ।
दृष्टपूर्वः पुरा साक्षान्महेन्द्रसदनेष्वपि ।
हते भौमे निसुम्भे च वासवः सगणोऽब्रवीत् ।
दाशार्हपतिमासीनमाहृत्य मणिकुण्डले ।
इमानि मणिरत्नानि विविधानि वसूनि च ।
हेमसूत्रा महाकक्ष्यास्तोमरैर्वीर्यशालिनः ।
भीमरूपाश्च मातङ्गाः प्रवालविकृताः कुथाः ।
विमलानि पताकानि वासांसि विविधानि च ।
ते च विंशतिसाहस्रा द्विस्तावत्यः करेणवः ।
अष्टौ शतसहस्राणि देशजाश्चोत्तमा हयाः ।
गोभिश्चाविकृतैर्यानैः कामं तव जनार्दन ।
एतत्ते प्रापयिष्यामि वृष्ण्यावासमरिंदम ।
आविकानि च सूक्ष्माणि शयनान्यासनानि च ।
कामव्याहारिणश्चापि पक्षिणः प्रियदर्शनाः ।
चन्दनागरुमिश्राणि यानानि विविधानि च ।
तच्च ते प्रापयिष्यामि वृष्ण्यावासमरिंदम ।
वसु यत्त्रिषु लोकेषु धर्मेणवार्जितं त्वया ।
देवगन्धर्वरत्नानि दैतेयासुरजानि च ।
यानि सन्तीह रत्नानि नरकस्य निवेशने ।
एतत्तु गरुडे सर्वं क्षिप्रमारोप्य वासवः ।
दाशार्हपतिना सार्धमुपायान्मणिपर्वतम् ।
तत्र पुण्या ववुर्वाताः प्रभाश्चित्राः समुज्ज्वलाः ।
प्रेक्षतां सुरसंघानां विस्मयः समपद्यत ।
त्रिदशा ऋषयश्चैव चन्द्रादित्यौ तथा दिवि ।
प्रभया तस्य शैलस्य निर्विशेषमिवाभवत् ।
अनुज्ञातस्तु रामेण वासवेन च केशवः ।
प्रीयमाणो महाबाहुर्विवेश मणिपर्वतम् ।
तत्र वैडूर्यवर्णानि ददर्श मधुसूदनः ।
सतोरणपताकानि द्वाराणि शरणानि च ।
चित्रग्रथितमेघाभः प्रबभौ मणिपर्वतः ।
हेमचित्रपताकैश्च प्रासादैरुपशोभितः ।
हर्म्याणि च विशालानि मणिसोपानवन्ति च ।
तत्रस्था वरवर्णाभा ददर्श मधुसूदनः ।
गन्धर्वासुरमुख्यानां प्रिया दुहितरस्तदा ।
त्रिविष्टपसमे देशे तिष्ठन्तमपराजितम् ।
परिवव्रुर्महाबाहुमेकवेणीधराः स्त्रियः ।
सर्वाः काषायवासिन्यः सर्वाश्च नियतेन्द्रियाः ।
व्रतसंतापजः शोको नात्र काश्चिदपीडयत् ।
अरजांसि च वासांसि बिभ्रत्यः कौशिकान्यपि ।
समेत्य यदुसिंहस्य चक्रुरस्याञ्जलिं स्त्रियः ।
ऊचुश्चैनं हृषीकेशं सर्वास्ताः कमलेक्षणाः ।
नारदेन समाख्यातमस्माकं पुरुषोत्तम ।
आगमिष्यति गोविन्दः सुरकार्यार्थसिद्धये ।
सोऽसुरं नरकं हत्वा निसुम्भं मुरमेव च ।

$G_6$ महासारान्नवमणीन् (for the prior half). — $T_1$ om. the post. half of line 1047 and the prior half of line 1048. $G_2$ विमान- (for विमलान्). $G_6$ $M_1$ स्फटिकानपि. — (L. 1049) $T_1$ °रत्नप्रभाणि च; $M_1$ °रश्मिनिभानि च. — (L. 1050) $G_6$ °वर्ण- (for °वर्णं). — (L. 1051) $G_{2.6}$ यदक्षय्यं; $M_1$ यावदर्थं (for यत्तदर्थं). $T_1$ दुष्टं; $G_2$ मृष्टं (for दृष्टं). — (L. 1052) $G_2$ °समुच्चयं; $G_6$ °समुच्छ्रयं. — (L. 1053) $G_{2.3}$ दृष्टपूर्वं; $G_6$ दृष्ट्वापूर्वं. $G_{2.3.6}$ °भवने° (for °सदने°). — (L. 1054) $T_1$ $G_6$ निशुंभे; $M_1$ निसुंदे. — (L. 1055) $T_1$ निगृह्य (for आहृत्य). — After line 1055, $G_{2.6}$ read lines 1057 and 1059; $M_1$ reads line 1059. — (L. 1056) Om. in $M_1$. $G_2$ बहूनि (for वसूनि). — (L. 1057) $T_1$ $G_2$ $M_1$ हेमसूत्र-; $G_3$ °सूत्रं. $G_5$ $M_1$ तोमरा. $T_1$ $G_2$ वीर्यषाळिनः; $M_1$ पापषाळिनः. — (L. 1059) $T_1$ $G_{3.5}$ विमलाभिः; $G_2$ माल्यानि च. $T_1$ $G_{3.5}$ पताकाभिर्. — (L. 1061) $G_2$ अष्टादशसहस्राणि; $G_6$ अष्टाशत°. $T_1$ $M_1$ देशजाता ($M_1$ °श्च) हयोत्तमाः. — (L. 1062) $G_2$ गोभिश्च विकृतैर्यावत्; $G_5$ गोभिश्चाभिकृतैर्यानैः; $M_1$ गोभिश्चापि कृतो वाबान्. $G_2$ कामात्; $M_1$ कामस् (for कामं). — $G_6$ om. lines 1064–1067. — (L. 1065) $G_2$ कर्मणः (for पक्षिणः). — (L. 1066) $G_2$ °मुख्यानि (for °मिश्राणि). $G_3$ धनानि (for यानानि). — (L. 1068) $T_1$ $G_{3.5}$ धर्मेणोपार्जितं; $G_2$ °र्मेणावर्जितं; $G_6$ कर्मेणैवार्जितं. — (L. 1070) $G_6$ हि (for [इ]ह). — (L. 1073) $G_2$ प्रभाश्चित्रसमज्वलाः. — (L. 1074) $G_2$ प्रेक्ष्य यं; $G_6$ प्रेत्यायं; $M_1$ प्रेक्ष्य यत्. — (L. 1075) $G_{3.5}$ यथा (for तथा). — (L. 1076) $T_1$ $M_1$ निर्विशेषा इवाभवन्; $G_2$ °शेषातथाभवत्; $G_6$ °शेष इवाभवत्. — $G_2$ om. lines 1077–1081. — (L. 1077) $G_6$ केशवो वासवेन च. — (L. 1078) $T_1$ $G_{3.5}$ $M_1$ प्रियमाणो. $G_6$ भगवान्प्रियमाणोथ महाबाहुर्विवेश तं. — (L. 1081) $T_1$ $G_5$ चित्रग्रथितमेघौघः; $G_6$ विचित्री घनमेघाभः. — (L. 1082) $T_1$ $G_{2.6}$ $M_1$ °चित्रवितानैश्च. $T_1$ $G_2$ °शोभिताः ($G_2$ °ता). — (L. 1083) $G_{2.6}$ °शोभिता ($G_6$ °तान्) (for °वन्ति च). — (L. 1084) $G_{2.3}$ $M_1$ तत्र ता (for तत्रस्था). $G_6$ तत्र भ्रमरवर्णाभां. — (L. 1085) $M_1$ °नागानां (for °मुख्यानां). $G_6$ तथा; $M_1$ च याः (for तदा). — (L. 1086) $G_5$ त्रिविष्टपे (for °ष्टप-). — (L. 1087) $G_3$ $M_1$ महाभागम् (for °बाहुम्). — (L. 1089) $T_1$ व्रतः संतापजः; $G_{2.6}$ पतिसं°; $M_1$ व्रजसं°. $T_1$ $G_5$ कश्चिद्; $G_2$ कांश्चिद्. — (L. 1094) $G_2$ °कार्यत्व° (for °कार्यार्थ°). — (L. 1095) $G_{5.6}$ निशुंभं;

भौमं च सपरीवारं हयग्रीवं च दानवम् ।
तथा पञ्चजनं चैव प्राप्स्यते धनमक्षयम् ।
सोऽचिरेणैव कालेन युष्मद्भर्ता भविष्यति ।
एवमुक्त्वागमद्धीमान्देवर्षिर्नारदस्तदा ।
त्वां चिन्तयानाः सततं तपो घोरमुपास्महे ।
कालेऽतीते महाबाहुं कदा द्रक्ष्याम माधवम् ।
इत्येवं हृदि संकल्पं कृत्वा पुरुषसत्तम ।
तपश्चराम सततं रक्ष्यमाणा हि दानवैः ।
गान्धर्वेण विवाहेन विवाहं कुरु नः प्रियम् ।
ततोऽस्मत्प्रियकामार्थं भगवान्मारुतः स्वयम् ।
यथोक्तं नारदेनाथ नचिरात्तद्भविष्यति ।
तासां परमनारीणामृषभाक्षं पुरस्कृतम् ।
ददृशुर्देवगन्धर्वा गृष्टीनामिव गोपतिम् ।
तस्य चन्द्रोपमं वक्त्रमुदीक्ष्य मुदितेन्द्रियाः ।
संप्रहृष्टा महाबाहुमिदं वचनमब्रुवन् ।
सत्यं बत पुरा वायुरिदमस्मानिहाब्रवीत् ।
सर्वभूतकृतज्ञश्च महर्षिरपि नारदः ।
विष्णुर्नारायणो देवः शङ्खचक्रगदासिधृक् ।
स भौमं नरकं हत्वा भर्ता वो भविता हि सः ।
दिष्ट्या तस्यर्षिमुख्यस्य नारदस्य महात्मनः ।
वचनं दर्शनादेव सत्यं भवितुमर्हति ।
यत्प्रियं बत पश्याम वक्त्रं चन्द्रोपमं तु ते ।
दर्शनेन कृतार्थाः स्म वयमद्य महात्मनः ।
उवाच स यदुश्रेष्ठः सर्वास्ता जातमन्मथाः ।
यथा ब्रूत विशालाक्ष्यस्तत्सर्वं वो भविष्यति ।
तानि सर्वाणि रत्नानि गमयित्वाथ किंकरैः ।
स्त्रियश्च गमयित्वाथ देवर्षिनृपकन्यकाः ।
वैनतेयभुजे कृष्णो मणिपर्वतमुत्तमम् ।
क्षिप्रमारोपयांचक्रे भगवान्देवकीसुतः ।
सपक्षिगणमातङ्गं सव्यालमृगपन्नगम् ।
शाखामृगगणैर्जुष्टं सप्रस्तरशिलातलम् ।
न्यङ्कुभिश्च वराहैश्च रुरुभिश्च निषेवितम् ।
सप्रपातमहासानुं विचित्रशिखिसंकुलम् ।
तं महेन्द्रानुजः शौरिश्चकार गरुडोपरि ।
पश्यतां सर्वभूतानामुत्पाट्य मणिपर्वतम् ।
उपेन्द्रं बलदेवं च वासवं च महाबलम् ।
तं च रत्नौघमतुलं पर्वतं च महाबलः ।
वरुणस्यामृतं दिव्यं छत्रं चन्द्रोपमं शुभम् ।
स्वपक्षबलविक्षेपैर्महाद्रिशिखरोपमः ।
दिक्षु सर्वासु संरावं स चक्रे गरुडो वहन् ।
आरुजन्पर्वताग्राणि पादपांश्च समुत्क्षिपन् ।
संजहार महाभ्राणि वैश्वानरपथं गतः ।
ग्रहनक्षत्रताराणां सप्तर्षिगणतेजसाम् ।
प्रभाजालमतिक्रम्य चन्द्रसूर्यपथं ययौ ।
मेरोः शिखरमासाद्य मध्यमं मधुसूदनः ।
देवस्थानानि सर्वाणि ददर्श भरतर्षभ ।

M1 निसुंदं. — (L. 1097) G2 प्राप्स्यसे. — (L. 1098) G2 युष्मन्नोक्ता. — (L. 1099) G2.6 [अ]गमद्धीरो; M1 गतः श्रीमान् (for [अ]गमद्धीमान्). — (L. 1100) T1 त्वा. G6 उपास्य च (for उपास्महे). — (L. 1101) G2 कालातीते; G6 कालेतीतं. T1 G2.5 द्रक्ष्यामि. — (L. 1102) G6 भूमि- (for हृदि). G2 कदा (for कृत्वा). — (L. 1103) G2.3 चरामः; G6 चचार (for चराम). G2 द्रक्ष्यमाणा (for रक्ष्य°). — (L. 1104) Om. in G2.6 M1. — (L. 1105) G6 आगतः (for मारुतः). — (L. 1106) G5 [आ]ह (for [अ]थ). — (L. 1107) G5 वृषभाक्षं (for ऋष°). — (L. 1108) G2 वृष्टीनाम् (for गृ°). M1 गोष्पतीं. — (L. 1109) T1 G6 M1 उद्वीक्ष्य. — After line 1109, G6 repeats line 1106. — (L. 1110) T1 G5 संप्रहृष्ट- (for संप्रहृष्टा). — (L. 1111) G6 सत्यव्रत (for सत्यं बत). G2 महाबाहुर्; G6 परो वायुर्. T1 G2.5 इव (for इह). — (L. 1112) G2 सर्वभूतहितज्ञश्च; G3 M1 °रतज्ञश्च; G6 °हितज्ञं च. — (L. 1113) T1 M1 °गदाधरः. — (L. 1114) T1 इति; G3 च सः; G5 [अ]पि सः (for हि सः). — (L. 1115) T1 दिष्ट्या तद्वचनं कृष्ण; G2.6 दिष्ट्या तस्यापि(G6 °भि-) मुख्यस्य. T1 om. the post. half of line 1115 and the prior half of line 1116. — (L. 1116) G3 अर्हसि. G2.6 वचनादेव सत्यं नो भर्ता भवितुमर्हति (G5 °सि). — (L. 1117) G2 M1 पश्यामश्च. G3 च (for तु). G2 M1 चिरश्रुतमरिंदमं (M1 °न): G6 चिरं श्रुतमरिंदम. — (L. 1118) G2.6 अस्य (for अद्य). — (L. 1119) T1 G2.3 M1 om. the ref. G2 M1 ता; G3 च; G6 सा (for स). G6 सर्वास्ता राजसंमताः. — G2.6 M1 om. lines 1121–1122. — Before line 1121, T1 ins. भीष्मः. — (L. 1122) G3 -पितृ- (for -नृप-). — For line 1123, G2.6 M1 subst.:

ततस्ता गरुडे सर्वाः सरत्नधनसंचयाः ।
[ G2 °बहु° (for °धन°). ]

— (L. 1125) G3 °मृगमातंगं; G6 °गगनानंग-. — (L. 1127) G2 शृंगिभिश्च (for न्यङ्कु°). — (L. 1129) G2.6 स (for तं). — (L. 1130) M1 सर्वयौधानाम्. — (L. 1132) T1 अखिलं (for अतुलं). G5 महाबलं. — G2.6 M1 om. line 1133. — (L. 1134) T1 G2.5 M1 महाभ्र° (for महाद्रि°). — (L. 1135) M1 निनादं (for संरावं). — (L. 1136) G2 अरुजन्; G6 अरुजत्. — (L. 1137) G5 स जहार. G6 तमभ्राणि. — (L. 1138) G2.5 सप्तर्षीणां च तेजसा. — G2 om. (hapl.) from the post. half of line 1139 to the prior half of line 1143. — (L. 1141) G6 त्रिदिवस्थानि सर्वाणि. — (L. 1142) G6 विशेषं (for विशेषां).

विश्वेषां मरुतां चैव साध्यानां च युधिष्ठिर ।
भ्राजमानान्यतिक्रम्य अश्विनोश्च परंतप ।
प्राप्य पुण्यतमं स्थानं देवलोकमरिंदमः ।
शक्रसद्म समासाद्य अवरुह्य जनार्दनः ।
सोऽभिवाद्य दितेः पादावर्चितः सर्वदैवतैः ।
ब्रह्मदक्षपुरोगैश्च प्रजापतिभिरेव च ।
अदितेः कुण्डले दिव्ये ददावथ तदा विभुः ।
रत्नानि च परार्ध्याणि रामेण सह केशवः ।
प्रतिगृह्य च तत्सर्वमदितिर्वासवानुजम् ।
पूजयामास दाशार्हं रामं च विगतज्वरा ।
शची महेन्द्रमहिषी कृष्णस्य महिषीं तदा ।
सत्यभामां तु संगृह्य अदित्यै वै न्यवेदयत् ।
सा तस्याः सत्यभामायाः कृष्णप्रियचिकीर्षया ।
वरं प्रादाद्देवमाता सत्यायै विगतज्वरा ।

अदितिः ।

जरां न यास्यसि शुभे यावद्वै कृष्णमानुषम् ।
सर्वगन्धगुणोपेता भविष्यसि वरानने ।

भीष्मः ।

विहृत्य सत्यभामा वै सह शच्या सुमध्यमा ।
शच्यापि समनुज्ञाता ययौ कृष्णनिवेशनम् ।
संपूज्यमानस्त्रिदशैर्महर्षिगणसेवितः ।
द्वारकां प्रययौ कृष्णो देवलोकादरिंदमः ।
सोऽतिपत्य महाबाहुर्दीर्घमध्वानमच्युतः ।
वर्धमानपुरद्वारमाससाद पुरोत्तमम् ।

Colophon.

भीष्मः ।

तां पुरीं द्वारकां दृष्ट्वा विभुर्नारायणो हरिः ।
हृष्टः सर्वार्थसंपन्नां प्रवेष्टुमुपचक्रमे ।
सोऽपश्यद्वृक्षषण्डांश्च रम्यानारामजान्बहून् ।
समन्ततो द्वारवत्यां नानापुष्पफलान्वितान् ।
अर्कचन्द्रप्रतीकाशैर्मेरुकूटनिभैर्गृहैः ।
द्वारका रचिता रम्यैः सुकृता विश्वकर्मणा ।
पद्मषण्डाकुलाभिश्च हंससेवितवारिभिः ।
गङ्गासिन्धुप्रकाशाभिः परिखाभिरलंकृता ।
प्राकारेणार्कवर्णेन पाण्डरेण विराजता ।
वियन्मूर्ध्नि निविष्टेन द्यौरिवाभ्रपरिच्छदा ।
नन्दनप्रतिमैश्चापि मिश्रकप्रतिमैर्वनैः ।
भाति चैत्ररथं दिव्यं पितामहवनं यथा ।
वैभ्राजप्रतिमैश्चैव सर्वर्तुकुसुमोत्कटैः ।
भाति तारापरिक्षिप्ता द्वारका द्यौरिवाम्बरे ।
भाति रैवतकः शैलो रम्यसानुर्महाजिरः ।
पूर्वस्यां दिशि रम्यायां द्वारकायां विभूषणम् ।
दक्षिणस्यां लतावेष्टः पञ्चवर्णो विराजते ।
इन्द्रकेतुप्रतीकाशः पश्चिमां दिशमाश्रितः ।
सुकक्षो राजतः शैलश्चित्रपुष्पमहावनः ।
उत्तरस्यां दिशि तथा वेणुमन्तो विराजते ।

G3 मरुतानां च (for मरुतां चैव). — (L. 1143) G6 भ्राजमानानति° and अश्विनौ च. — (L. 1144) G3 M1 अरिंदम. — (L. 1145) G2.6 नत्र सर्वं (for शक्रसद्म). — (L. 1146) T1 °वाद्यातितेः (for °वाद्य दितेः of the rest). G6 [अ]र्चितं सहदैवतैः. — (L. 1148) G2 प्रभुः. — (L. 1151) T1 कृष्णं सा (for रामं च). M1 विगतज्वरं. — (L. 1152) T1 प्रियां (for तदा). — (L. 1153) T1 तां; G2.6 M1 सं- (for वै). — (L. 1154) G6 सा तस्यां सत्यभामायां. — (L. 1155) G6 वरप्रदा (for वरं प्रा°). — After line 1155, G6 repeats line 1152. — (L. 1156) T1 G3 वधू; G5 M1 वधूर् (for शुभे). G6 जरां नावाप्स्यसि शुभे प्राप्य वै वर्ष्म मानुषं. — (L. 1158) G2.3.6 M1 om. the ref. G2.3.6 विसृज्य; M1 विसृष्टा (for विहृत्य). G2 सत्यभामायै; M1 °भामा तु. G2.6 पौलोम्या च (for सह शच्या). — (L. 1159) T1 तु; G2 च (for [अ]पि). G3 समनुज्ञाप्य. G6 कृष्णस्य (for कृष्णनि-). — (L. 1160) M1 °पूजितः (for °सेवितः). — (L. 1161) T1 देवो (for कृष्णो), and देवर्षिगणसेवितः (for the post. half). — (L. 1162) G2 सोतीत्य च; G6 सोवपत्य (for सोऽति°). — (L. 1163) G5 वर्धमानं पुरद्वारम्. — Colophon. *Adhy. no.*: T1 G2.3.5.6 M1 62. — For lines 1164–1363, cf. Hari. 2. 98. 9. — 100. 12. — (L. 1164) G6 om. the ref. G2 पितुर् (for विभुर्). — (L. 1165) T1 G2.6 °संपन्नः. — (L. 1166) G2 रम्याश्रामानुजान्बहून्; M1 रम्यरामान्गृहान्बहून्. — (L. 1167) G2.6 द्वारवत्या. — (L. 1169) G2.6 द्वारकामावृतां रम्यैः; M1 द्वारकामाचितां रम्यां. G2.3.6 M1 सुकृतां. — (L. 1170) G3.5 हंसकारंडवासिभिः (sic). — (L. 1171) T1 G3 गंगासिंधुः प्रकाशाभिः; G2 °सिंधुप्रयागाभिः; G6 °सिंधुप्रकाशाभिः. — (L. 1172) G2.3.6 M1 [अ]भ्रवर्णेन (for [अ]र्क°). T1 G6 विराजिता. — (L. 1173) T1 दिवं मूर्ध्नि; G2 यस्य मूर्ध-; G3 दिवि मूर्द्ध-; G6 दिवि मूर्ध्नि; M1 मेरुमूर्ध्नि (for वियन्मूर्ध्नि). G2 द्यौरिवाभूत्परिच्छदां; G3 M1 द्यामिवाभ्रपरिच्छदां; G6 द्यौर्दिवाभ्र°. — (L. 1174) G3 चैव (for चापि). G6 चैत्यक° (for मिश्रक°). G2 वरैः (for वनैः). — G2.6 om. lines 1175–1207. — (L. 1176) T1 राजत°; G3 वैराज° (for वैभ्राज°). — (L. 1178) G3 °सानुर्महागिरिः; M1 °सानुंगुहाजिरः. — (L. 1179) G5 M1 द्वारकाया. — (L. 1181) T1 दिशमास्थितः; G5 दिशिमाश्रितः. M1 (*sup. lin.*) पश्चिमायां तथा क्षयः. — (L. 1182) Om. in M1. G3 सुप्रेक्षो (for °कक्षो). G5 राजते शैलश्च. — (L. 1183) M1 वेणुमांश्च.

मन्दराद्रिप्रतीकाशः पाण्डरः पाण्डवर्षभ ।
चित्रकम्बलवर्णाभं पाञ्चजन्यवनं तथा ।
सर्वर्तुकवनं चैव भाति रैवतकं प्रति ।
लतावेष्टं समन्तात्तु मेरुप्रभवनं महत् ।
भाति तालवनं चैव पुष्पकं पुण्डरीकि च ।
सुकक्षं परिवार्यैनं चित्रपुष्पं महावनम् ।
शतपत्रवनं चैव करवीरकुसुम्भि च ।
भाति चैत्ररथं चैव नन्दनं च महावनम् ।
रमणं भावनं चैव वेणुमन्तं समन्ततः ।
भाति पुष्करिणी रम्या पूर्वस्यां दिशि भारत ।
धनुःशतपरीणाहा केशवस्य महात्मनः ।
महापुरीं द्वारवतीं पञ्चाशद्भिर्मुखैर्युताम् ।
प्रविष्टो द्वारकां रम्यां भासयन्तीं समन्ततः ।
अप्रमेयां महोत्सेधां महागाधपरिप्लवाम् ।
प्रासादवरसंपन्नां श्वेतप्रासादशालिनीम् ।
तीक्ष्णयन्त्रशतघ्नीभिर्यन्त्रजालैः समन्विताम् ।
आयसैश्च महाचक्रैर्ददर्श द्वारकां पुरीम् ।
अष्टौ रथसहस्राणि प्राकारे किङ्किणीकिनः ।
समुच्छ्रितपताकानि यथा देवपुरे तथा ।
अष्टयोजनविस्तीर्णामचलां द्वादशायताम् ।
द्विगुणोपनिवेशां च ददर्श द्वारकां पुरीम् ।
अष्टमार्गां महाकक्ष्यां महाषोडशचत्वराम् ।
एवं मार्गपरिक्षिप्तां साक्षादुशनसा कृताम् ।
व्यूहानामन्तरा मार्गाः सप्त चैव महापथाः ।
तत्र सा विहिता साक्षान्नगरी विश्वकर्मणा ।
काञ्चनैर्मणिसोपानैरुपेता जनहर्षिणी ।
गीतघोषमहाघोषैः प्रासादप्रवरैः शुभा ।
तस्मिन्पुरवरश्रेष्ठे दाशार्हाणां यशस्विनाम् ।
वेश्मानि जहृषे दृष्ट्वा भगवान्पाकशासनः ।
समुच्छ्रितपताकानि पारिप्लवनिभानि च ।
काञ्चनाग्राणि भास्वन्ति मेरुकूटनिभानि च ।
सुधापाण्डरशृङ्गैश्च शातकुम्भपरिच्छदैः ।
रत्नसानुगुहाशृङ्गैः सर्वरत्नविभूषितैः ।
सहर्म्यैः सार्धचन्द्रैश्च सनिर्यूहैः सपञ्जरैः ।
सयन्त्रगृहसंबाधैः सधातुभिरिवाद्रिभिः ।
मणिकाञ्चनभौमैश्च सुधामृष्टतलैस्तथा ।
जाम्बूनदमयैर्द्वारैर्वैडूर्यैर्विकृतार्गलैः ।
सर्वर्तुसुखसंस्पर्शैर्महाधनपरिच्छदैः ।
रम्यसानुगुहाशृङ्गैर्विचित्रैरिव पर्वतैः ।
पञ्चवर्णसुवर्णैश्च पुष्पवृष्टिसमप्रभैः ।
तुल्यैः पर्जन्यनिर्घोषैर्नानावर्णैरिवाम्बुदैः ।
महेन्द्रशिखरप्रख्यैर्विहितैर्विश्वकर्मणा ।
आलिखद्भिरिवाकाशमतिचन्द्रार्कभास्वरैः ।
तैर्दाशार्हमहानागैर्बभासे भवनह्रदैः ।
चण्डनागाकुलैर्घोरैर्ह्रदैर्भोगवती यथा ।
कृष्णध्वजोपवाह्यैश्च दाशार्हायुधरोहितैः ।
वृष्णिमत्तमयूरैश्च स्त्रीसहस्रप्रजाकुलैः ।
वासुदेवेन्द्रपर्जन्यैर्गृहमेघैरलंकृता ।
ददर्श द्वारकानीव मेघैर्द्यौरिव संवृता ।
साक्षाद्भगवतो वेश्म विहितं विश्वकर्मणा ।

— (L. 1185) $G_3$ नत्र; $M_1$ चित्रं (for चित्र-). — (L. 1186) $G_5$ °वनश्चैव. — (L. 1187) $M_1$ लतावेष्टसमीपे तु. — (L. 1189) $G_3$ सुकल्पं (for सुकक्षं). $T_1$ चित्रपुष्प-. — (L. 1190) $M_1$ कुरुवीरं (for करवीर-). — $G_3$ om. (hapl.) the post. half of line 1191 and the prior half of line 1192. — (L. 1193) $T_1$ प्रतीच्यां (for पूर्वस्यां). — (L. 1195) $G_5$ महापुर- (for °पुरीं). — (L. 1196) $M_1$ प्रविष्टा. $G_3$ हासयंतीं. — (L. 1197) $G_3$ उपगाधपरिप्लुतां. — (L. 1198) $M_1$ °प्राकारषालिनीं (sic). — (L. 1199) $M_1$ च भूषितां (for समन्विताम्). — (L. 1200) $G_3$ $M_1$ ददृशुर् (for ददर्श). — (L. 1201) $T_1$ प्राकारैः. $M_1$ किंकिणीकिनां. — (L. 1204) $G_3$ $M_1$ ददृशुर् (for ददर्श). — (L. 1206) $M_1$ एक- (for एवं). — (L. 1207) $G_3$ महारथाः. — (L. 1209) $T_1$ $G_6$ उपेतां. $G_6$ °हर्षिणीं. — (L. 1210) $G_{2.6}$ $M_1$ प्रासादगृह($M_1$ °वर)चत्वरैः. — (L. 1214) Om. in $T_1$ $G_{3.5}$. $G_6$ कांचनाभ्राणि. — (L. 1215) $T_1$ $G_{3.5}$ $M_1$ पांडुपांड($G_5$ °डु)रशृंगैश्च. $T_1$ महाशांतपरिच्छदैः (for the post. half). — (L. 1216) Om. in $M_1$. $G_3$ रत्नसानुगृहा°; $G_6$ तत्र सानुगुहा°. $G_3$ वर° (for सर्व°). — (L. 1217) $G_{2.6}$ सहस्रैः (for सहर्म्यैः). $G_{3.6}$ सनिर्व्यूहैः. $T_1$ च पंजरैः; $G_3$ सानुद्रुमैः; $G_6$ सह द्रुमैः. — (L. 1218) $G_{2.6}$ वसंत° (for सयन्त्र°). $G_3$ सर्वधातुभिराद्रिभिः. — (L. 1219) $T_1$ °भौम्यैश्च; $G_6$ °भूमैश्च. $T_1$ सुरा° (for सुधा°). — (L. 1220) $G_6$ $M_1$ °मय- (for °मयैर्). $T_1$ $G_3$ वैडूर्यविकृता°; $G_5$ °विकृता°. — (L. 1221) $G_3$ °संस्पर्श, and महाम्नन° (for °धन°). — (L. 1222) Om. in $G_6$. $G_{2.3}$ °प्रहाशृंगैर्. — (L. 1223) $G_{2.3}$ $M_1$ °सवर्णैश्च. $G_3$ पुष्पवृष्टि°. — (L. 1224) $M_1$ तुल्यपर्जन्य°. — (L. 1227) $T_1$ तैर्दाशार्हमहानागैर्; $G_3$ तैर्देशार्हमहानागैर्; $G_6$ ददशार्हमहामागैर् (sic). $T_1$ $G_3$ भवनं ह्रदैः; $G_3$ भुवनह्रदैः; $G_6$ भवनेश्वरैः. — (L. 1228) $G_6$ ह्रदैर् (for ह्रदैर्). $G_3$ भोगवतीमिव. — (L. 1229) $G_{3.6}$ $M_1$ °ध्वजौघ° (for °ध्वजोप°). $M_1$ (*sup. lin.*) इंद्रायुधपताकैश्च. $G_3$ °रोपितैः; $G_3$ °शोभितैः (for °रोहितैः). — (L. 1230) $G_6$ °वेश्म° (for °मत्त°). $T_1$ $G_{2.3}$ $M_1$ स्त्री($G_3$ त्रि)सहस्रप्रजा($M_1$ *sup. lin.* °जला)कुलैः; $G_6$ त्रिसहस्रप्रजा°. — (L. 1232) $G_3$ मेघैश्च द्यौरिवावृता (for

ददृशुर्देवदेवस्य चतुर्योजनमायतम् ।
तावदेव च विस्तीर्णमप्रमेयं महाधनैः ।
प्रासादवरसंपन्नं युक्तं जगतिपर्वतैः ।
यं चकार महाबाहुस्त्वष्टा वासवचोदितः ।
प्रासादं पद्मनाभस्य सर्वतो योजनायतम् ।
मेरोरिव गिरेः शृङ्गमुच्छ्रितं काञ्चनायुतम् ।
रुक्मिण्याः प्रवरो वासो विहितः स महात्मना ।
सत्यभामा पुनर्वेश्म सदा वसति पाण्डरम् ।
विचित्रमणिसोपानं यं विदुः शीतवानिति ।
विमलादित्यवर्णाभिः पताकाभिरलंकृतम् ।
व्यक्तबद्धं वनोद्देशैश्चतुर्दिशि महाध्वजम् ।
स च प्रासादमुख्योऽत्र जाम्बवत्या विभूषितः ।
प्रभया भूषणैश्चित्रैस्त्रैलोक्यमिव भासयन् ।
यस्तु पाण्डरवर्णाभस्तयोरन्तरमाश्रितः ।
विश्वकर्माकरोदेनं कैलासशिखरोपमम् ।
जाम्बूनदप्रदीप्ताग्रः प्रदीप्तज्वलनोपमः ।
सागरप्रतिमोऽतिष्ठन्मेरुरित्यभिविश्रुतः ।
तस्मिन्गान्धारराजस्य दुहिता कुलशालिनी ।
सुकेशी नाम विख्याता केशवेन निवेशिता ।
पद्मकूट इति ख्यातः पद्मवर्णो महाप्रभः ।
सुप्रभाया महाबाहो निवासः परमार्चितः ।
यस्तु सूर्यप्रभो नाम प्रासादवर उच्यते ।
लक्ष्मणायाः स दत्तः शार्ङ्गधन्वना ।
वैडूर्यवरवर्णाभः प्रासादो हरितप्रभः ।
सेतुजालानि यत्रैव तत्रैव च निवेशितः ।
यं विदुः सर्वभूतानि हरिरित्येव भारत ।
स मित्रविन्दया वासो देवर्षिगणपूजितः ।
महिष्या वासुदेवस्य भूषणं सर्ववेश्मनाम् ।
यस्तु प्रासादमुख्योऽत्र विहितः सर्वशिल्पिभिः ।
अतीव रम्यः सोऽप्यत्र प्रहसन्निव तिष्ठति ।
सुदत्तायाः सुवासस्तु पूजितः सर्वशिल्पिभिः ।
महिष्या वासुदेवस्य केतुमानिति विश्रुतः ।
प्रासादो विरजो नाम विरजस्को महात्मनः ।
उपस्थानगृहं तात केशवस्य महात्मनः ।
यस्तु प्रासादमुख्योऽत्र यं त्वष्टा व्यदधात्स्वयं ।
योजनायतविष्कम्भं सर्वरत्नमयं विभोः ।
तेषां तु विहिताः सर्वे रुक्मदण्डाः पताकिनः ।
सदने वासुदेवस्य मार्गसंजनना ध्वजाः ।
घण्टाजालानि तत्रैव सर्वेषां च निवेशने ।
आहृत्य यदुसिंहेन वैजयन्त्यचलो महान् ।
हंसकूटस्य यच्छृङ्गमिन्द्रद्युम्नसरो महत् ।
षष्टितालसमुत्सेधमर्धयोजनविस्तृतम् ।
सकिंनरमहानादं तदप्यमिततेजसः ।
पश्यतां सर्वभूतानां त्रिषु लोकेषु विश्रुतम् ।

the post. half). — (L. 1234) G2.6 M1 वासु° (for देव°). — (L. 1235) G3 सु- (for च). G2.6 सुसंपूर्णं; G3 अप्रमेय (for °मेयं). — (L. 1236) G6 स्वर्णशैलैरिवावृतं (for युक्तं जगतिपर्वतैः, the last word ex. by Nīl. as कृत्रिमैः क्रीडापर्वतैः in Hari 2. 98. 44). — (L. 1237) G2 यच्चकार. G2.3.6 महाभागस् (G2 °ग); M1 °तेजास् (for °बाहुस्). — (L. 1238) G2 प्रासादे. G2 M1 हेम° (for पद्म°). — (L. 1239) G2 कांचनामयं; G6 °नार्चितं. — (L. 1240) G2 निर्मितः (for विहितः). G6 विश्वकर्मणा (for स महा°). — (L. 1241) G2 M1 यदा; G6 यथा (for सदा). — (L. 1242) G6 तोय° (for शीत°). — (L. 1244) G2.6 व्यक्तवंधं. G2 यशोद्देशैश्; G6 यथोद्देशैश्; M1 वनोपेतं (for वनोद्देशैश्). G2.3 चतुर्दशमहा°; G3 M1 चतुर्दिक्षु (M1 °श-) महाध्वजः. — (L. 1245) G3 प्रासादमुख्यैश्च. — (L. 1246) G3 त्रिलोक्यमिव; M1 त्रैलोक्यमव-. — (L. 1247) G3 पांडुर°. G6 आंतरम् (for अन्तरम्). — After line 1247, M1 reads line 1250. — (L. 1248) T1 G3.5 M1 एवं (for एनं). — (L. 1249) T1 G3.5 M1 °प्रदीप्ताग्रं, and °ज्वलनोपमं. — (L. 1250) G2 स सागरप्रतिष्ठानान्. — (L. 1251) M1 तत्र (for तस्मिन्). — (L. 1252) G6 शुकेति नाम्ना विख्याता. — (L. 1253) G2 महाप्रभुः (for °प्रभः). — (L. 1254) T1 सुप्रभायां; G2.6 सुसीमायाः; G3 M1 सुभा (M1 °भी) माया. T1 निवास-; G2 M1 वासः स (for निवासः). G2.6 परमोच्छ्रितः. — (L. 1256) M1 लक्षणायाः. G3 दृष्टः (for दत्तः). G2 °धन्विनः. — (L. 1258) Om. in T1 G3.5. G2 सेतुजालं हि यत्रैव; G6 केतुमाला हि यंत्रैश्च. G2 यत्रैव (for त°). G2 निवेशितं; G6 °शिता. — (L. 1260) G3.5 °विंदाया (for °विन्दया). G2.6 सुमित्राविजयावासो; M1 वासः स मित्रविंदाया. — (L. 1262) T1 वस्तु-; G2.6 यत्र (for यस्तु). G6 हि (for ऽत्र). — (L. 1263) T1 G3.5 -रूपः (for रम्यः). — (L. 1264) M1 स वासस्तु (for सु°). G6 सुभद्रायाश्च वासस्तु. G6 विहितः (for पूजितः). M1 °दैवतैः (for °शिल्पिभिः). — (L. 1265) G5 इव (for इति). — (L. 1266) G6 विरजस्तो महास्वनः. — (L. 1268) G2 यं सृष्ट्वा व्यजयत्स्वयं; G3 यं त्वष्टात्त व्यधात्स्वयं; G6 यं तान्यष्ट विजयत्स्वयं (hypermetric). — (L. 1269) G6 °विष्कंभः. G2.5 विभो. — (L. 1271) G6 समुच्छ्रितमहाध्वजाः. — (L. 1272) G6 पटजालानि. G2 निवेदिताः; G6 निविशिताः (for निवेशने). — (L. 1273) G2.6 M1 वैजयंतोचलो; G5 °यंत्योचले. — (L. 1274) G2 बः शृंगं. G5 धृष्ट° (for इन्द्र°). M1 प्रति (for महत्). — (L. 1275) T1 °समुत्सेयम्; G6 °समुच्छेदम्. G6 अर्धयोजनमायतं. — (L. 1276) G2 सकिंनरमहानादस्; G6 °रं महाराज; M1 °रमहानागं. T1 M1 °तेजसा; G6 °तेजसं.

आदित्यपथगं यत्तन्मेरोः शिखरमुत्तमम् ।
जाम्बूनदमयं दिव्यं त्रिषु लोकेषु विश्रुतम् ।
तदप्युत्पाट्य कृष्णेन स्वं निवेशनमाहृतम् ।
भ्राजमानं पुरा तत्र सर्वौषधिविभूषितम् ।
यमिन्द्रभवनाच्छौरिराजहार परंतपः ।
पारिजातः स तत्रैव केशवेन निवेशितः ।
लेपहस्तशतैर्जुष्टो विमानैश्च हिरण्मयैः ।
विहिता वासुदेवेन ब्रह्मस्थलमहाद्रुमाः ।
पद्माकुलजलोपेता रत्नसौगन्धिकोत्पलाः ।
मणिमौक्तिकवालुकाः पुष्करिण्यः सरांसि च ।
तासां परमकूलानि शोभयन्ति महाद्रुमाः ।
सालतालाश्वकर्णाश्च शतशाखाश्च रोहिणः ।
भल्लातकाः कपित्थाश्च चन्द्रवृक्षाश्च चम्पकाः ।
खर्जूराः केतकाश्चैव समन्तात्परिरोपिताः ।
ये च हैमवता वृक्षा ये च नन्दनजास्तथा ।
आहृत्य यदुसिंहेन तेऽपि तत्र निवेशिताः ।
रक्तपीतारुणप्रख्याः सितपुष्पाश्च पादपाः ।
सर्वर्तुफलपूर्णास्ते तेषु काननसंधिषु ।
सहस्रपत्रपद्माश्च मन्दाराश्च सहस्रशः ।
अशोकाः कर्णिकाराश्च तिलका नागमल्लिकाः ।
कुरवा नागपुष्पाश्च चम्पकास्तृणगुल्मकाः ।
सप्तपर्णाः कदम्बाश्च नीपाः कुरवकास्तथा ।
केतक्यः केसराश्चैव हिन्तालतलताटकाः ।
तालाः प्रियङ्गुवकुलाः पिण्डिका बीजपूरकाः ।
द्राक्षामलकखर्जूरा मृद्वीका जम्बुकास्तथा ।
आम्राः पनसवृक्षाश्च अङ्कोलास्तिलतिन्दुकाः ।
लिकुचाम्रातकाश्चैव क्षीरिका कण्टकीस्तथा ।
नालिकेरेङ्गुदाश्चैव उत्क्रोशकवनानि च ।
वनानि च कदल्याश्च जातिमल्लिकपाटलाः ।
कुमुदोत्पलपूर्णाश्च वाप्यः कूपाः सहस्रशः ।
भल्लातककपित्थाश्च तैतभा बन्धुजीवकाः ।
प्रियङ्ग्वशोककाश्मर्यः प्राचीनाश्चापि सर्वशः ।
प्रियङ्गुबदरीभिश्च यवैः स्पन्दनचन्दनैः ।
शमीबिल्वपलाशैश्च पाटलाशवटपिप्पलैः ।
उदुम्बरैश्च बिल्वैश्च पालाशैः पारिभद्रकैः ।
इन्द्रवृक्षार्जुनैश्चैव अश्वत्थैश्चिरिबिल्वकैः ।
सौभञ्जनकवृक्षैश्च भल्लटैरश्मगाह्वयैः ।
सर्जैस्ताम्बूलवल्लीभिर्लवङ्गैः क्रमुकैस्तथा ।
वंशैश्च विविधैस्तत्र समन्तात्परिरोपितैः ।
ये च नन्दनजा वृक्षा ये च चैत्ररथे वने ।

— (L. 1277) $M_1$ सर्वलोकानां. $G_6$ विश्रुतः. — $T_1$ $G_3$ om. lines 1278–1279. — (L. 1278) $G_6$ °प्रतिमं (for °पथगं). $G_2$ यत्तु (for यत्तन्). — (L. 1280) $T_1$ $G_6$ स्व- (for स्वं). — (L. 1281) $G_6$ भ्राजमाना. $T_1$ $G_{3.5}$ तात (for तत्र). $T_1$ $G_5$ सिद्धौषधिविभूषितं; $G_{2.6}$ सर्वौषधिविदीपितं. — (L. 1284) $G_2$ लेपहस्तग्रहैर्; $G_3$ लोहस्तंभमयैर्. — (L. 1285) $G_6$ निहिता. — $G_3$ om. lines 1286–1288; while $T_1$ $G_5$ read these lines after line 1291. — (L. 1286) $G_2$ पद्मजालकुलोपेता. $M_1$ रम्य° (for रत्न°). — (L. 1287) $G_2$ मणिमुक्ताक°; $G_6$ °मुक्ताढ्य°. — (L. 1288) $G_2$ अपरकूलानि; $G_6$ परमसस्थानि. — (L. 1289) $G_2$ शतशाकश्च. $G_2$ रोहिणीः; $M_1$ °णाः. — (L. 1290) $G_{2.3}$ फलानक-; $G_6$ फलातकाः. $G_{2.6}$ $M_1$ इंद्रवृक्षाश्च; $G_3$ चंद्रपक्षाश्च. — (L. 1291) $G_3$ केतकैश्चैव. $G_{2.6}$ खादिराम्रतका($G_6$ °गा)श्चैव; $M_1$ खर्जूराम्रातका°. — (L. 1292) $G_3$ चंदन° (for नन्दन°). — (L. 1293) $G_3$ आश्रित्य (for आहृत्य). — (L. 1294) $T_1$ °सीता° (for °पीता°). $G_2$ स्थित°; $G_6$ स्थिर° (for सित°). — (L. 1295) $G_{2.6}$ $M_1$ तेन (for तेषु). $G_{2.5}$ °सिंधुषु (for °संधिषु). — (L. 1296) $T_1$ °पद्मपद्माश्च; $G_{2.6}$ °पद्मपत्राक्ष. $T_1$ $G_2$ मंदराश्च; $G_5$ मंदारश्च. — (L. 1298) $G_2$ कुर्वका; $G_6$ कुरका; $M_1$ कुब्जका. $G_2$ नगपुष्पाश्च; $G_3$ $M_1$ नागवृक्षा°. $G_2$ तृणफुल्लकाः; $G_6$ तिलपुष्पकाः; $M_1$ तृणचुल्लिकाः. — (L. 1299) $T_1$ सप्तवर्णाः. $G_3$ नीलाः (for नीपाः). — (L. 1300) $T_1$ $G_{2.6}$ $M_1$ केतकाः (for °क्यः). $M_1$ °ताडकाः (for °ताटकाः). — (L. 1301) $G_2$ प्रलंबा बकुलाः; $G_3$ प्रियंगबकुलाः; $G_6$ पुलंबा बकुलाः. $M_1$ दाडिमा (for पिण्डिका). — (L. 1302) $G_2$ द्रुनामलकखर्जूरा; $G_6$ चूनामलकखर्जूर-. $T_1$ $G_{3.5}$ मृद्रिका; $G_{2.6}$ मद्वी($G_6$ °द्वि)का. — (L. 1303) $G_{3.5}$ पनस्पुष्पाश्च. $T_1$ आद्राः पर्नासपुष्पाश्च. $T_1$ $M_1$ ति($M_1$ *sup. lin.* बि)ल्व- (for तिल-). $G_{2.6}$ पंकास्तिल्वकार्निदुकाः; $G_5$ अंकोलातिल्वबिंदुकाः. — (L. 1304) $G_2$ लिकुचामृतकाश्चैव. $G_2$ कार्णिकास्तथा; $G_6$ $M_1$ (*sup. lin.*) पुंड्रका°; $M_1$ (orig.) कंटकित्वचः. — (L. 1305) $G_6$ नारिकेले°. $G_2$ उत्केशकवनानि च. — (L. 1306) $M_1$ वनानि कदलीनां च. $G_{2.6}$ कदली जातिमल्लीका ($G_6$ मल्लिका जाती) पाटलाः कुमुदोत्पलाः. — (L. 1307) $T_1$ °पर्णाश्च (for °पूर्णाश्च). $G_3$ पूर्णाः (for कूपाः). — (L. 1308) $G_{2.6}$ फुल्लाशोककपित्थाश्च. $G_{2.6}$ तैति($G_6$ °त्ति)लाः; $M_1$ केतका (for तैतभा). $G_2$ बंधुजीविकाः. — (L. 1309) $G_2$ प्रवालाशोकखादिरैः; $G_{3.6}$ $M_1$ प्रियालाशोककाश्मर्याः ($G_6$ °खादिराः). $G_5$ चैव (for चापि). $M_1$ प्राचीनाश्च विभीतकाः. — (L. 1311) $T_1$ $G_5$ °भल्ल°; $G_{2.6}$ $M_1$ °पीलु° (for °बिल्व°). $G_2$ पालाशा धवपिप्पलैः; $G_6$ पालाशयव°; $M_1$ लवंगवट°. — (L. 1312) $T_1$ $G_5$ बिदलैः (for बिल्वैश्च). $T_1$ पालांगैः (for पालाशैः). — $G_3$ om. line 1313. — (L. 1314) $G_{2.6}$ सौभंजन°; $G_3$ सौभंजनिक°. $G_3$ भल्लाभैर्; $G_6$ फुल्लातैर्; $M_1$ भल्लाटैर् (for भल्लटैर्). $G_3$ (corrupt) फल्लटैरश्वरश्वसांप्रयैः (*sup. lin.* °तैः). — (L. 1315) $G_{3.5}$ $M_1$ लवंकैः. — (L. 1316) $G_{2.3}$ परिशोभितैः; $G_6$ पथि रोपितैः. — (L. 1317) $G_2$ चंदनजा

सर्वे ते यदुनाथेन समन्तात्परिरोपिताः ।
समाकुला महावाप्यः पीना लोहितवालुकाः ।
तस्मिन्गृहवरे नद्यः प्रसन्नसलिला ह्रदाः ।
फुल्लोत्पलजलोपेता नानाद्रुमसमाकुलाः ।
तस्मिन्गृहवरे नद्यो मणिशर्करवालुकाः ।
मत्तबर्हिणसंघाश्च कोकिलाश्च मदोद्वहाः ।
बभूवुः परमोपेताः सर्वे जगतिपर्वताः ।
तत्रैव गजयूथानि तत्र गोमहिषास्तथा ।
निवासाश्च कृतास्तत्र वराहमृगपक्षिणाम् ।
विश्वकर्मकृतः शैलः प्राकारस्तस्य वेश्मनः ।
व्यक्तः किष्कुशतोद्यामः सुधाकरसमप्रभः ।
तेन ते च महाशैलाः सरितश्च सरांसि च ।
परिक्षिप्तानि हर्म्यस्य वनान्युपवनानि च ।

Colophon.

भीष्मः ।

एवमालोकयांचक्रुर्द्वारकामृषभास्त्रयः ।
उपेन्द्रबलदेवौ च वासवश्च महायशाः ।
ततस्तं पाण्डरं शौरिर्मूर्ध्नि तिष्ठन्गरुत्मतः ।
प्रीतः शङ्खमुपादध्मौ विद्विषां रोमहर्षणम् ।
तस्य शङ्खस्य शब्देन सागरश्चुक्षुभे भृशम् ।
ररास च नभः सर्वं तच्चित्रमभवत्तदा ।
पाञ्चजन्यस्य निर्घोषं निशम्य कुकुरान्धकाः ।
विशोकाः समपद्यन्त गरुडस्य च दर्शनात् ।
शङ्खचक्रगदापाणिं सुपर्णशिरसि स्थितम् ।
दृष्ट्वा जहृषिरे कृष्णं भास्करोदयतेजसम् ।
ततस्तूर्यप्रणादश्च भेरीणां च महास्वनः ।
सिंहनादश्च सञ्जज्ञे सर्वेषां पुरवासिनाम् ।
ततस्ते सर्वदाशार्हाः सर्वे च कुकुरान्धकाः ।
प्रीयमाणाः समाजग्मुरालोक्य मधुसूदनम् ।
वासुदेवं पुरस्कृत्य वेणुशङ्खरवैः सह ।
उग्रसेनो ययौ राजा वासुदेवनिवेशनम् ।
आनन्दितुं पर्यचरन्स्वेषु वेश्मसु देवकी ।
रोहिणी च यथोद्देशमाहुकस्य च याः स्त्रियः ।
हता ब्रह्मद्विषः सर्वे जयन्त्यन्धकवृष्णयः ।
एवमुक्तः सह स्त्रीभिरक्षतैर्मधुसूदनः ।
ततः शौरिः सुपर्णेन स्वं निवेशनमभ्ययात् ।
चकाराथ यथोद्देशमीश्वरो मणिपर्वतम् ।
ततो धनानि रत्नानि सभायां मधुसूदनः ।
निधाय पुण्डरीकाक्षः पितुर्दर्शनलालसः ।
ततः सान्दीपिनिं पूर्वमुपस्पृष्ट्वा महायशाः ।

(for नन्द°). — (L. 1318) $G_5$ प्रतिरोपिताः. — After line 1318, $T_1$ $G_{3.5}$ repeat line 1307. — (L. 1319) $G_{2.6}$ $M_1$ महानद्यः (for °वाप्यः), and पीत- (for पीता). — (L. 1320) $G_6$ °सलिलाशयाः; $M_1$ °सलिलह्रदाः. — (L. 1321) $G_{2.6}$ पुष्पोडुप°; $G_3$ $M_1$ पुष्पोत्पल° (for फुल्लोत्पल°). $M_1$ -लताकुलाः (for -समा°). — (L. 1322) $G_{2.6}$ रम्ये (for नद्यो). — (L. 1323) $M_1$ °संघैश्च, and कोकिलैश्च. $T_1$ $G_6$ मदावहाः; $M_1$ मदोत्कटैः. — (L. 1324) $G_2$ सर्वे गदितपर्वताः; $G_6$ सर्वे जगति ये नगाः. — (L. 1326) $G_6$ गृहास् (for कृतास्). — (L. 1327) $G_2$ चैव (for शैलः). $G_{2.6}$ प्राकारस्तत्र वेश्मनि. — (L. 1328) $G_2$ व्यक्त-; $G_5$ वृत्तं (for व्यक्तं). $G_6$ corrupt. $G_2$ $M_1$ सुधारससम°. — (L. 1329) $G_2$ ते च ते च; $G_6$ तत्तेन च (for तेन ते च). — (L. 1330) $G_{2.6}$ वैतस्य; $M_1$ भैमस्य (for हर्म्यस्य). — After line 1330, $T_1$ $G_6$ ins.:

एवं तच्छिल्पिवर्येण विहितं विश्वकर्मणा ।
प्रविशन्नेव गोविन्दो ददर्श परितो मुहुः ।
मुमुदे विश्वकर्माणं प्राञ्जलिं प्रणताननम् ।
इन्द्रः सहामरैः श्रीमांस्तत्र तत्रावलोकयत् ।

[ (L. 3) $T_1$ प्रांजलिः प्रणताननः. ]

— Colophon. *Adhy. no.:* $T_1$ $G_{2.3.5}$ $M_1$ 63; $G_6$ 62. — (L. 1331) $G_3$ om. the ref. $G_3$ $M_1$ आलोकयामासुर्. $T_1$ $M_1$ ऋषभास्त्रियः; $G_2$ आहतास्त्रियः; $G_6$ ऋषभस्त्रियः. — (L. 1333) $G_{2.6}$ तत् (for तं). — (L. 1334) $G_{2.6}$ $M_1$ उपाध्मासीद् (for °दध्मौ). $G_2$ $M_1$ द्विषतां; $G_6$ योषित् (for विद्विषां). — (L. 1337) $G_3$ कुररान्धकाः. — $G_2$ om. (hapl.) lines 1338–1343. — (L. 1338) $G_6$ नादनात् (for दर्श°). — (L. 1339) $G_6$ °शिखरि- (for °शिरसि). — (L. 1340) $M_1$ भैमा (for कृष्णं). $M_1$ भास्करोपम° (for °दय°). — (L. 1341) $T_1$ महास्वनं; $G_6$ °स्वनाः. — (L. 1342) $G_3$ सिंहनादं च; $G_{5.6}$ °नादाश्च. — (L. 1344) $T_1$ सुखं जग्मुर्. — (L. 1345) $T_1$ $G_6$ $M_1$ वसुदेवं. $G_6$ विवेश कुकुरैः सह. — (L. 1346) $G_2$ राजन्. $G_2$ वसुदेवे; $G_6$ वसुदेव-. — (L. 1347) $G_2$ आनंदितं. $G_{2.3}$ $M_1$ पर्यचरत्. — (L. 1348) $G_2$ देवकी (for रोहिणी). $G_{2.6}$ च ययौ देशम्. — (L. 1350) $T_1$ श्रीभिर् (for स्त्रीभिर्). $G_6$ ईक्षितो (for अक्षतैर्). — $G_3$ om. (hapl.) lines 1351–1353. — (L. 1351) $G_2$ सन्निवेशनम्; $G_5$ तन्नि° (for स्वं नि°). $G_{2.6}$ अभ्यगात्. — (L. 1353) $G_{2.6}$ $M_1$ रत्नानि धनधान्यं च (for the prior half). $G_2$ $M_1$ सभां च (for सभायां). — After line 1354, $G_{2.6}$ $M_1$ ins. four addl. lines (cf. v.l. line 1361). — (L. 1355) $T_1$ $G_3$ $M_1$ सांदीपनीं; $G_2$ °पिनीं. $G_6$ पूर्वो. $G_{2.6}$ ब्राह्मणीं ($G_6$ ब्रह्माणं) चापि भारत; $M_1$ ब्रह्मगार्ग्यं च भारत (for the post. half). — After line 1355, $G_{2.6}$ $M_1$ ins.:

यथान्यायं वासुदेव उपस्पृष्ट्वा महायशाः ।

[ Cf. post. half of line 1355. $G_2$ वासुदेवम्. $G_6$ उपसृत्य. $M_1$ उपस्पृष्ट्वा यथान्यायं वासुदेवो महायशाः ]

ववन्दे पृथुताम्राक्षः प्रीयमाणो महाभुजः ।
तथाश्रुपरिपूर्णाक्षमानन्दगतचेतसम् ।
ववन्दे सह रामेण पितरं वासवानुजः ।
ताभ्यां च मूर्ध्न्युपाघ्रातः केशवः परवीरहा ।
यथाश्रेष्ठमुपागम्य सात्वतान्यदुनन्दनः ।
सर्वेषां नाम जग्राह दाशार्हाणामधोक्षजः ।
ततः सर्वाणि वित्तानि सर्वरत्नमयानि च ।
व्यभजत्तानि तेभ्योऽथ सर्वेभ्यो यदुनन्दनः ।

Colophon.

भीष्मः ।

सा केशवमहामात्रैर्महेन्द्रप्रमुखैः सह ।
शुशुभे वृष्णिशार्दूलैः सिंहैरिव गिरेर्गुहा ।
अथासनगतान्सर्वानुवाच विबुधाधिपः ।
शुभया हर्षयन्वाचा महेन्द्रस्तान्महायशाः ।
कुकुरान्धकमुख्यांश्च तं च राजानमाहुकम् ।
यदर्थं जन्म कृष्णस्य मानुषेषु महात्मनः ।
यत्कृतं वासुदेवेन तद्वक्ष्यामि समासतः ।
अयं शतसहस्राणि दानवानामरिंदमः ।
निहत्य पुण्डरीकाक्षः पातालविवरं ययौ ।
यच्च नाधिगतं पूर्वैः प्रह्लादबलिशम्बरैः ।
तदिदं शौरिणा वित्तं प्रापितं भवतामिह ।
सपाशं मुरमाक्रम्य पाञ्चजन्यं च धीमता ।
शिलासंघानतिक्रम्य निसुम्भः सगणो हतः ।
हयग्रीवश्च विक्रान्तो दानवो निहतो बली ।
मथितश्च मृधे भौमः कुण्डले चाहृते पुनः ।
प्राप्तं च दिवि देवेषु केशवेन महद्यशः ।
वीतशोकभयाबाधाः कृष्णबाहुबलाश्रयाः ।
यजन्तो विविधैः सोमैर्मखैरन्धकवृष्णयः ।
पुनर्बाणवधे शौरिमादित्या वसुभिः सह ।
मन्मुखाभिगमिष्यन्ति साध्याश्च मधुसूदनम् ।
एवमुक्त्वा ततः सर्वानामन्त्र्य कुकुरान्धकान् ।
सस्वजे रामकृष्णौ च वसुदेवं च वासवः ।
प्रद्युम्नसाम्बनिशठाननिरुद्धं च सारणम् ।
बभ्रुं झिल्लिं गदं भानुं चारुदेष्णं च वृत्रहा ।
सत्कृत्य सारणाक्रूरौ पुनराभाष्य सात्यकिम् ।
सस्वजे वृष्णिराजानमाहुकं कुकुराधिपम् ।
भोजं च कृतवर्माणमन्यांश्चान्धकवृष्णिषु ।
आमन्त्र्य देवप्रवरो वासवो वासवानुजम् ।
ततः श्वेताचलप्रख्यं गजमैरावतं प्रभुः ।
पश्यतां सर्वभूतानामारुरोह शचीपतिः ।
पृथिवीं चान्तरिक्षं च दिवं च वरवारणम् ।
मुखाडम्बरनिर्घोषैः पूरयन्तमिवासकृत् ।
हैमयन्त्रमहाकक्ष्यं हिरण्मयविषाणिनम् ।
मनोहरकुथास्तीर्णं सर्वरत्नविभूषितम् ।
अनेकशतरत्नाभिः पताकाभिरलंकृतम् ।
नित्यस्रुतमदास्रावं क्षरन्तमिव तोयदम् ।
दिशागजं महामात्रं काञ्चनस्रजमास्थितः ।
प्रबभौ मन्दराग्रस्थः प्रतपन्भानुमानिव ।
ततो वज्रमयं भीमं प्रगृह्य परमाङ्कुशम् ।
ययौ बलवता सार्धं पावकेन शचीपतिः ।

— (L. 1356) G2.6 महायशाः (for °भुजः). — (L. 1357) G6 °चेतनः. — (L. 1359) G2.6 M1 read line 1359 after line 1356. G3.5 om. line 1359. — (L. 1360) G6 स तदा (for सात्वतान्). — T1 G3.5 ins. after line 1361: G2.6 M1, after 1354:

रामकृष्णौ समाश्लिष्य सर्वे चान्धकवृष्णयः ।
प्रीताः प्रियतमाः सर्वे वसुदेवसुतं प्रति ।
तं तु कृष्णः समाहृत्य रत्नौघधनसंचयम् ।
व्यभजत्सर्ववृष्णिभ्य आदध्वमिति चाब्रवीत् ।

[ (L. 1) G2 महाभागौ; G6 M1 समाश्रित्य (for °श्लिष्य). — (L. 2) G3 प्रीततमाः; G5 प्रीतमनाः (for प्रियतमाः). T1 ते प्रीतमनसः सर्वे. — (L. 3) G2 M1 रत्नौघं (for °घ-). ] — (L. 1362) T1 G3.5 M1 सर्वान(G5 °न्य)रत्नानि; G2 सर्वाणि रत्नानि. G2.6 सर्वरत्नमयान्वितं. — Colophon. *Adhy. no.:* T1 G2.3.5.6 M1 64. — (L. 1364) G2.6 महेंद्रप्रतिमैः. T1 M1 सभा (for सह). — (L. 1366) G6 अथ तानाह तान्सर्वान्. — (L. 1368) G6 कुरुरांधक° (for कुकुरान्धक°), कुरु- (for तं च) and आहुतं (for आहुकम्). — (L. 1370) G3.5 M1 तद् (for यद्). — (L. 1371) G3 ततः (for अयं). — (L. 1372) G6 विहत्य (for नि°). — (L. 1373) G2 नातिगतं; G6 नासिगतं. G2.3.5.6 °बलिशंबरैः. — (L. 1375) G3 सपाशं मार°; G6 सपाशमुर°. — (L. 1376) G3 निकुंभः; M1 निसुंदः. G6 सुगणो. — (L. 1377) G3.5 transp. दानवो and निहतो. — (L. 1378) T1 भीम; G3 भीमः (for भौमः). G2 पुरः (for पुनः). — (L. 1380) G2 °बलाश्रिताः. — (L. 1381) M1 यजंतु. G3.6 M1 सौमै( M1 °म्यै )र्. — (L. 1386) G2 °सांबप्रमुखान्; G6 °साम्बनिशठान्. — (L. 1387) G2 बभ्रुझल्लिं; M1 बभ्रुझिल्लिं. — (L. 1388) T1 G3.5 M1 सत्कृत्याशावहाक्रूरौ. G6 corrupt. — (L. 1390) T1 G3 सभोजं; G6 सुभोजं (for भोजं च). — (L. 1392) M1 कैलासशिखरप्रख्यं (for the prior half). — (L. 1396) T1 G3.5 हे( G5 हो )मयंत्रमहा°; G6 हेमयंत्रं महा°; M1 हेमसूत्रमहा°. — (L. 1397) T1 मनोमयं (for मनोहर-). — G3 om. line 1398. — (L. 1400) G3.5 दिशागजः. G2.3 °स्थितं (for °स्थितः). — (L. 1402) G6 ततो वज्रसमं भीष्मं. G5 सुवर्ण- (for प्रगृह्य). — (L. 1403) G3 यथा

तं करेणुगजव्रातैर्विमानैश्च मरुद्गणाः ।
पृष्ठतोऽनुययुः प्रीताः कुबेरवरुणग्रहाः ।
स वायुपथमास्थाय वैश्वानरपथं गतः ।
प्राप्य सूर्यपथं देवस्तत्रैवान्तरधीयत ।

Colophon.

भीष्मः ।

ततः सर्वदशार्हाणामाहुकस्य च याः स्त्रियः ।
नन्दगोपस्य महिषी यशोदा लोकविश्रुता ।
रेवती च महाभागा रुक्मिणी च पतिव्रता ।
सत्या जाम्बवती चोभे गान्धारी शिंशुमापि च ।
विशोका लक्ष्मणा साध्वी सुमित्रा केतुमा तथा ।
वासुदेवमहिष्योऽन्याः श्रिया सार्धं ययुस्तदा ।
विभूतिं द्रष्टुमनसः केशवस्य वराङ्गनाः ।
प्रीयमाणाः सभां जग्मुरालोकयितुमच्युतम् ।
देवकी सर्वदेवीनां रोहिणी च पुरस्कृता ।
ददृशुर्देवमासीनं कृष्णं हलभृता सह ।
तौ तु पूर्वमुपक्रम्य रोहिणीमभिवाद्य च ।
अभ्यवादयतां देवौ देवकीं रामकेशवौ ।
देवकीं सप्तदेवीनां यथाश्रेष्ठं च मातरः ।
ववन्दे सह रामेण भगवान्वासवानुजः ।
अथासनवरं प्राप्य वृष्णिदारपुरस्कृता ।
उभावङ्कगतौ चक्रे देवकी रामकेशवौ ।
सा ताभ्यामृषभाक्षाभ्यां पुत्राभ्यां शुशुभे तदा ।
देवकी देवमातेव मित्रेण वरुणेन च ।
ततः प्राप्ता यशोदाया दुहिता वै क्षणेन हि ।
जाज्वल्यमाना वपुषा प्रभयातीव भारत ।
एकानङ्गेति यामाहुः कन्यां तां कामरूपिणीम् ।
यत्कृते सगणं कंसं जघान पुरुषोत्तमः ।
ततः स भगवान्रामस्तामुपाक्रम्य भामिनीम् ।
मूर्ध्न्युपाघ्राय सव्येन परिजग्राह पाणिना ।
तां च तत्रोपसंगृह्य प्रियामिव सखीं समाम् ।
दक्षिणेन कराग्रेण परिजग्राह माधवः ।
ददृशुस्तां सभामध्ये भगिनीं रामकृष्णयोः ।
रुक्मपद्मशयां पद्मां श्रीमिवोत्तमनागयोः ।
अथाक्षतमहावृष्ट्या लाजपुष्पघृतैरपि ।
वृष्णयोऽवाकिरन्प्रीताः संकर्षणजनार्दनौ ।
सबालाः सहवृद्धाश्च सज्ञातिकुलबान्धवाः ।
उपोपविविशुः प्रीता वृष्णयो मधुसूदनम् ।
पूज्यमानो महाबाहुः पौराणां रतिवर्धनः ।
विवेश पुरुषव्याघ्रः स्ववेश्म मधुसूदनः ।
रुक्मिण्या सहितो देव्या प्रमुमोद सुखी सुखम् ।
तदन्तरं च सत्याया जाम्बवत्याश्च भारत ।
सर्वासां च यदुश्रेष्ठः सर्वकालविहारवान् ।
जगाम च हृषीकेशो रुक्मिण्याः स निवेशनम् ।
एष तात महाबाहो विजयः शार्ङ्गधन्वनः ।
एतदर्थं च जन्माहुर्मानुषेषु महात्मनः ।

Colophon.

भीष्मः ।

द्वारकायां ततः कृष्णः स्वदारेषु दिवानिशम् ।
सुखं लब्ध्वा महाराज प्रमुमोद महायशाः ।
पौलस्य कारणाच्चक्रे विबुधानां हितं तदा ।
सवासवैः सुरैः सर्वैर्दुस्तरं भरतर्षभ ।

(for ययौ). — (L. 1404) T1 करेणुभिर्गज°; G6 तं करेणुं गज°. T1 विमानैर्मरुतां गणाः; G6 °श्च मरुद्गणैः. — (L. 1405) G2 [ऽ]न्व° (for ऽनु°). T1 °वरुणाग्रगाः; G3.5 M1 °वरुणा ग्रहाः. — Colophon. *Adhy. no.:* T1 G2.3.5.6 M1 65. — (L. 1408) T1 यथा (for च याः). — (L. 1411) G6 M1 चैव (for चोभे). — G6 om. from the post. half of line 1411 to the prior half of line 1416. G2 M1 शिशुमा. — (L. 1412) M1 लक्ष्णा (for लक्ष्मणा). T1 सार्धं; G2 चापि; M1 साची (for साध्वी). — (L. 1413) G3 [ऽ]न्ये (for ऽन्याः). — (L. 1414) T1 G2 महात्मनः (for वराङ्गनाः). — (L. 1415) T1 G2.5 प्रियमाणाः. T1 सहाजग्मुर्; G2 ततो जग्मुर्; G3 M1 समाजग्मुर्. — For lines 1416–1440, cf. Hari. 2. 101. 8–21. — (L. 1416) G2 M1 सप्तदेवीनां. — (L. 1418) G2.6 अतिक्रम्य (for उप°). — (L. 1420) G2 रोहिणीं (for देवकीं), and °श्रेष्ठाश्च (for °श्रेष्ठं च). G3 मातरं. — (L. 1421) M1 भगवान्देवकीसुतः. — (L. 1423) G2 उभावंग°. — (L. 1424) G2 M1 शुशुभेधिकं. — (L. 1426) G3.5.6 M1 ह (for हि). — (L. 1428) G2 तामाहुः. — (L. 1430) G2 उत्क्रम्य च; G6 M1 उपक्रम्य. — (L. 1431) G6 पाणिं (for परि-). — (L. 1432) T1 °संगम्य; G2 °चक्रम्य; G6 M1 °संक्रम्य (for °संगृह्य). T1 सखीसमां; G2 सखीमिमां. — (L. 1433) G6 पाणिं (for परि-). — (L. 1435) T1 °पद्माशयां; G6 °पद्मशयाः; M1 °पत्रशयां. G3 रुक्मपादयशापद्मः (sic). G3 श्रीर् (for श्रीम्). G2 °नाभयोः (for °नागयोः). — (L. 1438) G6 M1 ये ज्ञाति° (for सज्ञाति°). — (L. 1441) T1 पुरुषव्याघ्र; M1 पुंडरीकाक्षः. G2 M1 स्वं (for स्व-). — (L. 1443) T1 G5 अनंतरं; G6 तदनंतरं (hypermetric!). G5 सत्यायां. G6 जांबवत्यां च. — (L. 1444) T1 G2 सर्वकालं (for °काल-). — (L. 1445) M1 रुक्मिण्या. G3.5 सं- (for स). — (L. 1446) G6 एतावता (for एष तात). G3 °धन्विनः. — Colophon. *Adhy. no.:* T1 G2.3.5.6 M1 66. — (L. 1448) T1 तदा (for ततः). G2 ततः स द्वारकां कृष्णः. G2 तदानिशं; G6 निवेशनं (for दिवानिशम्). — (L. 1449) G2 महाबाहुः (for °राज). — (L. 1450) G2.3 M1 प्रियं (for हितं). — (L. 1451) M1 दुष्करं (for दुस्तरं).

बाणो नामाभवद्राजा बलेर्ज्येष्ठसुतो बली ।
वीर्यवान्भरतश्रेष्ठ स च बाहुसहस्रवान् ।
ततश्चक्रे तपस्तीव्रं सत्येन मनसा नृप ।
रुद्रमाराधयामास स च बाणः समा बहु ।
तस्मै बहुवरा दत्ताः शंकरेण महात्मना ।
तस्माल्लब्ध्वा वरान्बाणो दुर्लभानसुरैर्भुवि ।
स शोणितपुरे राज्यं चकारारिनिसूदनो बले ।
त्रासिताश्च सुराः सर्वे तेन बाणेन पाण्डव ।
विजित्य विबुधान्सर्वान्सेन्द्रान्बाणः समा बहु ।
अशासत महद्राज्यं कुबेर इव भारत ।
ऋद्ध्यर्थं कुरुते यत्नं तस्य चैवोशना कविः ।
ततो राजन्नुषा नाम बाणस्य दुहिता तथा ।
रूपेणाप्रतिमा लोके मेनकायाः सुता यथा ।
अथोपायेन कौन्तेय अनिरुद्धो महाद्युतिः ।
प्राद्युम्निस्तामुषां प्राप्य प्रच्छन्नः प्रमुमोद ह ।
अथ बाणो महातेजास्तदा तत्र युधिष्ठिर ।
तं गुह्यनिलयं ज्ञात्वा प्राद्युम्निं सुतया सह ।
गृहीत्वा कारयामास वस्तुं कारागृहे बलात् ।
सुकुमारः सुखार्होऽथ तदा दुःखमवाप सः ।
बाणेन खेदितो राजन्ननिरुद्धो मुमोह च ।
एतस्मिन्नेव काले तु नारदो मुनिपुंगवः ।
द्वारकां प्राप्य कौन्तेय कृष्णं दृष्ट्वा वचोऽब्रवीत् ।

कृष्ण कृष्ण महाबाहो यदूनां कीर्तिवर्धन ।
त्वत्पौत्रो बाध्यमानोऽथ बाणेनामिततेजसा ।
कृच्छ्रं प्राप्तोऽनिरुद्धो वै शेते कन्यागृहे सदा ।
एवमुक्त्वा सुरर्षिर्वै बाणस्याथ पुरं ययौ ।
नारदस्य वचः श्रुत्वा ततो राजञ्जनार्दनः ।
आहूय बलदेवं वै प्रद्युम्नं च महाद्युतिम् ।
आरोह गरुत्मन्तं ताभ्यां सह जनार्दनः ।
ततः सुपर्णमारुह्य त्वरमाणा नरर्षभाः ।
जग्मुः क्रुद्धा महावीर्या बाणस्य नगरं प्रति ।
अथासाद्य महाराज तत्पुरं ददृशुश्च ते ।
ताम्रप्राकारसंवीतां रूप्यद्वारैश्च शोभिताम् ।
हेमप्रासादसंबाधां मुक्तामणिविचित्रिताम् ।
उद्यानवनसंपन्नां नृत्तगीतैश्च शोभिताम् ।
तोरणैः पक्षिभिः कीर्णां पुष्करिण्यैश्च शोभिताम् ।
तां पुरीं स्वर्गसंकाशां हृष्टपुष्टजनाकुलाम् ।
दृष्ट्वा मुदा युतां हैमां विस्मयं परमं ययुः ।
तस्य बाणपुरस्यासन्द्वारस्था देवताः सदा ।
महेश्वरो गुहश्चैव भद्रकाली च पावकः ।
एता वै देवता राजन्ररक्षुस्तां पुरीं सदा ।
अथ कृष्णो बलाज्जित्वा द्वारपालान्युधिष्ठिर ।
सुसंक्रुद्धो महातेजाः शङ्खचक्रगदाधरः ।
आससादोत्तरद्वारं शंकरेणाभिपालितम् ।

— (L. 1452) $G_2$ om. the prior half. $G_3$ $M_1$ ज्येष्ठः (for ज्येष्ठ-). — (L. 1453) $G_{5.6}$ भरतश्रेष्ठः. $G_6$ ह (for च). — (L. 1454) $G_2$ तेपे (for चक्रे). $T_1$ $G_{2.6}$ $M_1$ सत्वेन (for सत्येन). — (L. 1456) $M_1$ बहु तस्मै वरा दत्ताः. — (L. 1457) $G_2$ तांश्च (for तस्माल्). $T_1$ वराद्बाणो; $G_6$ महाबाहुर्. $G_3$ अमरैर्भुवि; $G_5$ स सुरैरपि (for असुरैर्भुवि). $G_3$ दुर्लभांश्च सुरैर्भुवि; $G_6$ वरं बाणो महाबलः. — (L. 1458) $G_6$ शोणितपुरं. $G_6$ भुवि (for बले). — (L. 1460) $G_2$ सेंद्रान् (for सर्वान्). $T_1$ बभूः; $G_5$ बहुः; $G_6$ भुवि (for बहु). $G_2$ बाणः संवत्सरान्बहून् (for the post. half). — (L. 1462) Om. in $G_2$ $M_1$. $T_1$ $G_5$ यज्ञं (for यत्नं). — (L. 1463) $M_1$ च या (for तथा). — $G_2$ $M_1$ om. line 1464. — (L. 1465) $G_6$ येनोपायेन बद्धोसौ. $M_1$ येन केनाप्युपायेन. — (L. 1466) $T_1$ $G_2$ प्रद्युम्न($G_2$ °म्नि)स्. — (L. 1467) $G_6$ महाबाहुस् (for °तेजास्). $T_1$ ततस्; $M_1$ तात ($G_2$ तदा). — (L. 1468) $G_2$ गुह्यं (for गुह्य-), and प्रद्युम्निं (for प्रा°). $G_6$ स तया (for सुतया). $G_{2.6}$ $M_1$ तदा (for सह). — (L. 1469) $M_1$ बद्धं (*sup. lin.* बंधं) (for वस्तुं). $G_6$ वस्तुं राजबले गृहात्. — (L. 1470) $G_2$ $M_1$ तथा ($G_2$ °दा) दुःखसमन्वितः. — (L. 1471) $G_2$ $M_1$ घातितो (for खेदितो). $G_6$ मुमोच ह. — (L. 1472) $T_1$ $G_{3.5}$ $M_1$ तस्मिन्नेव च काले तु ($G_3$ ततः काले); $G_6$ अस्मिन्नेव तु काले तु.

— (L. 1475) $G_2$ पौत्रस्ते (for त्वत्पौत्रो). $G_2$ $M_1$ बा($M_1$ ब)ध्यमानोद्य; $G_3$ °मानेन. $G_3$ [अ]मित° (for [अ]मित°). — (L. 1476) $G_2$ शेते कन्यापुरे तथा. — (L. 1477) $G_2$ एतदुक्त्वा. $T_1$ मुरः सर्वैर् (for सुरर्षिर्वै). — (L. 1479) $T_1$ $G_3$ बलदेवा वै. — (L. 1480) $G_6$ द्वाभ्यां (for ताभ्यां). — (L. 1481) $G_2$ तदा (for ततः), and ततस्ते भरतर्षभ (for the post. half). — (L. 1483) $G_3$ तत्पुरीं.
(L. 1484) $T_1$ ताम्रप्रकारसंवीतां. $G_2$ ताम्रप्राकारसंवृतां हेमप्राकारसंवृतां. — (L. 1485) Om. in $G_2$. $G_3$ हेमप्राकारसं°. — (L. 1486) $G_2$ °वनसंनाद्यां. — (L. 1487) $G_2$ पुष्करिण्योपशोभितां; $G_3$ पुष्करिण्या च शो°. — (L. 1489) $G_2$ युताः सर्वे; $M_1$ युता मैना (for युतां हैमां). — (L. 1490) $T_1$ $G_{5.6}$ तत्र (for तस्य). $T_1$ $G_3$ बाणपुरस्यार्थे; $G_5$ °स्यार्थं; $G_6$ °स्याथ. — After line 1490, $T_1$ $G_{5.6}$ ins.:

एकस्मिन्नग्नयो राजन्नन्यस्मिन्क्रौञ्चदर्पहा ।
महेश्वरः स्वयं राजन्दक्षिणद्वारि तस्थिवान् ।
संस्थिताः पश्चिमद्वारि रुद्रा भूतगणाः खगाः ।

[(L. 1) $G_6$ एतस्मिन्. — (L. 2) $T_1$ उत्तर° (for दक्षिण°).]

— (L. 1491) Om. in $G_6$. $G_2$ गुरुश्चैव. — (L. 1492) $G_2$ $M_1$ तदा (for सदा). — (L. 1494) $G_2$ °गदासिधृक् (for °गदाधरः). — (L. 1495) $G_6$ °दोत्तमद्वारं. $T_1$ $G_{2.6}$

तत्र तस्थौ महातेजाः शूलपाणिर्महेश्वरः ।
पिनाकं सशरं गृह्य बाणस्य हितकाम्यया ।
ज्ञात्वा तमागतं कृष्णं व्यादितास्यमिवान्तकम् ।
ततस्तौ चक्रतुर्युद्धं वासुदेवमहेश्वरौ ।
तद्युद्धमभवद्घोरमचिन्त्यं रोमहर्षणम् ।
अन्योन्यं तौ ततक्षेतामन्योन्यजयकाङ्क्षिणौ ।
दिव्यास्त्राणि च तौ देवौ क्रुद्धौ मुमुचतुश्च तौ ।
ततः कृष्णो रणं कृत्वा मुहूर्तं शूलपाणिना ।
विजित्य तं महादेवं ततो युद्धे जनार्दनः ।
अन्यांश्च जित्वा द्वारस्थान्प्रविवेश पुरोत्तमम् ।
प्रविश्य बाणमासाद्य स तत्राथ जनार्दनः ।
चक्रे युद्धं महत्क्रुद्धस्तेन बाणेन पाण्डव ।
बाणोऽपि सर्वशस्त्राणि शितानि भरतर्षभ ।
सुसंक्रुद्धस्तदा युद्धे पातयामास केशवे ।
पुनरुद्यम्य शस्त्राणां सहस्रं सर्वबाहुभिः ।
मुमोच बाणः संक्रुद्धः कृष्णं प्रति रणाजिरे ।
ततः कृष्णस्तदा छित्वा सर्वशस्त्राणि भारत ।
कृत्वा मुहूर्तं बाणेन युद्धं राजन्नधोक्षजः ।
चक्रमुद्यम्य राजन्वै दिव्यं शस्त्रोत्तमं ततः ।
सहस्रबाहूंश्चिच्छेद बाणस्यामिततेजसः ।
ततो बाणो महाराज कृष्णेन भृशपीडितः ।
छिन्नबाहुः पपाताशु विशाख इव पादपः ।
स पातयित्वा बालेयं बाणं कृष्णस्त्वरान्वितः ।
प्राद्युम्निं मोक्षयामास क्षिप्रं राजगृहे तदा ।
मोक्षयित्वाथ गोविन्दः प्राद्युम्निं सह भार्यया ।
बाणस्य सर्वरत्नानि असंख्यानि जहार सः ।
गोधनान्यथ सर्वस्वं स बाणस्यालये बलात् ।
जहार च हृषीकेशो यदूनां कीर्तिवर्धनः ।
ततः स सर्वरत्नानि चाहृत्य मधुसूदनः ।
क्षिप्रमारोपयांचक्रे सर्वस्वं गरुडोपरि ।
त्वरयाथ स कौन्तेय बलदेवं महाबलम् ।
प्रद्युम्नं च महावीर्यमनिरुद्धं महाद्युतिम् ।
उषां च सुन्दरीं राजन्भृत्यदासीगणैः सह ।
सर्वानेतान्समारोप्य रत्नानि विविधानि च ।
मुदा युक्तो महातेजाः पीताम्बरधरो बली ।
दिव्याभरणचित्राङ्गः शङ्खचक्रगदासिधृक् ।
आरुरोह गरुत्मन्तमुदयं भास्करो यथा ।
अथारुह्य सुपर्णं स प्रययौ द्वारकां प्रति ।
प्रविश्य स्वपुरं कृष्णो यादवैः सहितस्तदा ।
प्रमुमोद तदा राजन्स्वर्गस्थो वासवो यथा ।

Colophon.

भीष्मः ।

सूदिता मौरवाः पाशा निशुम्भनरकौ हतौ ।
कृतक्षेमः पुनः पन्थाः पुरं प्राग्ज्योतिषं प्रति ।

°रक्षितं (for °पालितम्). — (L. 1498) $T_1$ $G_6$ गदाहस्तमिवांतकं. — (L. 1499) $G_3$ ततस्तु चक्रुर्युद्धं तु (for the prior half). — (L. 1500) $G_2$ विचिंत्यं (for अचिंत्यं). $M_1$ घोर° (for रोम°). — (L. 1501) $G_2$ $M_1$ ततक्षाते (for °क्षेताम्). — (L. 1502) $G_3$ च ते; $M_1$ ततो (for the first च तौ). $G_{2.6}$ दिव्यान्यस्त्राणि तौ देवौ. $T_1$ corrupt. $G_2$ तदा (for the second च तौ). — (L. 1503) $G_{3.5}$ इति (for ततः). $G_6$ स कृष्णः समरं कृत्वा. — (L. 1505) $T_1$ वि- (for च). $G_{3.5}$ स विवेश. — (L. 1507) $G_2$ महा- (for महत्). $G_{3.5}$ ततो (for तेन). $T_1$ भारत (for पाण्डव). — (L. 1510) $G_2$ शस्त्राणि. — (L. 1512) $T_1$ $G_{3.5}$ तु संछि($G_5$ °जि)त्वा; $G_6$ तथा जित्वा (for तदा छित्वा). $G_2$ तानि सर्वाणि भारत. — (L. 1513) $T_1$ युद्ध्वा; $G_3$ युद्धे (for युद्धं). $G_3$ रोषम् (for राजन्). $G_2$ जनार्दनः (for अधोक्षजः). — (L. 1514) $G_3$ रोषाच्च (for राजन्वै). $G_6$ तथा (for ततः). — (L. 1515) $G_3$ सहस्रबाहुं. $G_6$ °तेजसं. — (L. 1516) $G_2$ महातेजः (for °राज). — (L. 1517) $G_3$ भिन्नबाहुः. — (L. 1518) $G_2$ बाणैस्तं (for बालेयं). — (L. 1519) $G_{3.5}$ प्रद्युम्निं. $M_1$ मोचयामास. $G_{2.3.6}$ क्षिप्रं. $G_{3.5}$ राजगृहात्; $M_1$ कारागृहे. — (L. 1521) $G_6$ दिव्यरत्नानि. $G_3$ om. from the post. half of line 1521 up to line 1523 (incl.). — (L. 1522) $G_2$ च (for [अ]थ). $T_1$ बाणस्य निधयै बलात्; $G_5$ $M_1$ वरुणस्यालये ब°. — (L. 1523) $G_2$ कुलवर्धनः. — (L. 1524) $T_1$ $G_{3.5.6}$ आहृत्य (for चाहृत्य). — (L. 1525) $T_1$ आरोपयामास. $G_{3.5}$ तत्सर्वं (for सर्वस्वं). — (L. 1526) $T_1$ बलदेव- (for °देवं). — (L. 1527) $G_{3.5}$ प्रा($G_5$ प्र)द्युम्निं. — $G_2$ om. lines 1528–1531. — (L. 1528) $T_1$ $G_6$ सार्धं (for राजन्). $G_3$ वृता (for भृत्य-). $T_1$ $G_6$ प्रियया चित्रलेखया ($T_1$ °लेपया) (for the post. half). — (L. 1529) $T_1$ $G_6$ दासीगणान् (for सर्वानेतान्). — (L. 1531) $T_1$ $G_{3.6}$ शार्ङ्ग° (for शङ्ख°). — (L. 1532) $G_6$ चित्रा भानुरिवाचलं (for the post. half). — (L. 1533) $G_3$ पुरीं (for प्रति). — (L. 1534) $G_5$ $M_1$ ततः (for तदा). — (L. 1535) $T_1$ $G_6$ सुखं (for तदा). — Colophon. *Adhy. no.:* $T_1$ $G_{2.3.5.6}$ $M_1$ 67. Lines 1536–1612 = (var.) Hari. 2. 102. 1–38 (Some lines from this passage agree nearly *verbatim* with Crit. Ed. 3. 13. 26–31). — (L. 1536) $G_2$ सूदिता द्वारपालाश्च. $T_1$ निसुंभ°; $G_2$ ससुंभ°; $G_3$ निकुंभ°; $M_1$ निसुंद°. — (L. 1537) $G_3$ कृतः (for कृत-). $G_2$ पुनः (for पुरं).

शौरिणा पृथिवीपालास्त्रासिता भरतर्षभ ।
धनुषश्च प्रणादेन पाञ्चजन्यस्वनेन च ।
मेघप्रख्यैरनीकैश्च दाक्षिणात्याभिसंवृतम् ।
रुक्मिणं त्रासयामास केशवो भरतर्षभ ।
ततः पर्जन्यघोषेण रथेनादित्यवर्चसा ।
उवाह महिषीं भोज्यामेष चक्रगदाधरः ।
जारूथ्यामाहुतिः क्राथः शिशुपालश्च निर्जितः
वक्रश्च सह शैब्येन शतधन्वा च क्षत्रियः ।
इन्द्रद्युम्नो हतः कोपाद्यवनश्च कशेरुमान् ।
हतः सौभपतिः साल्वः सहैव क्रथधन्वना ।
पर्वतानां सहस्रं च चक्रेण पुरुषोत्तमः ।
विभिद्य पुण्डरीकाक्षो द्युमत्सेनमयोधयत् ।
महेन्द्रशिखरे चैव निमेषान्तरचारिणौ ।
जग्राह भरतश्रेष्ठ वरुणस्यामितश्चरौ ।
इरावत्यामुभौ चैतावग्निसूर्यसमौ बले ।
गोपतिस्तालकेतुश्च निहतौ शार्ङ्गधन्वना ।
अक्षप्रपतने चैव नेमिहंसपथेषु च ।
उभौ तावपि कृष्णेन सुराष्ट्रौ विनिपातितौ ।
दग्धा वाराणसी तात केशवेन महात्मना ।
सानुबन्धः सराष्ट्रश्च काशीनामृषभो हतः ।
प्राग्ज्योतिषं पुरश्रेष्ठमसुरैर्बहुभिर्वृतम् ।
प्राप्य लोहितकूटानि कृष्णेन वरुणो जितः ।
अजेयो दुष्प्रधर्षश्च लोकपालो महाद्युतिः ।
इन्द्रद्वीपो महेन्द्रेण गुप्तो मघवता स्वयम् ।
पारिजातो हृतः पार्थ केशवेन बलीयसा ।
पाण्ड्यं पौण्ड्रं च मात्स्यं च कलिङ्गं च जनार्दनः ।
जघान सहितानन्यानङ्गराजं च मागधम् ।
एष चैकशतं हत्वा रथेन क्षत्रपुंगवान् ।
गान्धारीमवहत्कृष्णो महिषीं यादवर्षभः ।
अथ गाण्डीवधन्वानं क्रीडार्थं मधुसूदनः ।
जिगाय भरतश्रेष्ठ कुन्त्याश्च प्रमुखे विभुः ।
द्रोणं द्रौणिं कृपं कर्णं भीमसेनं सुयोधनम् ।
चक्रानुयाने सहितान्जिगाय भरतर्षभ ।
बभ्रोश्च प्रियमन्विच्छन्नेष चक्रगदाधरः ।
वेणुदारिहृतां भार्यामुन्ममाथ युधिष्ठिर ।
पर्याप्तां पृथिवीं सर्वां साश्वां सरथकुञ्जराम्

$T_1$ प्राग्जोतिषपुरं प्रति. — (L. 1538) $G_2$ शासिता (for त्रासिता). — (L. 1540) $G_5$ दक्षिणा°; $G_6$ °संवृता. — (L. 1542) $G_5$ रथेनात्यंतवर्चसा. — (L. 1543) $G_2$ उवाच. $G_2$ भार्याम्; $G_6$ भार्यां (for भोज्याम्). $G_6$ रूपेणाप्रतिमाव्यया (for the post. half). — (L. 1544) $G_2$ जारूढ्यामाहृत-क्रोधः; $G_3$ जारूढ्यामाहृतिक्राथः; $G_6$ जारूथ्यामाहृतिः क्रामः. — (L. 1545) $G_2$ शल्येन (for शैब्येन). — (L. 1546) $G_6$ गतः (for हतः). $T_1$ $G_5$ क्रोधाद् (for कोपाद्). $G_2$ कशेरुतान्. — (L. 1547) $G_2$ चैव (for साल्वः). $G_2$ माल्वश्च; $G_6$ सहेव (for सहैव). $T_1$ क्रोधधन्वना; $G_2$ क्रथधन्विनः; $G_6$ कृतधन्वना; $M_1$ क्रथकौशिकौ (*sup. lin.* शतधन्वना). — (L. 1549) $G_2$ विभज्य (for °भिद्य). — (L. 1551) $G_2$ रावणस्य हतौ चरौ; $G_3$ वानरावहितश्चरौ; $G_5$ वरुणश्चाभितश्चरौ; $G_6$ $M_1$ रावणस्याहि($M_1$ °भि)तश्चरौ. — (L. 1552) $T_1$ महाभागौ; $G_{2.6}$ महातेजा ($G_6$ °जाम्); $G_3$ उभौ जातौ; $M_1$ महाराज (for उभौ चैतौ). $T_1$ [अ]भिसूर्यसमौ; $G_2$ अपि सूर्यसमो. — (L. 1553) $T_1$ $G_6$ तालजंघश्च; $G_3$ ताळकेताश्च. $G_2$ शार्ङ्गधन्विना. — $T_1$ $G_6$ ins. after line 1553 ($G_6$ om. line 1554):

गोमन्तशिखरे केचित्केचिद् घ्नते निपातिताः ।
पाण्ड्याः पौण्ड्राश्च राजानो ह्यङ्गवङ्गकलिङ्गपाः ।

[ (L. 1) $G_6$ [ऽ]थ शौरिणा (for निपा°). (L. 2) $G_6$ मत्स्याश्च (for राजानो), and अंगवंगकलिंगकाः. ]

$G_6$ cont.:

निमिहंसपतिं चैव कृष्णस्तु हतवान्पुरा ।

— (L. 1554) $G_3$ °प्रपतनश्चैव. $T_1$ -वर्षेषु; $G_2$ -पदेषु; $G_3$ -पथेपि (for -पथेषु). $M_1$ °हंसश्च दानवौ. — (L. 1555) Om. in $G_6$. $G_2$ स्वराष्ट्रे; $M_1$ सुराष्ट्रौ. $G_3$ च निपातितौ. — (L. 1556) $T_1$ $G_6$ तेन (for तात). $T_1$ केनचित्कारणेन च; $G_6$ पुरं स्वर्गमिवापरं (for the post. half). — $G_6$ om. lines 1557–1558. — (L. 1557) $T_1$ सानुबंधः. $G_2$ सुराष्ट्रं च. $T_1$ $G_2$ $M_1$ अधिपो (for ऋषभो). — (L. 1558) Om. in $G_{2.3}$. $G_{3.5}$ पुरः श्रेष्ठम्. $M_1$ बलिभिर् (for बहु°). — (L. 1559) $G_6$ वरुणोदितः. — $G_6$ om. lines 1560–1564. — (L. 1561) $G_2$ इंद्रद्वीपे. $G_2$ भगवता (for मघ°). $G_3$ गुप्ते भगवता त्वदः (for the post. half). $T_1$ इंद्रो देवगणैः सार्धं जीतो जित्वा गजोत्तमं. — (L. 1562) $G_2$ पारिजाता हृताः. $T_1$ $G_2$ पार्थः. $G_2$ केशवेन महात्मना. — (L. 1563) $T_1$ $G_5$ मत्स्यं च. — (L. 1565) $G_6$ -रथे (for -शतं). $G_3$ सेना-क्षत्रियपुंगवान्; $G_6$ रथेन क्षत्रियर्षभान्. — (L. 1566) $T_1$ $G_5$ $M_1$ आवहत्; $G_6$ अहजत् (sic). $G_6$ महर्षीं (for महिषीं). — (L. 1567) $G_2$ एष (for अथ). $M_1$ (*sup. lin.*) क्रीडायां. — (L. 1568) $G_2$ भरतश्रेष्ठ. $G_2$ प्रभुः; $G_6$ [ऽ]पि तु (for विभुः). — After line 1568, $G_6$ ins.:

विदितं च कुरुश्रेष्ठ यमौ चैवात्र यं जयम् ।

— (L. 1570) $G_3$ चक्रानुयाने. — (L. 1571) $G_6$ धृष्टद्युम्नं विजित्य सः (for the post. half). — (L. 1572) $T_1$ $G_2$ वेणुदारी वृतां; $G_5$ °रिहृतां. $G_2$ प्रममाथ; $M_1$ (*sup. lin.*) आजहार (for उन्ममाथ). — After line 1572, $G_6$ ins.:

अयं दुःशासनस्तस्य गदया पोथितस्तदा ।

— (L. 1573) Om. in $G_6$. $G_3$ पर्याप्तः. — (L. 1574) $T_1$ $G_2$ वेणुदारीवशे; $G_3$ °रिवशो. — After line 1574, $G_6$ ins.:

वेणुदारिवशे युक्तां जिगाय मधुसूदनः ।
अवाप्य तपसा वीर्यं बलमोजश्च भारत ।
त्रासिताः सगणाः सर्वे बाणेन विबुधाधिपाः ।
वज्राशनिगदापाशैस्त्रासयद्भिरनेकशः ।
तस्य नाभीद्रणे मृत्युर्देवैरपि सवासवैः ।
सोऽभिभूतश्च कृष्णेन निहतश्च महात्मना ।
छित्त्वा बाहुसहस्रं तद्गोविन्देन महात्मना ।
एष पीठं महाबाहुः कंसं च मधुसूदनः ।
पैठकं चातिलोमानं निजघान जनार्दनः ।
जम्भमैरावतं चैव विरूपं च महायशाः ।
जघान भरतश्रेष्ठ शम्बरं चारिमर्दनम् ।
एष भोगवतीं गत्वा वासुकिं भरतर्षभ ।
निर्जित्य पुण्डरीकाक्षो रौहिणेयममोचयत् ।
एवं बहूनि कर्माणि शिशुरेव जनार्दनः ।
कृतवान्पुण्डरीकाक्षः संकर्षणसहायवान् ।
एवमेषोऽसुराणां च सुराणां चापि सर्वशः ।
भयाभयकरः कृष्णः सर्वलोकेश्वरः प्रभुः ।
एवमेष महाबाहुः शास्ता सर्वदुरात्मनाम् ।
कृत्वा देवार्थममितं स्वस्थानं प्रतिपत्स्यते ।
एष भोगवतीं रम्यामृषीकान्तां महायशाः ।
द्वारकामात्मसात्कृत्वा सागरं गमयिष्यति ।
बहुपुण्यवतीं रम्यां चैत्ययूपवतीं शुभाम् ।
द्वारकां वरुणावासं प्रवेक्ष्यति सकाननाम् ।
तां सूर्यसदनप्रख्यां मनोज्ञां शार्ङ्गधन्वनः ।
विसृष्टां वासुदेवेन सागरः प्लावयिष्यति ।
सुरासुरमनुष्येषु नासीन्न भविता क्वचित् ।
यस्तामध्यवसद्राजा अन्यत्र मधुसूदनात् ।
आजमानास्तु शिशवो वृष्ण्यन्धकमहारथाः ।
तज्जुष्टं प्रतिपत्स्यन्ते नाकपृष्ठं गतासवः ।
एवमेष दशार्हाणां विधाय विधिना विधिम् ।
विष्णुर्नारायणः सोमः सूर्यश्च भविता स्वयम् ।
अप्रमेयोऽनियोज्यश्च यत्रकामगमो वशी ।
मोदते भगवान्भूतैर्बालः क्रीडनकैरिव ।
नैष गर्भत्वमापेदे न योन्यामावसत्प्रभुः ।
आत्मनस्तेजसा कृष्णः सर्वेषां कुरुते गतिम् ।
यथा बुद्बुद उत्थाय तत्रैव तु निलीयते ।
चराचराणि भूतानि तथा नारायणे सदा ।
न प्रमातुं महाबाहुः शक्यो भारत केशवः ।
परं ह्यपरमेतस्माद्विश्वरूपान्न विद्यते ।

Colophon.

22

After 2. 38. 31, S (G4 om.) ins.:

हंसस्य तद्वचः श्रुत्वा मुदिताः सर्वपक्षिणः ।
ऊचुश्चैनं खगा हंसं परिवार्य च सर्वशः ।

बभ्रुवे दत्तवान्राजन्नसाकं पश्यतामसौ ।
ततः प्रभृति राजानः सर्वे बिभ्यति चास्य वै ।

— G6 om. lines 1575–1581. — (L. 1575) G2 अवाच्यं तपसो वीर्यं. — (L. 1576) G3 विबुधाः (for सगणाः). — (L. 1577) G2 °बाणैस् (for °पाशैस्). G2 M1 ताडय° (for त्रासय°). — (L. 1578) M1 यस्य नाधिगतो मृत्युर् (for the prior half). G2 सुरासुरैः (for सवासवैः). — (L. 1579) M1 महासुरः (for °त्मना). — (L. 1580) Om. in T1 G2.5.6. — (L. 1581) G3 एष वीरं महाबाहुं. — After line 1581, G2 repeats line 1575. — (L. 1582) G3 पैलकं. G2 चातिलोमानि. G6 पैश्कं च त्रिलोमान; M1 पैठिकं चासिलोमानं. — (L. 1583) G2 जंबुम्. G6 जंबमैरावतं चापि. — (L. 1584) T1 G2.5 चारिमर्दनः. — (L. 1585) G6 वासुकिं सर्वराजभिः. — (L. 1586) G2 M1 रौक्मिणेयम् (for रौहि°). — (L. 1587) M1 शिशुरेष. — (L. 1589) G6 चैव (for चापि). — (L. 1590) G3 भयाभयंकरः. — (L. 1591) G2.6 एव (for एष). — After line 1591, G6 ins.:

यत्करिष्यति तत्सर्वं पश्यसि त्वं शृणोषि च ।

— G6 om. lines 1592–1593. — (L. 1592) M1 स्वं (for स्व-). G2 स्वस्थानं प्राप्यते पुनः; G3 °नं प्रतिपद्यते. — (L. 1593) G2 पुण्याम् (for रम्याम्). — (L. 1594) G3 om. the prior half. G3 विधिवद् (for सागरं). G2 स गमिष्यति (for गमयिष्यति). — G6 om. lines 1595–1599. — (L. 1595) T1 G2 बहुरम्यवतीं पुण्यां; M1 °पुण्यवती रम्या. M1 चैत्ययूपवती शिवा. — (L. 1596) M1 द्वारका. T1 G2 वरुणावासां. M1 सकानना. — (L. 1597) M1 मतङ्गः (for मनोज्ञां). T1 °धन्वनां. — (L. 1598) T1 विशिष्टां; G5 विश्लिष्टां. G5 प्लवयिष्यति. — (L. 1599) T1 G2 [अ]भून् (for [आ]सीन्). — (L. 1600) G2 राजन् (for राजा). T1 G5 M1 यस्तामध्यावसद्राजा (M1 °वसेद्राजन्); G6 कस्तामर्येवसद्राजन्. G3 नान्यत्र. — G6 om. lines 1601–1602. — (L. 1601) M1 शशिवद् (for शिशवो). — (L. 1602) G2 तेदुष्टं; M1 स्वैर्जुष्टं (for तज्जुष्टं). T1 नाकपृष्ठ-; G5 नागपृष्ठं. — (L. 1603) G2 एवमेव; G5 एष एव (for एवमेष). G6 दाशार्हाणां. — (L. 1604) G5 सविता (for भविता). — G6 om. lines 1605–1606. — (L. 1607) T1 G6 आपेते (for आपेदे). G3 विभुः (for प्रभुः). — (L. 1609) G2 परिलीयते; G6 तु विलीयते. — (L. 1611) G2 तत् (for न). G6 भरत. — (L. 1612) G2.3.6 परं हि परम(G3 °त)स्तस्माद्. G2 विश्वरूपं. — Colophon. *Adhy. no.*: T1 G2.3.5.6 M1 68.

22

(L. 1) G2 तु (for तद्). — (L. 2) G3 परिपूज्य (for

पक्षिणः ।
कथयस्व भवान्धर्मं पक्षिणां तत्समासतः ।
को हि नाम द्विजश्रेष्ठ ब्रूहि नो धर्ममुत्तमम् ।
हंसः ।
प्रजास्वहिंसा धर्मो वै हिंसाधर्मः खगव्रजाः ।
एतदेवानुबोद्धव्यं धर्माधर्मः समासतः ।
वृद्धहंसवचः श्रुत्वा पक्षिणस्ते सुसंहिताः ।
ऊचुश्च धर्मलुब्धास्ते स्मयमाना इवाण्डजाः ।
पक्षिणः ।
धर्मं यः कुरुते नित्यं लोके धीरतरोऽण्डजः ।
स यत्र गच्छेद्धर्मात्मा तन्नो ब्रूहीह तत्त्वतः ।
हंसः ।
धर्मं यः कुरुते नित्यं लोके सद्वृत्तिमास्थितः ।
स गच्छेत्सर्वलोकान्वै तथा वै नियतं खगाः ।
पक्षिणः ।
ज्ञात्वा हि धर्माधर्मं च नित्यं लोके द्विजोत्तम ।
दुर्लभं स्वर्गलोकं तु तं कस्मात्त्वं न गच्छसि ।
हंसः ।
बाला यूयं न जानीध्वं धर्मसूक्ष्मं विहंगमाः ।
धर्मं यः कुरुते लोके सततं शुभबुद्धिना ।
स चायुषोऽन्ते स्वं देहं त्यक्त्वा स्वर्गं तु गच्छति ।
स चाहमपि च त्यक्त्वा काले देहमिमं द्विजाः ।
स्वर्गलोकं गमिष्यामि इयं धर्मस्य वै गतिः ।
शिशुपालः ।
एवं धर्मकथां चक्रे स हंसः पक्षिणां भृशम् ।
पक्षिणः शुश्रुवुर्भीष्म सततं धर्ममेव ते ।

23

After 2. 41. 12, K4 V1 B (B1 ... ) D (except D4. 6) S (G1. 2 after 11) ins.:

पृथिव्यां सागरान्तायां यो वै प्रतिसमो भवेत् ।
दुर्योधनं च राजेन्द्रमतिक्रम्य महाभुजम् ।
जयद्रथं च राजानं कृतास्त्रं दृढविक्रमम् ।
द्रुमं किंपुरुषाचार्यं लोके प्रथितविक्रमम् ।
अतिक्रम्य महावीर्यं किं प्रशंससि केशवम् ।
वृद्धं च भारताचार्यं तथा शारद्वतं कृपम् ।
अतिक्रम्य महावीर्यं किं प्रशंससि केशवम् ।
धनुर्धराणां प्रवरं रुक्मिणं पुरुषोत्तमम् ।
अतिक्रम्य महावीर्यं किं प्रशंससि केशवम् ।
भीष्मकं च महावीर्यं दन्तवक्त्रं च भूमिपम् ।
भगदत्तं यूपकेतुं जयत्सेनं च मागधम् ।

---

°वार्य). G6 [अ]थ (for त्र). — (L. 3) T1 G1–3. 5 M om. the ref. M यथा- (for भवान्). G1–3. 6 M तु (for तत्). T1 समानतः; G6 M1 विशेषतः (for समासतः). — (L. 4) G6 मे (for नो). — (L. 5) G1. 2 om. the ref. G3 हिंस्रः प्रजा ह्यधर्मो वै (for the prior half). G3 हिंस्रधर्माः. M खगाः स्मृताः (for खगव्रजाः). — (L. 6) M1 [अ]व- (for [अ]नु-). T1 G3. 5 M °धर्मं; G6 °धर्मौ (for °धर्मः). G1. 2 सनातनः (for समासतः). — (L. 7) M3 एवं (for वृद्ध-). T1 G5 सुसंगताः (for सुसंहिताः). — (L. 8) G3 M1 स्तूयमाना (for स्मय°). — (L. 9) T1 G1. 2 om. the ref. G1 M °तरोंडज. — (L. 10) G3 विहंगम (for [इ]ह तत्त्वतः). — G1. 2 om. lines 11–14 along with the ref. — (L. 11) M सद्वृत्तमास्थितः; G3 संवृत्तमंजसा. — (L. 12) G6 गच्छन् (for गच्छेत्). G5 स्वर्गं° (for सर्व°). G3 निधनं गतः (for नियतं खगाः). — (L. 13) M1 जानन् (for ज्ञात्वा). G3 M त्वं (for च). — (L. 14) M1 दुर्लभः स्वर्गलोकस्तु. G6 तत् (for तं). G3 कंस कस्मान्न गच्छसि (for the post. half). — (L. 16) T1 शुभबुद्धिनां; G3 हितबुद्धिना; G6 शुभदर्शनः; M शुभबुद्धिमान्. — (L. 17) G1 स; G3 च (for तु). — (L. 18) G1. 2. 6 M तथा (for स च). G3 वस् (for the second च). G2. 3. 5 कामं (for काले). T1 G2. 3 अमुं; G5. 6 मम (for इमं). — (L. 20) G6 गतिः (for भृशम्). — (L. 21) G6 द्विजास्तु (for पक्षिणः). G2 सततं (for शुश्रुवुः).

23

(L. 1) Om. in K4. S प्रीतिकरो (for प्रतिसमो). — (L. 2) B3 Dn D2. 3 G5. 6 तं (for च). B3 D1. 2 अतिक्रम्य (for च राजेन्द्रम्), and कुरुराजं (for अतिक्रम्य). — (L. 3) B3 D1. 2 कृतास्त्रं युद्धदुर्मदं; S (except G6 M2) °स्त्रं दृढधन्विनं. — (L. 4) M2 om. (hapl.) from the post. half of line 4 up to the prior half of line 5. K4 लोकेप्रतिमविक्रमं. — (L. 5) = lines 7, 9 and 16. B2–4. 6 D1. 2 G1. 2. 6 M2 माधवं (for केशवम्). K4 माधवं विप्रशंससि. — D3 om. lines 6–8; G4 om. lines 6–10. — (L. 6) K4 V1 B1–3. 6 D1. 3 G5 M1 भरताचार्यं. T1 G3. 5. 6 M transp. तथा and कृपं. K4 कृपं शारद्वतं तृप; G1. 2 कृपं शारद्वतः सुतं. — (L. 7) B3. 6 D1. 2 G1. 2. 3 माधवं (for केशवम्). K4 माधवं किं प्रशंससि. — G3 om. lines 8–16. — (L. 8) Om. in K4 T1 G1–3. 5 M. — K4 D3 S (G4. 6 om.) transp. lines 9 and 10. — (L. 9) M1 महाबाहुं. B3. 6 D1. 2 G1. 2 माधवं (for केशवम्). — (L. 10) D3 G1. 2 दंतवक्रं (as above), the rest °वक्त्रं. — After line 10, D5 repeats lines 7–10. — B (except B3) D1. 2. 5 ins. after line 10 a line similar to line 9 (D5, after the repetition of line 10; and with v.l. माधवं for केशवम् in B3. 6). — G5 om. lines 11–16. — (L. 11) Om. in D3. D5 भार्गवं (for मागधम्). — After line 11, K4 B1. 3. 5. 6 D1. 2. 5 ins. a line

विराटद्रुपदौ चोभौ शकुनिं च बृहद्बलम् ।
विन्दानुविन्दावावन्त्यौ पाण्ड्यं श्वेतमथोत्तमम् ।
शङ्खं च सुमहाभागं वृषसेनं च मानिनम् ।
एकलव्यं च विक्रान्तं कालिङ्गं च महारथम् ।
अतिक्रम्य महावीर्यं किं प्रशंससि केशवम् ।

24

After 2. 42. 4, S ins.:

पश्यतां भूमिपालानां शिशुपालः प्रतापवान् ।
स रणायैव संक्रुद्धः संनद्धः सर्वराजभिः ।
सुनीथः प्रययौ क्षिप्रं पार्थयज्ञजिघांसया ।
ततश्चक्रगदापाणिः केशवः केशिहा हरिः ।
सध्वजं रथमास्थाय दारुकेण सुसत्कृतम् ।
भीष्मेण दत्तहस्तोऽसौ युद्धाय समुपस्थितः ।
तेन पापस्वभावेन कोपितान्सर्वपार्थिवान् ।
आससाद तदा कृष्णः सज्जितैकरथे स्थितः ।
ततः पुष्करपत्राक्षं गरुडध्वजमच्युतम् ।
दिवाकरमिवोद्यन्तं ददृशुः सर्वपार्थिवाः ।
दृष्ट्वा कृष्णमथायान्तं प्रतपन्तमिवौजसा ।
स्थितं पुष्परथे दिव्ये पुष्पकेतुमिवापरम् ।
यथार्हं केशवे वृत्तिमवशाः प्रतिपेदिरे ।
तानुवाच महाबाहुर्महासुरनिबर्हणः ।
वृष्णिवीरस्तदा राजन्सान्त्वयन्परवीरहा ।
अपेत सबलाः सर्वे आश्वस्ता मम शासनात् ।
मा दुष्टान्दूषयेत्पाप एष वै सर्वपार्थिवान् ।

25

After 2. 42. $7^{ab}$, $G_6$ ins.:

बभ्रोर्भार्यामथादत्ते समापश्यन्त यादवाः ।
तदानीं हन्तुमारब्धो न भज्येनमथान्यता ।
तस्यर्थे व भवो वध्वा (sic) तदासन्संवृतं नृपान् ।
अतिप्रसंगदोषेण तामादाय च केवलम् ।
बभ्रवे दत्तवान्पूर्वं युष्माकं पश्यतां मिथः ।
गोमन्ते पर्वते पूर्वं निहते मागधेऽपि च ।
अनेन च सृगालेन न वै पादिदं (sic) किल ।
ततः कुण्डिनयात्रायां कृतवान्विप्रियाणि मे ।
तानि सर्वाणि संख्यातुं न शक्ष्यामि नराधिपाः ।
काकतालीयन्यायेन सर्वं मे रिपुनाशनम् ।
एतस्मिन्कलहे भूपाः कोटिशस्तु मया हताः ।
क्षमा लालज्जयाम्यद्य (sic) दुष्टस्त्रीहरणं यथा ।
पितृष्वस्रे प्रियं भूपाः करिष्येऽन्यं महत्तरम् ।

26

S ins. after 2. 42. 11 ($G_6$, which om. $7^{c}$–$11^{d}$, ins. after App. I No. 25):

विशालराज्ञो दुहितां मम पित्रा वृतां सतीम् ।
अनेन कृत्वा संधानं करूशेन जिहीर्षया ।
वृष्णिदारान्विलुप्यैष हत्वा च कुकुरान्धकान् ।
पापबुद्धिरुपातिष्ठत्संप्रविश्य ससंभ्रमम् ।
जरासंधं समाश्रित्य कृतवान्विप्रियाणि मे ।
तानि सर्वाणि संख्यातुं न शक्ष्यामि नराधिपाः ।

similar to line 9 (with v.l. माधवं for केशवम् in $B_6$). — $T_1$ $G_3$ om. lines 12–16; $G_{1.2.4}$ M om. lines 12–15. — (L. 12) $B_{1.3.4.6}$ $D_3$ महाबलं. — (L. 13) B (except $B_3$) $D_{1-3.5}$ °थोत्तरं. — (L. 14) $B_3$ अंगं (for शङ्खं). $K_4$ $B_{1.4.6}$ °वीर्यं (for °भागं). — (L. 15) $K_4$ $B_6$ $D_{1-3}$ कलिंगं. — (L. 16) $B_{2.6}$ $G_{1.2}$ माधवं (for केशवम्). $K_4$ माधवं किं प्रशंससि.

24

(L. 1) $G_{5.6}$ सर्वभूतानां (for भूमिपालानां). — (L. 2) $G_6$ सुरणायैव; $M_2$ रणायैव तु (for स रणायैव). $G_3$ संक्रुद्धः (for संनद्धः). — (L. 5) $G_{2.3}$ M om. the post. half of line 5 and the prior half of line 6. $G_4$ पौरुषेण समन्वितः (for the post. half). — (L. 6) $G_6$ आरुरोह रथोत्तमं (for the post. half). — (L. 7) $G_{1.2}$ $M_2$ पापस्वनेनैव; $G_5$ कोपस्वभावेन. — (L. 8) $G_2$ जितैरेकरथस्थितः (for the post. half). — (L. 9) $G_6$ तार्क्ष्यध्वजरथस्थितं (for the post. half). — (L. 11) $T_1$ $G_{4.6}$ आरोपयंतं स्वां केचित् ($G_6$ ज्यां कृष्णं). $G_5$ प्रपतंतम् (for प्रतपन्तम्). — $G_{1-3}$ M om. line 12. — After line 12, $G_4$ repeats line 11. — (L. 13) $G_1$ अथार्हां; $M_1$ यथार्हां. — (L. 15) $G_3$ $M_1$ त्वया; $G_4$ तथा; $M_2$ स्थितान् (for तदा). $T_1$ $G_2$ परवीरहन् ($G_2$ °ह); $G_3$ $M_1$ परया गिरा. — (L. 17) $T_1$ $G_1$ अदुष्टो ($T_1$ °ष्टं); $G_2$ मा दुष्टो; $G_{3-5}$ अदू($G_5$ °दु)ष्टान् (for मा दुष्टान्). $G_5$ पापाद् (for पाप). $G_{5.6}$ M वः (for वै). $T_1$ $G_{2.3.6}$ $M_1$ सर्वपार्थिवाः.

26

$G_6$ om. lines 1–7. $G_{1-3}$ $M_1$ transp. lines 1–2 and 3–4. — (L. 1) $T_1$ $G_3$ M दुहिता. $G_4$ विशालराज्ञो दुर्विनीताम् (hypermetric!). $G_3$ सति; $G_4$ अपि (for मम). $T_1$ $M_2$ वृता सती. — (L. 2) $M_1$ कारुशेन. $T_1$ $G_{3-5}$ M जिहीर्ष($G_3$ °र्षि)ता. — $G_5$ om. lines 3–4. — (L. 5) $M_2$ जरासंधः. — (L. 6) $G_2$ शक्नोमि (for शक्ष्यामि). $T_1$ नराधिपाः

एवमेतदपर्यन्तमेव वृष्णिषु किल्बिषी ।
अस्माकमयमारम्भाञ्चकार परमानृजुः ।
शतं क्षन्तव्यमस्माभिर्वधार्हाणां किलागसाम् ।
बद्धोऽस्मि समयैर्घोरैर्मातुरस्यैव संगरे ।
तत्तथा शतमस्माकं क्षान्तं क्षयकरं मया ।
द्वौ तु मे वधकालेऽस्मिन्न क्षन्तव्यौ कथंचन ।
यज्ञविघ्नकरं हन्यां पाण्डवानां च दुर्हृदम् ।
इति मे वर्तते भावस्तस्मिन्नीयां कथं न्वहम् ।

27

After 2. 42. 14[ab], G1 ins. (cf. App. I, No. 28, lines 34–68):

आकालिकं पुष्पफलं राष्ट्रक्षोभं विनिर्दिशेत् ।
वनस्पतिः पूज्यमानः पूजितोऽपूजितोऽपि वा ।
यदा भज्येत वातेन भिद्यते नमितोऽपि वा ।
अग्निवायुभयं विद्याच्छ्रेष्ठो वारि विनश्यति ।
दिशः सर्वाश्च दीप्यन्ते जायन्ते राजविभ्रमाः ।
भिद्यमानो यदा वृक्षो निनदेच्चापि पातितः ।
सह राष्ट्रं च पतितं न तं वृक्षं प्रपातयेत् ।
अथैनं छेदयेत्कश्चित्प्रतिक्रुद्धो वनस्पतिः ।
छेत्ता भेत्ता पतिश्चैव क्षिप्रमेव नशिष्यति ।
देवतानां च पतनं मण्टपानां च पातनम् ।
अचलानां प्रकम्पश्च तत्पराभवलक्षणम् ।
अर्चा यत्र प्रनृत्यन्ति नदन्ति च हसन्ति च ।
उन्मीलन्ति निमीलन्ति राष्ट्रक्षोभं विनिर्दिशेत् ।
शिला यदि प्रसिञ्चन्ति स्नेहांश्चोदकसंभवान् ।
अन्यद्वा विकृतं किंचित्तद्भयस्य निदर्शनम् ।
म्रियन्ते वा महामात्रा राजा सपरिवारकः ।
पुरस्य वा भवेद्व्याधी राष्ट्रे देशे च विभ्रमाः ।
देवतानां यदावासे राज्ञां वा यत्र वेश्मनि ।
भाण्डागारायुधागारे निविशेत यदा मधु ।
सर्वं तदा भवेत्स्थानं हन्यमानं बलीयसा ।
आगन्तुकं भयं तत्र भवेदित्येव निर्दिशेत् ।
पादपश्चैव यो यत्र रक्तं स्रवति शोणितम् ।
दन्ताग्रात्कुञ्जरो वापि शृङ्गाद्वा वृषभस्तथा ।
पादपाद्वाङ्गविभ्रंशः कुञ्जराद्राजविभ्रमः ।
गोब्राह्मणविनाशः स्याद्वृषभस्येति निर्दिशेत् ।
छत्रं नरपतेर्यत्र निपतेत्पृथिवीतले ।
सराष्ट्रो नृपतिस्तत्र क्षिप्रमेव विनश्यति ।
देवागारेषु वा यत्र राज्ञो वा यत्र वेश्मनि ।
विकृतं यदि दृश्येत नागरागेषु वा पुनः ।
तस्य देशस्य पीडा स्याद्राज्ञो जनपदस्य वा ।
अनावृष्टिभयं घोरमतिदुर्भिक्षमादिशेत् ।

28

After 2. 42. 16. 8 (in G3 after 16[a]) ins.:

विहाय परमोद्विग्नाश्चेदिराजं चमूमुखे ।
तांस्तु विप्रद्रुतान्सर्वान्साश्वपत्तिरथद्विपान् ।
दाशिनान्वृष्णिवीरेण तामिनानुरूविक्रमान् ।
कृष्णतेजोहतान्सर्वान्समीक्ष्य वसुधाधिपान् ।
शिशुपालो रथेनैकः प्रत्युपायात्स केशवम् ।
रुषा ताम्रेक्षणो राजञ्शलभः पावकं यथा ।

Colophon.

वैशंपायनः ।

ततो युद्धाय संनद्धं चेदिराजं युधिष्ठिरः ।
दृष्ट्वा मतिमतां श्रेष्ठो नारदं समुवाच ह ।

युधिष्ठिरः ।

अन्तरिक्षे च भूमौ च न तेऽस्त्यविदितं क्वचित् ।
यानि राजविनाशाय भौमानि च खगानि च ।
निमित्तानीह जायन्ते उत्पाताश्च पृथग्विधाः ।
एतदिच्छामि कार्त्स्न्येन श्रोतुं त्वत्तो महामुने ।

वैशंपायनः ।

इत्येवं मतिमान्विप्रः कुरुराजस्य धीमतः ।
पृच्छतः सर्वमव्यग्रमाचचक्षे महायशाः ।

(for नरा°). — (L. 7) T1 G3–5 किल्बिषं. — G2 om. lines 8–10. — (L. 8) G1 आरंभान्; G4 आतंकान्; G6 आरंभं. — (L. 9) G1 कृतागसां; G6 किलार्हणां (for किलागसाम्). — (L. 10) G3 स्व-; G6 [ऽ]स्य (for ऽस्मि). G1 समये घोरे. G1 संनिधौ (for संगरे). — (L. 11) G6 तचथा. G4 शांतम् (for शतम्). — (L. 12) G2.6 M2 न क्षंतव्यं (G6 °व्यः); G5 अक्षंतव्ये. — (L. 13) T1 G3.4 दुर्हृदां.

28

G2 om. lines 1–4; G3 om. line 1 and the prior half of line 2. — (L. 2) G4 द्रौद्र द्रुतान् (for विप्रद्रुतान्). G3 विश्व°; G4.6 अश्व° (for साश्व°). — (L. 3) Om. in G6. G3 विष्णु° (for वृष्णि°). — (L. 4) G6 कृष्णतेजोविनिर्दग्धान्. G6 M1 संवीक्ष्य. — (L. 5) T1 प्रत्युपेयात्; G4 °यायात् (for °पायात्). — (L. 6) Om. in G3 M1. G4 रोष- (for रुषा). — Colophon. *Adhy. no.:* T1 G2.3.5.6 M1 75; G4 51. — (L. 8) G2.3.6 M1 श्रेष्ठं. M1 नारदं वाक्यमब्रवीत्. — (L. 9) T1 G2.6 M1 om. the ref. — (L. 10) G3 राज- (for यानि), and खचराणि (for च खगानि). — (L. 11) G2 विजानंत (for [इ]ह जायन्ते). — (L. 12) T1 महामुनेः. — (L. 14) G6 पृच्छतः सोपि तत्सर्वम्, and

नारदः ।
पराक्रमं च मार्गं च संनिपातं समुच्छ्रयम् ।
आरोहणं कुरुश्रेष्ठ अन्योन्यं प्रति सर्पणम् ।
रश्मीनां व्यतिसंसर्गं व्यायामं वृत्तिपीडनम् ।
दर्शनादर्शनं चैव अदृश्यानां च दर्शनम् ।
हानिं वृद्धिं च ह्रासं च वर्णस्थानं बलाबलम् ।
सर्वमेतत्परीक्षेत ग्रहाणां ग्रहकोविदः ।
भौमाः पूर्वं प्रवर्तन्ते खेचराश्च ततः परम् ।
उत्पद्यन्ते च लोकेऽस्मिन्नुत्पाता देवनिर्मिताः ।
यदा तु सर्वभूतानां छाया न परिवर्तते ।
अपरेण गते सूर्ये तत्पराभवलक्षणम् ।
अच्छाये विमलच्छाया प्रतिच्छायेव लक्ष्यते ।
यत्र चैत्यकवृक्षाणां तत्र विद्यान्महद्भयम् ।
शीर्णपर्णप्रवालाश्च शुष्कपर्णाश्च चैत्यकाः ।
अपभ्रष्टप्रवालाश्च तत्राभावं विनिर्दिशेत् ।
स्निग्धपत्रप्रवालाश्च दृश्यन्ते यत्र चैत्यकाः ।
ईहमानाश्च दृष्टाश्च भावस्तत्र न संशयः ।
पुष्पे पुष्पं प्रजायेत फले वा फलमाश्रितम् ।
राजा वा राजमात्रो वा मरणायोपपद्यते ।
प्रावृट्छरदि हेमन्ते वसन्ते वापि सर्वशः ।
अकालजं पुष्पफलं राष्ट्रक्षोभं विनिर्दिशेत् ।
नदीनां स्रोतसोऽकाले द्योतयन्ति महाभयम् ।
वनस्पतिः पूज्यमानः पूजितोऽपूजितोऽपि वा ।
यदा भज्येत वातेन भिद्यते नमतेऽपि वा ।
अग्निवायुभयं विद्याच्छ्रेष्ठो वात्र विनश्यति ।
दिशः सर्वाश्च दीप्यन्ते जायन्ते राजविभ्रमाः ।
छिद्यमानो यदा वृक्षो विनदेच्चापि पातितः ।
सह राष्ट्रं च नदति न तं वृक्षं प्रपातयेत् ।
अथैनं छेदयेत्कश्चित्प्रतिक्रुद्धो वनस्पतिम् ।
छेत्ता भेत्ता पतिश्चैव क्षिप्रमेव विनश्यति ।
देवतानां च पतनं मण्डपानां च घुष्टनम् ।
अचलानां प्रकम्पश्च तत्पराभवलक्षणम् ।
निशि चेन्द्रधनुर्दृष्टं ततोऽपि च महद्भयम् ।
तद्द्रष्टुरेव भीतिः स्यान्नान्येषां भरतर्षभ ।
रात्राविन्द्रधनुर्दृष्ट्वा तद्राष्ट्रं परिवर्जयेत् ।
देवता यत्र नृत्यन्ति नदन्ति च हसन्ति च ।
उन्मीलन्ति निमीलन्ति राष्ट्रक्षोभं विनिर्दिशेत् ।
शिला यत्र प्रसिञ्चन्ति स्नेहांश्चोदकसंभवान् ।
अन्यद्वा विकृतं किंचित्तद्भयस्य निदर्शनम् ।
म्रियते वा महामात्रो राजा सपरिवारकः ।
पुरस्य वा भवेद्व्याधी राष्ट्रे देशे च विभ्रमः ।
देवतानां यदावासे राज्ञां वा यत्र वेश्मनि ।
भाण्डागारायुधागारे निविशेत यदा मधु ।
सर्वं तद्दाहयेत्स्थानं हन्यमानं बलीयसा ।

यथातथं (for महायशाः). — (L. 15) $G_{3.4}$ संनिपात- (for °पातं). $G_8$ समुच्छ्रियं. — (L. 16) $T_1$ $G_{3.5.6}$ $M_1$ अन्योन्यप्रति-. — (L. 17) $G_4$ प्रतिसंसर्गं; $G_6$ वृत्ति°; $M_1$ व्यतिसर्गं च. — (L. 18) $G_2$ दर्शनादर्शनानां हि दर्शनं चास्य दर्शनं. — (L. 19) $T_1$ $G_5$ हानिवृद्धी. $M_1$ वर्णं स्थानं. $G_8$ महाबलं. — (L. 20) $T_1$ °कोविदाः. $G_3$ गृहाणां गृह°. — (L. 21) $G_4$ प्रपद्यंते (for प्रवर्तन्ते). — (L. 22) $G_8$ उत्पाद्यंते. — (L. 23) $G_2$ नु (for न). $T_1$ परिपत्स्यते (for °वर्तते). — (L. 24) $G_{2.4}$ अपराह्णे (for °रेण). $G_2$ यत्पराभवमक्षयं (for the post. half). — (L. 25) $T_1$ $G_{5.6}$ विमला (for विमल-). $G_2$ °च्छायैव. $G_{2-6}$ $M_1$ दृश्यते (for लक्ष्यते). — (L. 26) $T_1$ चैत्रक° (for चैत्यक°). — (L. 27) $T_1$ जीर्ण°; $G_3$ स्वर्ण° (for शीर्ण°). $T_1$ शुष्कपर्णं च. — $G_{2.4}$ om. lines 28–29. — (L. 28) $T_1$ $G_3$ $M_1$ अपभ्रृ($M_1$ °हृ)ष्ट($G_3$ °ष्टि)प्रवालाश्च. — (L. 29) $G_3$ °पर्ण° (for °पत्र°). — (L. 30) $G_4$ रुद्ध° (for ईह°). $G_3$ पृष्ठा°; $M_1$ हृष्टा° (for दृष्टा°). $G_{5.6}$ भयं (for भावस्). — (L. 31) $G_4$ फले फलमथाश्रितं. — (L. 32) $M_1$ राजपुत्रो. — (L. 33) $T_1$ $G_{2-5}$ $M_1$ चापि (for वापि). — (L. 35) Om. in $G_{2.4}$ $M_1$. $G_{5.6}$ महद्भयं (for महाभयं). — $G_4$ om. lines 36–50. — (L. 37) $T_1$ $G_{5.6}$ $M_1$ यदा भज्येन्निवा($G_6$ °पा)तेन. — $G_6$ om. lines 39–40. — (L. 39) $G_2$ $M_1$ जायते राज($G_2$ °ज्य)विभ्रमः. — (L. 40) $G_2$ विद्यमाने यदा वृक्षे. $G_2$ निवेदे°; $M_1$ निनदे° (for विनदे°). — (L. 41) $G_6$ पतति (for नदति). $T_1$ प्रतापयेत्; $G_2$ निपात° (for प्रपात°). $G_6$ तं वृक्षं न प्र°. — (L. 42) $G_6$ अथैतं. $G_8$ शोधयेत् (for छेदयेत्). $T_1$ कच्चित्; $G_6$ किंचित् (for कश्चित्). $G_2$ पथं रुद्धं; $G_{3.6}$ प्रतिक्रुद्धं. $T_1$ वनस्पतिः. — (L. 43) $G_8$ भविष्यति (for विनश्यति). — (L. 44) $G_{2.6}$ अंडानां चापि ($G_6$ चैव). $T_1$ $G_{3.6}$ पुष्टनं; $G_5$ घृष्टनं. $G_8$ मंटपानां च घुष्टमे (sic). — $G_2$ $M_1$ om. lines 46–48; $G_3$ om. lines 46–47. — (L. 47) $G_{5.6}$ हानिः (for भीतिः). — (L. 49) $G_6$ अर्चा यत्र प्रनृत्यंति (for the prior half). — (L. 51) $G_{3.4}$ स्नेहाश्च (for स्नेहांश्च). — (L. 52) $G_5$ [अ]धिकृतं; $G_6$ $M_1$ [अ]धि कृतं (for विकृतं). $M_1$ तत्पराभवलक्षणं (for the post. half). — (L. 53) $G_{2.5}$ $M_1$ म्रियंते; $G_{3.6}$ म्रीयंते; $G_4$ म्रीयते (for म्रियते). $G_2$ महारात्रौ; $G_4$ महामात्यो; $G_6$ $M_1$ महामात्रा. $G_{2.4}$ $M_1$ सपरिचारकः. — (L. 56) $G_{3.5.6}$ भांडागारेयुधागारे. $T_1$ निवेशेत (for निवि°). $G_{2.4}$ विनिवेशयते मधु. — (L. 57) $T_1$ $G_5$ तदा ($G_5$ °द-) भवेत् (for तद्दाहयेत्). — $G_8$ om.

आगन्तुकं भयं तत्र भवेदित्येव निर्दिशेत् ।
पादपश्चैव यो यत्र रक्तं स्रवति शोणितम् ।
दन्ताग्रात्कुञ्जरो वापि शृङ्गाग्राद्वृषभस्तथा ।
पादपाद्राष्ट्रविभ्रंशः कुञ्जराद्राजविभ्रमः ।
गोब्राह्मणविनाशः स्याद्वृषभस्येति निर्दिशेत् ।
छत्रं नरपतेर्यस्य निपतेत्पृथिवीतले ।
स सराष्ट्रो नरपतिः क्षिप्रमेव विनश्यति ।
देवागारेषु वा यत्र राज्ञो वा यत्र वेश्मनि ।
विकृतं यदि दृश्येत नागावासेषु वा पुनः ।
तस्य देशस्य पीडा स्याद्राज्ञो जनपदस्य वा ।
अनावृष्टिभयं घोरं दुर्भिक्षमिति निर्दिशेत् ।
बाहुभङ्गे तु देवानां ग्रहस्थानां भयं भवेत् ।
भग्ने प्रहरणे विद्यात्सेनापतिविनाशनम् ।
आगन्तुका च प्रतिमा स्थानं यत्र न विन्दति ।
अभ्यन्तरेण षण्मासाद्राजा त्यजति तत्पुरम् ।
प्रदीर्यते मही यत्र विनदत्यपि पाल्यते ।
म्रियते तत्र राजा च तच्च राष्ट्रं विनश्यति ।
एणीपदान्वा सर्पान्वा डुण्डुभानथ दीप्यकान् ।
मण्डूको ग्रसते यत्र तत्र राजा विनश्यति ।
अभिन्नं वाप्यपक्वं वा यत्रान्नमुपचीयते ।
जीर्यन्ते वा म्रियन्ते वा तदन्नं नोपभुज्यते ।
उदपाने च यत्रापो विवर्धन्ते युधिष्ठिर ।
स्थावरेषु प्रवर्तन्ते निर्गच्छेच्च पुनस्ततः ।
अपादं वा त्रिपादं वा द्विशीर्षं वा चतुर्भुजम् ।
स्त्रियो यत्र प्रसूयन्ते ब्रूयात्तत्र पराभवम् ।
हस्तिनी महिषी गौर्वा खरोष्ट्रमथ सूकरम् ।
ईदृशानि प्रजायन्ते विद्यात्तत्र पराभवम् ।
अजैडकाः स्त्रियो गावोऽवयश्चान्येऽपि योनयः ।
विकृतानि प्रजायन्ते तत्र तत्र पराभवः ।
नदी यत्र प्रतिस्रोतमावहेत्कलुषोदकम् ।
दिशश्च न प्रकाशन्ते तत्पराभवलक्षणम् ।

Colophon.

नारदः ।

एतानि तु निमित्तानि यानि चान्यानि भारत ।
केशवादेव जायन्ते भौमानि च खगानि च ।
चन्द्रादित्यौ ग्रहाश्चैव नक्षत्राणि च भारत ।
वायुरग्निस्तथैवापः पृथिवी च जनार्दनात् ।
यस्य देशस्य हानिं वा वृद्धिं वा कर्तुमिच्छति ।
तस्मिन्देशे निमित्तानि तानि तानि करोत्ययम् ।
योऽसौ चेदिपतेस्तात विनाशः समुपस्थितः ।
निवेदयति गोविन्दः स्वैरुपायैर्न संशयः ।
इयं प्रचलिता भूमिरशिवं वान्ति मारुताः ।
राहुश्चाप्यपतत्सोममपर्वणि विशां पते ।
सनिर्घाताः पतन्त्युल्कास्तमः संजायते भृशम् ।
चेदिराजविनाशाय हरिरेष विजृम्भते ।

वैशंपायनः ।

एवमुक्त्वा तु भगवान्नारदो विरराम ह ।
ताभ्यां पुरुषसिंहाभ्यां तस्मिन्युद्ध उपस्थिते ।
ददृशुर्भूमिपालास्ते घोरानौत्पातिकान्बहून् ।
तत्र तैर्दृश्यमानानां दिक्षु सर्वासु भारत ।
अश्रूयन्त तदा राजन्नशिवानामशिवा गिरः ।
ररास च मही कृत्स्ना सवृक्षपुरपर्वता ।

(hapl.) lines 59–62. — (L. 59) $M_1$ चापि (for चैव). — (L. 60) $G_6$ वृषभस्य वा (for °भस्तथा). — (L. 62) $T_1$ $G_2$ $M_1$ ऋषभस्येति; $G_4$ वृषभश्चैव. — (L. 63) $G_{2.4.6}$ $M_1$ यत्र (for यस्य). — (L. 64) $G_{2.5}$ स सराष्ट्रे. $G_6$ पतेद्राजन् (for नरपतिः). — $G_4$ om. line 66. — (L. 68) $G_6$ अतिदुर्भिक्षमादिशेत् (for the post. half). — (L. 69) $G_4$ बाहुभंगेषु. $G_6$ अर्चाया बाहुभंगेन (for the prior half). — (L. 71) $G_{2.4.6}$ $M_1$ आगंतुका तु ($G_4$ °कं तु; $G_6$ °कादि-). — (L. 73) $G_{2.4.5}$ $M_1$ विदीर्यंते. $G_4$ विनंदत्यपि. $T_1$ $G_5$ पाल्यते (for पाल°). $G_3$ विर्निंदत्यविवान्यते (sic). — (L. 74) $G_{4.5}$ म्रीयते; $G_6$ म्रियते. $G_6$ यत्र (for तत्र). — (L. 75) $G_6$ फणिपदान्; $M_1$(*sup. lin.* as above) श्रेणीपदान्. $G_4$ डुंडुका° (for डुण्डुभा°). $T_1$ $G_3$ दिव्यकान्; $G_{2.6}$ $M_1$ दीपकान्. — (L. 76) Om. in $G_3$. $G_{5.6}$ मंडुको. $M_1$ तत्र विद्यान्महद्भयं. — (L. 77) $G_4$ उपचीर्यंते; $G_6$ °वीयते. — (L. 78) $T_1$ $G_4$ जीवंते; $G_{3.5}$ $M_1$ जीयंते; $G_6$ जीर्यंते (for जीर्यन्ते). $G_2$ भवंतो वा म्रियंतो वा. $G_4$ नोपयुज्यते; $G_6$ °भुंजते. — (L. 79) $G_6$ वने वने (for उदपाने). — (L. 80) $G_3$ स्थावरे च. $G_{2.5}$ प्रवर्धंते (for °र्तन्ते). — (L. 81) $T_1$ आपादं. $G_3$ द्विपादं (for त्रि°). $G_3$ त्रिशीर्षं (for द्वि°). — (L. 82) $G_{2.4}$ स्त्रियो वा यत्र सूयंते. $G_4$ भूयात्तत्र पराभवः. — $G_{2.4}$ om. (hapl.) lines 83–86; $G_6$ om. (hapl.) lines 83–84. — (L. 85) $T_1$ $G_{3.5.6}$ $M_1$ अजै($G_{3.5}$ °जे)ल्काः. $G_{3.5}$ ये चान्ये वापि; $M_1$ वयांस्यन्येपि (for ऽवयश्चान्येपि). — (L. 86) $T_1$ $M_1$ यत्र तत्र. — Colophon. *Adhy. no.:* $T_1$ 70; $G_{2.3.5.6}$ $M_1$ 76; $G_4$ 52. — (L. 89) Om. in $T_1$. $G_2$ दुर्-; $M_1$ च (for तु). — (L. 90) Om. in $G_5$. $G_6$ खचराणि (for च खगानि). — (L. 91) $G_3$ चंद्रादित्या; $G_5$ °दित्य-. — (L. 92) $G_6$ वसुर् (for वायुर्). $G_4$ तथा चापः. — (L. 93) $G_6$ हानिर् (for हानिं). — (L. 95) $G_6$ विनाशं समुपस्थितं. — (L. 97) $G_{2.5.6}$ $M_1$ अशिवा (for °वं). — (L. 98) $M_1$ सूर्यम् (for सोमम्). — (L. 103) $T_1$ $G_2$ घो($G_3$ वै)रानुत्पातकान्. $G_6$ तदा (for बहून्). — (L. 104) $T_1$ सततं दृश्यमानानां; $G_2$ $M_1$ सततं वाद्य°; $G_3$ तत्र तैर्दृश्यं°; $G_4$ तत्र तैर्वांश्य°; $G_6$ तत्र ते दृश्य°. — (L. 105) $G_6$ रवाः (for गिरः). — (L. 106) $T_1$ $G_3$ °वृण°;

अपर्वणि च मध्याह्ने सूर्यं स्वर्भानुरग्रसत् ।
ध्वजाग्रे चेदिराजस्य सर्वरत्नपरिष्कृते ।
अपतन्वाच्युतो गृध्रस्तीक्ष्णतुण्डः परंतप ।
आरण्यैः सह संहृष्टा ग्राम्याश्च मृगपक्षिणः ।
चुकुशुर्भैरवं तत्र तस्मिन्युद्ध उपस्थिते ।
एवमादीनि घोराणि भौमानि च खगानि च ।
औत्पातिकान्यदृश्यन्त संक्रुद्धे शार्ङ्गधन्विनि ।

Colophon.

वैशंपायनः ।

महद्विस्फारयन्राजा ततश्चेदिपतिर्धनुः ।
अभियास्यन्हृषीकेशमुवाच मधुसूदनम् ।
एकस्त्वमसि मे शत्रुस्त्वां हत्वाद्य माधव ।
ततः सागरपर्यन्तां पालयिष्यामि मेदिनीम् ।
द्वैरथं काङ्क्षितं यन्मे तदिदं पर्युपस्थितम् ।
चिरस्य बत मे दिष्ट्या वासुदेव सह त्वया ।
अद्य त्वां निहनिष्येऽहं भीष्मं च सह पाण्डवैः ।
एवमुक्त्वा स तं बाणैर्निशितैरात्ततेजनैः ।
विव्याध युधि तीक्ष्णाग्रैश्चेदिराड्यदुपुंगवम् ।
कङ्कपत्रच्छदा बाणाश्चेदिराजधनुश्च्युताः ।
विविशुस्ते तदा कृष्णं भुजंगा इव पर्वतम् ।
नाददानस्य चैद्यस्य शरानस्यस्ततोऽपि वा ।
ददृशुस्तेऽन्तरं केचिद्गतिं वायोरिवाम्बरे ।
चेदिराजमहामेघः शरजालाम्बुमांस्तदा ।
अभ्यवर्षद्धृषीकेशं पयोद इव पर्वतम् ।
ततः शार्ङ्गमधिज्यं कृत्वा सशरमच्युतः ।
आबभाषे महाबाहुः सुनीथं परवीरहा ।
अयं त्वां मामकस्तीक्ष्णश्चेदिराज महाशरः ।
भेत्तुमर्हति वेगेन महाशनिरिवाचलम् ।
एवं ब्रुवति गोविन्दे ततश्चेदिपतिः पुनः ।
मुमोच निशितानन्यान्कृष्णं प्रति शरान्बहून् ।
अथ बाणार्दितः कृष्णः शार्ङ्गमायम्य दीप्तिमान् ।
मुमोच निशितान्बाणाञ्शतशोऽथ सहस्रशः ।
ताञ्शरांस्तु स चिच्छेद शरवर्षैश्च चेदिराट् ।
षड्भिश्चान्यैर्जघानाशु केशवं चेदिपुंगवः ।
ततोऽस्त्रं सहसा कृष्णः प्रमुमोच जगत्पतिः ।
अस्त्रेणैव महाबाहुर्नाशयामास चेदिराट् ।
ततः शतसहस्रेण शराणां नतपर्वणाम् ।
सर्वतः समवाकीर्य शौरिं दामोदरं तदा ।
ननाद बलवान्क्रुद्धः शिशुपालः प्रतापवान् ।
इदं चोवाच संक्रुद्धः केशवं परवीरहा ।
अद्याङ्गं मामका बाणा भेत्स्यन्ति तव संयुगे ।
हत्वा त्वां ससुतामात्यान्पाण्डवांश्च तरस्विनः ।
आनृण्यमद्य यास्यामि जरासंधस्य धीमतः ।
कंसस्य केशिनश्चैव नरकस्य तथैव च ।
इत्युक्त्वा क्रोधताम्राक्षः शिशुपालो जनार्दनम् ।
अदृश्यः शरवर्षेण सर्वतः समवाकिरत् ।
ततोऽस्त्रेणैव भगवानकृन्तत शरान्बहून् ।
निकृत्य च शरान्सर्वानन्तर्धातुं प्रचक्रमे ।

$G_6$ °क्षुन°; $M_1$ °कुल° (for °पुर°). — (L. 109) $T_1$ अपतन्वाच्युता गृध्रास्तीक्ष्णतुंडाः. — (L. 110) $T_1$ $G_{3.5}$ $M_1$ (*sup. lin.* as above) संसृष्टा (for संहृष्टा). — (L. 112) $G_5$ om. भौमानि च. $G_6$ खचराणि (for च खगानि). — (L. 113) $G_2$ औत्पातकानि दृश्यंत; $G_3$ औत्पादिकान्यदृ°; $G_4$ उत्पातका°. — Colophon. *Adhy. no.*: $T_1$ $G_{2.3.5}$ $M_1$ 77; $G_6$ 70; $G_4$ 53. — (L. 114) $G_{5.6}$ विस्फारयन्. — (L. 116) $T_1$ $M_1$ त्वा (for त्वां). — (L. 118) $G_2$ प्रत्युपस्थितं. — (L. 120) $G_{4-6}$ $M_1$ त्वा. $G_2$ निहनिष्यामि. $G_2$ बांधवैः (for पाण्डवैः). — (L. 121) $G_4$ तु (for स). $G_4$ आमतेजसैः; $G_6$ नतपर्वभिः. — (L. 123) $G_6$ °च्युता (for °च्छदा). — (L. 124) $G_{3.6}$ भुजगा इव. — $G_2$ om. (hapl.) lines 125–128. — (L. 125) $G_4$ नापदानस्य. $G_4$ न शरानस्यतो; $M_1$ शरानभ्यसतो. — (L. 126) $T_1$ $G_{4.6}$ $M_1$ चिरं (for तेऽन्तरं). $T_1$ किंचिद्. — (L. 127) $G_{5.6}$ $M_1$ शरधारांबु°. — (L. 129) $T_1$ $G_{2.6}$ °मित्रघ्नः. — (L. 131) $T_1$ $G_{3.5.6}$ $M_1$ त्वा. $T_1$ $G_2$ मामको बाणश्; $G_5$ °कास्तीक्ष्णाश्. $T_1$ $G_2$ महासुर; $G_6$ °शिरः (for °शरः). — (L. 132) $G_3$ °मर्हसि. — (L. 135) $T_1$ $G_3$ आनम्य (for आयम्य). $G_2$ $M_1$ दीप्तिमत्; $G_6$ वीर्यवान् (for दीप्तिमान्). — (L. 136) $G_3$ मुक्त्वांश्च (for मुमोच). $G_2$ सहसा (for निशितान्). — (L. 137) $T_1$ $G_{2.6}$ $M_1$ शरवर्षेण. — (L. 138) $G_3$ षड्च्छरान्यैर् (for षड्भिश्चान्यैर्). — (L. 139) $G_6$ $M_1$ जगद्गुरुः. — (L. 140) $G_6$ शस्त्रेणैव. $M_1$ °राज (for °बाहुर्). $G_2$ शमयामास (for नाश°). — (L. 141) $G_2$ शरसहस्रेण. — (L. 142) $G_2$ °कीर्यत् (for °कीर्य). $T_1$ $G_{3-5}$ तथा (for तदा). $G_6$ चैद्यलक्ष्यं यदूत्तमः (for the post. half). — (L. 144) $G_6$ केशवः. — After line 144, $G_4$ ins.:

अमृष्यत्क्रोधताम्राक्षः शिशुपालो जनार्दनम् ।

while $G_6$ ins.:

क्षणं तिष्ठ रथोपस्थे चैद्यनाथ सुनिस्त्रपः ।
भोजेशं च जरासंधं त्वां द्रष्टुं योजयाम्यहम् ।
ताभ्यां विना रणे द्रष्टुं वीर्यं नार्हसि चेदिप ।
इत्युदीर्य त्वदृश्यः सञ्शरवर्षैरवाकिरत् ।

— $G_6$ om. lines 145–153. — (L. 145) $G_2$ ते (for [अ]ङ्गं). — (L. 146) $G_{2.4}$ $M_1$ त्वां हत्वा (by transp.). $G_2$ $M_1$ ससुतामात्यं. $G_2$ तपस्विनः. — $G_2$ om. from क्रोधता° in line 149 to अदृश्यः in line 150. — (L. 150) $G_4$ अदृश्यं; $M_1$ आदिश्य (for अदृश्यः). — (L. 151) $G_2$ $M_1$ चान्योन्यं (for भगवान्). $G_2$ $M_1$ अ($M_1$ न्य)कृंतेतां (for अकृन्तत). $G_4$ न्यकृंतत ततः शरान् (for the post. half). — (L. 152) $G_{2.4}$ $M_1$ अंतर्धानाय चक्रतुः ($G_4$ °मे).

अन्तर्धानगतौ वीरौ शुशुभाते महाबलौ ।
साधु साध्विति भूतानि पूजयामासुरम्बरे ।
न दृष्टपूर्वमस्माभिर्युद्धमीदृशकं पुरा ।
ततः कृष्णं जघानाशु शिशुपालस्त्रिभिः शरैः ।
कृष्णोऽपि बाणैर्विव्याध सुनीथं पञ्चभिर्युधि ।
ततः सुनीथः सप्तत्या नाराचैरर्दयद्बली ।
ततोऽतिविद्धः कृष्णेन सुनीथः क्रोधमूर्छितः ।
विव्याध निशितैर्बाणैर्वासुदेवं स्तनान्तरे ।
पुनः कृष्णं त्रिभिर्विद्ध्वा ननादावसरे नृपः ।
ततोऽतिदारुणं युद्धं सहसा चक्रतुः शरैः ।
तौ नखैरिव शार्दूलौ दन्तैरिव गजोत्तमौ ।
दंष्ट्राभिरिव पञ्चास्यौ तुण्डकैरिव कुक्कुटौ ।
दारयेतां शरैस्तीक्ष्णैरन्योन्यं युधि तावुभौ ।
ततो मुमुचतुः क्रुद्धौ शरवर्षमनुत्तमम् ।
शरैरेव शरांश्छित्त्वा तावुभौ पुरुषर्षभौ ।
चक्रातेऽस्त्रमयं युद्धं घोरं तदतिमानुषम् ।
आग्नेयमस्त्रं मुमुचे शिशुपालः प्रतापवान् ।
वारुणेनास्त्रयोगेन नाशयामास केशवः ।
कौबेरमस्त्रं सहसा चेदिराट् प्रमुमोच ह ।
कौबेरेणैव सहसानाशयज्जगतः प्रभुः ।
याम्यमस्त्रं ततः क्रुद्धो मुमुचे काळमोहितः ।
याम्येनैवास्त्रयोगेन याम्यमस्त्रं व्यनाशयत् ।
गान्धर्वेण च गान्धर्वं मानवं मानवेन च ।
वायव्येन च वायव्यं रौद्रं रौद्रेण चाभिभूः ।
ऐन्द्रमैन्द्रेण भगवान्वैष्णवेन च वैष्णवम् ।
एवमस्त्राणि कुर्वाणौ युयुधाते महाबलौ ।
ततो मायां विकुर्वाणो दमघोषसुतो बली ।
गदामुसलवर्षं तच्छक्तितोमरसायकान् ।
परश्वथमुसुण्ठीनां पातयामास चेदिराट् ।
अमोघास्त्रेण भगवान्व्यनाशयत केशवः ।
शिलावर्षं महाघोरं पातयामास केशवे ।
वज्रास्त्रेणाभिसंकुद्धश्चूर्णमेवाकरोत्प्रभुः ।
जलवर्षं ततो घोरं व्यसृजच्चेदिपुंगवः ।
वायव्यास्त्रेण भगवान्व्याक्षिपच्छत्रतो हरिः ।
निहत्य सर्वमायां वै सुनीथस्य जनार्दनः ।
स मुहूर्तं चकाराशु द्वंद्वयुद्धं महारथः ।
स बाणयुद्धं कुर्वाणो भर्त्सयामास चेदिराट् ।
दमघोषसुतो धृष्टमुवाच यदुनन्दनम् ।
अद्य कृष्णमकृष्णं तु कुर्वन्तु मम सायकाः ।
इत्येवमुक्त्वा दुष्टात्मा शरवर्षं जनार्दने ।
मुमोच पुरुषव्याघ्रो घोरमास्थाय तद्वपुः ।
शरसंकृत्तगात्रस्तु क्षणेन यदुनन्दनः ।
रुधिरं परिसुस्राव सोऽतीव पुरुषोत्तमः ।
न यन्ता न रथो वापि न चाश्वाः पर्वतोपमाः ।
दृश्यन्ते शरसंछन्ना आविग्नमभवज्जगत् ।
केशवं तदवस्थं तु दृष्ट्वा भूतानि चुक्रुशुः ।
दारुकस्तु तदा प्राह केशवं परवीरहा ।
नेदृशो दृष्टपूर्वो हि संग्रामो यादृशो मया ।
स्थातव्यमिति तिष्ठामि त्वत्प्रभावेण माधव ।
अन्यथा न च मे प्राणा धारयेयुर्जनार्दन ।

— (L. 153) $M_1$ युयुधाते (for शुशुभाते). — (L. 155) $G_4$ $M_1$ अदृष्ट° (for न दृष्ट°). — (L. 157) $T_1$ $G_2$ पंचभिर्युद्धदुर्मदं (for the post. half). — (L. 158) $T_1$ $G_2$ सुनीथं. $T_1$ आर्दयद्; $G_2$ दारयन्; $G_3$ दर्शयन् (for अर्दयद्). — (L. 159) $G_2$ विद्धस्तु (for ऽतिविद्धः). — (L. 161) $G_5$ (before corr.) बाणैर् (for विद्ध्वा). $M_1$ पुनः (for नृपः). — (L. 163) $G_{2.6}$ महागजौ (for गजोत्तमौ). — (L. 164) $T_1$ $G_{2.3.5.6}$ दंष्ट्रैरिव च; $G_4$ सुदंष्ट्रैरिव (for दंष्ट्राभिरिव). $G_4$ $M_1$ कंटकैर्; $G_3$ कर्ण° (for तुण्ड°). — (L. 167) $G_{2.6}$ पुरुषोत्तमौ. — (L. 168) $G_2$ अनु- (for अति-). — For lines 169–170, $G_6$ subst.:

आग्नेयमसृजच्चैद्यो वारुणेनारुधद्धरिः ।

— For lines 171–174, $G_6$ subst.:

कौबेरेणैव कौबेरं याम्यं याम्येन वै हरिः ।

— (L. 172) $G_4$ $M_1$ (*sup. lin.*) नाशयच्च. — (L. 173) $G_2$ °चोदितः (for °मोहितः). — (L. 174) $T_1$ $G_{2.3.5}$ विनाशयत्. — (L. 175) $G_3$ तु; $G_4$ [ए]व (for the first च). $G_{2.4}$ मानवेन च मानवं. — (L. 177) $T_1$ $G_5$ वैष्णवं वैष्णवेन च. — (L. 178) $G_3$ om. (hapl.) from णौ युयु° to विकुर्वा in line 179. — (L. 179) $T_1$ मदघोषसुतो. — (L. 180) $G_4$ तं (for तद्). $M_1$ °सायकम्. — (L. 181) $G_2$ परश्वधमुसंठीनां; $G_3$ °श्वधः सुपर्णश्च; $G_4$ °श्वधमुसंठ्यश्च; $M_1$ °श्वधमुसंठीनां. — (L. 182) $G_4$ बलवान् (for भग°). $T_1$ $G_2$ नाशयामास; $G_3$ विनाशयति (for व्यनाशयत). $G_6$ $M_1$ माधवः (for केशवः). — (L. 183) Om. in $G_2$. $M_1$ महद् (for महा-), and व्यसृजच्चेदिपुंगवः (for the post. half). — (L. 184) $G_4$ ऐंद्रास्त्रे° (for वज्रास्त्रे°). — (L. 187) $T_1$ $G_{2.5}$ सर्वबाणान् (for °मायां). — (L. 188) $G_2$ अवर्धन (for महारथः). — (L. 189) $G_{2.4-6}$ $M_1$ बाणयुद्धं च कुर्वाणो. — (L. 190) $T_1$ दृष्टम्; $G_3$ हृष्टम्; $G_4$ कृष्णम् (for धृष्टम्). $G_{2.4.6}$ $M_1$ यदुपुंगवं. — (L. 194) $G_{2.4-6}$ $M_1$ यदुपुंगवः. — (L. 195) $G_2$ पुरुषोत्तम. — (L. 196) $G_{2.6}$ पवनोप($G_6$ °त्त)माः (for पर्वतो°). — (L. 197) $T_1$ शरसंछन्नां; $G_2$ °संछिन्नम्; $G_3$ °संछिन्ना. — (L. 198) $G_6$ भ्रांतानि (for भूतानि). — (L. 199) $T_1$ $G_{3.5}$ परवीरहन्; $G_4$ °वीरह. — (L. 200) $G_{2.4}$ [ऽ]यं (for हि). — (L. 201) $G_{2.4}$ -प्रसादेन (for -प्रभावेण). — (L. 202) $G_2$ अथ वा (for

इति संचिन्त्य गोविन्द क्षिप्रमेव वधं कुरु ।
वैशंपायनः ।
एवमुक्तस्तु सूनेन केशवो वाक्यमब्रवीत् ।
एष ज्ञातिबलो दैत्यो हिरण्यकशिपुः पुरा ।
रिपुः सुराणां दैत्येन्द्रो वरदानेन गर्वितः ।
अथासीद्रावणो नाम राक्षसेन्द्रोऽतिवीर्यवान् ।
तेनैव बलवीर्येण बलं नागणयन्मम ।
अहं मृत्युश्च भविता काले काले दुरात्मनः ।
न भेतव्यं त्वया सूत नैष कश्चिन्मयि स्थिते ।
इत्येवमुक्त्वा भगवान्ननर्द गरुडध्वजः ।
पाञ्चजन्यं महाशङ्खं पूरयामास केशवः ।
संमोहयित्वा भगवांश्चक्रं दिव्यं समाददे ।
चिच्छेद च सुनीथस्य शिरश्चक्रेण संयुगे ।

29

After the addl. colophon following 2. 42. 31, S ins.:

वैशंपायनः ।
ततः प्रववृते यज्ञो धर्मराजस्य धीमतः ।
शान्तविघ्नार्हणक्षोभो महर्षिगणसंकुलः ।
तस्मिन्यज्ञे प्रवृत्ते तु वाग्विदो हेतुवादिनः ।
हेतुवादान्बहून्प्राहुः परस्परजिगीषवः ।
ददृशुस्तं नृपतयो यज्ञस्य विधिमुत्तमम् ।
उपेन्द्रस्येव विहितं सहदेवेन भारत ।
ददृशुस्तोरणान्यत्र हेमतालमयानि च ।
दीप्तभास्करतुल्यानि प्रदीप्तानीव तेजसा ।
स यज्ञस्तोरणैस्तैश्च ग्रहैर्द्यौरिव संबभौ ।
शय्यासनविहारांश्च सुबहून्वित्तसंभृतान् ।
घटान्पात्रीः कटाहानि कलशानि समन्ततः ।
न ते किंचिदसौवर्णमपश्यंस्तत्र पार्थिवाः ।
तद्यज्ञे न्यवसन्राजन्ब्राह्मणा भृशसत्कृताः ।
कथयन्तः कथा बह्वीः पश्यन्तो नटनर्तकान् ।
भुञ्जतां चैव विप्राणां स्वादु भोज्यं पृथग्विधम् ।
अनिशं श्रूयते तत्र मुदितानां महास्वनः ।
दीयतां दीयतामेषां भुज्यतां भुज्यतामिति ।
एवंप्रकाराः संजल्पाः श्रूयन्ते स्मात्र नित्यशः ।
ओदनानां विकाराणि स्वादूनि विविधानि च ।
सुबहूनि च भक्ष्याणि पेयानि मधुराणि च ।
ददुर्द्विजानां सततं राजप्रेष्या महाध्वरे ।
पूर्णे शतसहस्रे तु विप्राणां भुञ्जतां तदा ।
स्थापिता तत्र संज्ञाभूच्छङ्खोऽध्मायत नित्यशः ।
मुहुर्मुहुः प्रणादस्तु तस्य शङ्खस्य भारत ।
उत्तमं शङ्खशब्दं तं श्रुत्वा विस्मयमागताः ।
एवं प्रवृत्ते यज्ञे तु तुष्टपुष्टजनायुते ।

अन्यथा). — (L. 205) G6 भवेत् (for पुरा). — (L. 206) G2 दैत्यारिर् (for दैत्येन्द्रो). M1 मोहितः (for गर्वितः). — (L. 207) T1 G2.4.6 M1 रक्षेंद्रो ह्येष (G6 °प्येव) वीर्यवान्; G3 राक्षसोतीव वी°. — (L. 209) G2.6 अ(G6 त)स्याहं मृत्युर्भविता; M1 अहमस्य मृत्युर्भविता (hypermetric!). — After line 209, G6 ins.:

पुरातनबलार्त्तबले (sic) मन्तव्य एष सः ।

— (L. 210) G6 क्षिप्रं (for सूत). — (L. 211) T1 M1 ननाद; G6 ननर्त (for ननर्द). — (L. 213) M1 ततश्चक्रं (for चक्रं दिव्यं).

29

(L. 1) G3–5 ततः प्रवृत्तो (G3 °द्धो) यज्ञोथ (G4 °ज्ञो वै). — G6 om. lines 3–5. — (L. 3) G2 वागीशा (for वाग्विदो). — (L. 6) G2 उपेंद्रस्यैव; G3.5 °बुध्या. G6 विहितः. — After line 6, the sequence of the lines in T1 G2 is: 13–18, 11–12, 7–10, repetition of lines 15–16 (with v.l.), 19–21, 29–30, 22–28. These transpositions are ignored in the following notes. — (L. 7) M1 हेमजाल° (for °ताल°). — (L. 8) G4 °माल्यानि; M1 °वर्णानि (for °तुल्यानि). T1 G2–6 प्रदीप्तानिव. — (L. 9) G6 तत्र (for तैश्च), and इंद्रचापैर्यथा नभः (for the post. half). — After line 9, G4 ins. (cf. line 64):

तालानां तोरणैर्हैमैर्दन्तैरिव दिशागजैः ।

— (L. 10) T1 आत्मसंवृतान्; G2 यज्ञसंभृतान्; G3 वित्तसंचयान्; G4.6 अन्य(G6 °स्य)संभृतान्; M1 यज्ञसंभवान् (for वित्तसंभृतान्). — (L. 11) G4 कटान् (for घटान्). M1 कलशांश्च (for कलशानि). — Lines 13–18 = (var.) 2. 30. 48–50. — (L. 13) G4 सहदेवेन सत्कृताः; G5 ब्राह्मणा भृशकल्पिताः. — (L. 14) G3.4 कथां वह्नीं. — (L. 15) T1 पूजितश्चैव; G2.6 M1 पूजितानां च; T1 G2.5.6 साधु भोज्यं (T1 °ज्यः; G6 °ज्य-); M1 स्वादुभोज्यैः (for स्वादु भोज्यं). T1 पृथग्विधः; G6 °ग्विधाः. — (L. 17) G5 तेषां (for एषां). G2 भुंजतां भुंजतामिति. — (L. 18) G4 श्रूयते वात्र नित्यशः. — (L. 19) Om. in T1 G2. G6 M1 च बहूनि (for विविधानि). — (L. 20) T1 G2 भोजनानि; G6 M1 विविधानि (for सुबहूनि). — (L. 23) G4 स्थापितास्तत्र संज्ञार्थं. G2.6 ध्मायति; G3.4 ध्म(G4 ध्मा)येत (for ऽध्मायत). — (L. 24) Om. in G6. G5 प्रणदतः (for प्रणादस्तु). — (L. 25) T1 G3–5 उत्तमं तत्र शब्दं तत्; G2 उत्तमं श्रूयते शब्दं (for the prior half). G2 आगमन्; G1.6 आगतः (for आगताः). — (L. 26) G2.3

